अजमृग इति मेषश्च भवति। तौलीति तुलाधरः। चन्द्रभवनमिति सूर्यः। मासि मासि चन्द्रः सूर्ये एव लयं प्राप्य पश्चादुदेति। तस्मात् सूर्य एव चन्द्रभवनम्। चत्वारिंशांशः मेषात् तुलाधराच्च भवतीत्यर्थः। द्विधा-उक्तत्वात् अयुजिसमभे इति च लब्धम्। विष्ण्वादिदेवताकाः सूर्यादि-देवताकाश्च भवन्ति। उक्तं च पराशरहोरायाम्—

"चत्वारिंशति भागानामधिपा विषमे क्रमात्।
विष्णुश्चन्द्रो मरीचिश्च त्वष्टा धाता शिवो रविः॥
यमो यक्षेशगन्धर्वौ कालो वरुण एव च।
समभे तुलतो ज्ञेयाः स्वस्वाधिपसमन्विताः॥" इति।

नवांशकविधिः। नव इति चत्वारिंशत्। चत्वारिंशत्कलात्मकपञ्च-चत्वारिंशांशग्राहको नवशब्दः। स च अंशः अजमृगतौलिचन्द्रभवना-दिर्भवति। अज इति मेषः। मृगतौली तोलनत्वं वाहनत्वव्यञ्जकम्। मृगरूपवाहनमित्यर्थः। देवीवाहनत्वात्सिंहः। चन्द्रभवनम् आकाशः आका-शरूपस्य गुरोः क्षेत्रमिष्यते। मेषसिंहसाहचर्याद्धनुर्भवति। त्रिधोक्तत्वा-च्चरादिगृहेष्वित्यभिप्रेतम्। अतः पञ्चचत्वारिंशांशाः चरादिषु मेषाद्याः भवन्तीत्यर्थः। पुनः अजः ब्रह्मा। मृगतौली मृगः तौली वाहनं यस्य सः वृषवाहनः शिवः। चन्द्रभवनं चन्द्र इति चन्द्रा इत्यस्योपलक्षणम्। चन्द्रा महालक्ष्मीः।

"चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह" इति श्रीसूक्तम्।

"चन्द्रां चन्द्रसहोदरीम्" इति लक्ष्म्यष्टोत्तरशतनामावलिः। चन्द्र-भवनं श्रीनिकेतनं विष्णुः। अतश्चरराशिषु पञ्चचत्वारिंशांशाः मेषाद्याः ब्रह्मेशविष्णुदेवताकाः भवन्ति। स्थिरराशिषु सिंहाद्याः ईशविष्णुब्रह्मदैवत्याः

भवन्ति । उभयराशिषु धनुराद्याः विष्णुब्रह्मेशदैवत्याश्च भवन्तीत्यर्थः । तथा च पराशरः—

" तथाक्षवेदभागानामधिपाश्चरभे क्रियात् ।
स्थिरे सिंहाद्विस्वभावे चापे ब्रह्मेशकेशवाः ।
ईशाच्युतसुरज्येष्ठा विष्णुकेशाश्चरादिषु ॥ " इति ।

भवनसमांशकाधिपतयः । भं नक्षत्रं सप्तविंशांश इत्यर्थः । वनं जलम् । जलशब्देन सप्तजलधयो गृह्यन्ते । अतः सप्तांश इत्यर्थः । अनेनैव सप्तांशस्य सप्तजलधयो देवताः इत्यपि सिद्धम् । अत एवोक्तं पराशरहोरायाम्—

" सप्तांशपास्त्वोजगृहे गणनीया निजांशतः ।
युग्मराशौ तु विज्ञेयाः सप्तमर्क्षादिनायकात् ।
क्षारक्षीरौ च दध्याज्यौ तथेक्षुरससंभवः ।
मद्यशुद्धजलावेते समे शुद्धजलादिकाः ॥ " इति ।

भवनसमांशकाधिपतयः । भस्य राशेः वनसमांशकाधिपतयः सप्तमांशपाः । स्वगृहात् गृहं अत्ति भुङ्क्ते इति गृहात् ग्रह इत्यर्थः । स्वस्मात् ग्रहात् सप्तमाच्च भवतीत्यर्थः । द्विधोक्तत्वात् पूर्वोक्तप्रकारेण ओजे स्वस्मात् युग्मे सप्तमाच्च इति सिद्धम् । ओजयुग्मविधानसामर्थ्यात् सप्तसागरा अपि युग्मे व्यत्ययेन भवन्तीति लब्धम् । समाः वर्षाः समांशकाः षष्ट्यंशाः । अधि इति अक्षरसंख्यया नवतिः । भनवतिकलात्मकविंशांशः अधिशब्देन सूचितः । एते सप्तविंशांशसप्तांशषष्ट्यंशविंशांशकाः एतेषां पतयः भवनसमांशकाधिपतयः क्षितिजादयः भवन्ति । भगणस्थाः सर्वेंऽशाः द्वित्र्यादिपरिवृत्तिभिः मेषादितः गणनीया इत्यर्थः । अत्र सप्तविंशांशानां भ इति प्रयोगसामर्थ्यादेव अश्वयादिदेवताकत्वं व्यञ्जितम् । षष्ट्यंशानां तु " क्रूर-

सौम्या "दिविभागेन "घोरश्च राक्षसो देव" इत्यादिना ग्रन्थान्तरेषु देवता उक्ताः। एतयोः ऋक्षांशषष्ट्यंशयोर्न कुत्रापि मेषादित्वमुक्तम्। उद्धृतवचनेन सप्तांशस्य, पराशरोक्तेन—

"अथ विंशविभागानामधिपा ब्रह्मणोदिताः।
क्रियाच्चरे स्थिरे चापान्मृगेन्द्राद्द्विस्वभावके॥
काली गौरी जया लक्ष्मीर्विजया विमला सती।
तारा ज्वालामुखी श्वेता ललिता बगलामुखी॥
प्रत्यङ्गिरा शची रौद्री भवानी वरदा जया।
त्रिपुरा सुमुखी चेति विषमे परिचिन्तयेत्॥
समराशौ दया मेधा छिन्नशीर्षा पिशाचिनी।
धूमावती च मातङ्गी बाला भद्राऽरुणाऽनला॥
पिङ्गला च्छुच्छुखा घोरा वाराही वैष्णवी सिता।
भुवनेशी भैरवी च मङ्गला ह्यपराजिता॥"

इति वचनेन विंशांशस्य चैव भगणस्थसर्वांशकानां मेषादित्वं संभवति इति चेदुच्यते। ऋक्षांशषष्ट्यंशानां राश्यंशकाभावान्न कापि क्षतिः।

पाणिनीयव्याकरणे "नाज्झलौ"इति सूत्रस्य आकारसहितः अच् आच्। आच् च हल् च आज्झलौ। एतौ आज्झलौ न सवर्णौ स्त इति व्याख्ययाऽपि ईकारशकारयोः ऋकारषकारयोश्च प्राप्ता सवर्णसंज्ञा न निषिध्यते। अपण्डितोऽपि जानाति तत्रस्थसावर्ण्याभावम्। सावर्ण्यनिषेध-प्रकारोऽपि दर्शितः कात्यायनपतञ्जलिभ्यां पूर्वमेव। यथा 'प्रत्याहारेष्वितां न ग्रहणम्'इति प्रदर्शयितुं

"आचारादप्रधानत्वाल्लोपश्च बलवत्तरः।"

इति हेतूनुक्त्वा पाणिनिसूत्रेणैव समर्थयति—

"ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत् ।
अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥"

इति । अत्र "ऊकालोज्झस्वदीर्घप्लुतः" इति सूत्रे ऊकालोऽच् इति योगविभागेन ऊकालान्यतमवत्त्वं अचो लक्षणत्वेन विहितं भवति । इतां व्यञ्जनत्वादर्धमात्रात्मकत्वात्, अत एव ऊकालान्यतमवत्वाभावेन अच्त्वं न सिद्ध्यति । अच्प्रत्याहारेऽपि णकारककारङकाराणामितां न ग्रहणम् । तस्मादितरेषामितामपि प्रत्याहारेषु न ग्रहणम् । एवमेव ईकारशकारयोः ऋकारषकारयोः ऌकारसकारयोरपि मिथः सावर्ण्यं निषेद्धुं शक्यम् । यथा अच् च हल् च अज्झलौ । तौ न, न सवर्णौ स्तः, इति । अत्र अच् "ऊकालोऽच्" इति योगविभागलब्धा संज्ञा । ततः ऊकालान्यतमवत्वात् दीर्घाः स्वरा अपि अचो भवन्ति । अनेन दीर्घस्वराणां व्यञ्जनानामपि सावर्ण्यं निषेधितम् । तस्मात् ईकारशकारौ ऋकारषकारौ ऌकारसकारौ आकारहकारौ च न सवर्णतां प्राप्नुवन्ति । एतत्सुकरोपायमन्यत्र दर्शयन्नपि नोक्तवानत्र भगवान् पतञ्जलिः । तत्र ईकारादीनां शकारादीनां चाऽसिद्धं सावर्ण्यं शास्त्रमर्यादयाऽङ्गीकृत्य का क्षतिरनेनेति पृच्छति । अणुदित्त्वाभावात् ईकारादयः शकारादयो वा न सवर्णग्राहकाः । अतो व्याकरणशास्त्रस्य न किञ्चिदपि न्यूनत्वम् । एतन्मार्गप्रतिष्ठापनार्थमेवैवं सिद्धान्तितवान् भाष्यकारः । एतत्सरणिमनुसृत्य ऋक्षांशानां षष्ट्यंशानां चाऽसिद्धमेषादित्ववचनेऽपि न दोषः । एतेषां मेषादिस्थित्या फलोक्त्यभावात् ।

भवनसमांशकाधिपतयः । भस्य राशेः वनं जलं चत्वार्यपि भवति तुरीयांश इत्यर्थः । तुरीयांशाधिपतयः स्वगृहात् स्वात् । गृहात् चतुर्थात् । क्रमशः भवन्ति । स्वचतुर्थ इति विधानसामर्थ्यात् केन्द्राधिपतय इत्यर्थः । भवनसमांशकाधिपतयः भवनं चत्वारः समाः अब्दाः चतुरब्दपूर्णाः कुमाराः

सनकसनन्दनसनत्कुमारसनातनाः अंशकाधिपतयः येषां ते भवनसमांश-काधिपतयः। कुमाराः केन्द्रेशाश्च तुर्यांशस्याधिपा इति भावः। उक्तं च पराशरेण—

"स्वर्क्षादिकेन्द्रपतयस्तुर्यांशेशाः क्रियादयः।
सनकश्च सनन्दश्च कुमारश्च सनातनः" ॥ इति।

भवनसमांशकाधिपतयः। भस्य वन सम तत्सम वनवनेत्यर्थः वन-वनांशाधिपतयः षोडशांशेशाः। अथवा 'वनसम' इत्यक्षरसङ्ख्यया चत्वारि शून्यं सप्त पञ्च च भवति। सङ्कलनेन षोडश, अतः षोडशांशो गृह्यते। तत्पतयः षोडशांशेशाः। अजमृगतौलिचन्द्रभवनादिनवांशविधिं अनुसरन्तीति शेषः। अज इति ब्रह्मा, अजमृग इति सिंहरूपी विष्णुः, चन्द्रभवनम् इति अक्षरचन्द्रकलाधरत्वात् शिवः, आदिरिति त्रिमूर्तिस्वरूपतया अस्मिन् शास्त्रे परब्रह्मत्वेन प्रतिपादितः सूर्यः। अजविष्णुहरसूर्यनाथकनवांशविधिं त्रिमूर्तिपरब्रह्मदेवताक-अकारोकारमकारार्धमात्रात्मक(प्र)णवविधिं अनुसरन्ति। 'क्षितिजे' त्यादयश्च क्रमेण भवन्ति। तथा च पराशरः—

"अजसिंहाश्वितो ज्ञेया नृपांशाः क्रमशः सदा।
अजविष्णुहराः सूर्यो ह्योजे युग्मे विपर्ययः ॥" इति।

(भ)वनांशाधिपाः नवांशविधिमनुसरन्तीत्येतेन वननवाभ्यां युग्म-राशिव्यत्ययाधिपत्यं व्यञ्जितम्। अजमृगतौलीत्यत्र पूर्वं चत्वारिंशांश-निरूपणावसरे उक्तप्रकारेण चरादिषु मेषसिंहाश्व्यादित्वं च लब्धम्। विंशांशेषु च अज इति "अजामेकां लोहितशुक्लकृष्णाम्" इत्युक्त-अजा। मृगतौलीति सिंहवाहनत्वम्। चन्द्रभवनमिति चन्द्रकलाधरत्वम्। अनेन दुर्गादेवी विंशांशानां देवतेत्यर्थः। अतस्तस्याश्चत्वारिंशन्मूर्तयः ओजयुग्मेषु देवता भवन्ति।

अनेन राशितुर्यांशसप्तांशनवांशद्वादशांशषोडशांशविंशांशसप्तविंशांश-चत्वारिंशांशपञ्चचत्वारिंशांशषष्ट्यंशात्मकैकादशवर्गा व्याख्याताः ।

राहुकेत्वोरपि स्वक्षेत्रमुक्तमनेन श्लोकेन । कन्याराशिपः सौम्यः उपरागकर्तृत्वसम्बन्धतया सोमसम्बन्धित्वात् सौम्यः राहुः । वक्ष्यमाणहेतुना केतुश्च गुरुः स च मीनाधिपः । चापाधिपस्तु सुरगुरुः बृहस्पतिरेव । अनेन कन्या राहोः मीनः केतोश्च स्वक्षेत्रे भवतः ।

आवनिज इत्यपि च्छेदः । अवनिजा भूच्छाया तत्सम्बन्धी आवनिजो राहुः । आचार्येण सूर्यचन्द्रग्रहणविचारणावसरे पुराणकथाया गणितशास्त्रोक्तहेतोश्च मिथो विरोधपरिहारार्थं राहोर्भूच्छायाप्रवेशकत्वं हेतुतया प्रदर्शितम् ।

अतः आवनिजः राहुः वृश्चिकाधिपः । सौरिरिति निर्देशात् कुम्भस्यापि केतुरधिपो भवति । केतुरपि च्छायात्वात् सूर्यज एव ।

गृहांशकपाः गृहपाः अंशपाः कपाश्च भवन्ति । कं जलं पिबन्ति इति कपाः सूर्याः । अनेन द्वादश राशयः द्वादशादित्याः अथवा द्वादशादित्यदैवत्या इति सूचितम् । अथवा कं ब्रह्माणं पान्ति रक्षन्ति इति कपाः, विष्णोः केशवादिद्वादशमूर्तयः । केशवादयः मेषादीनां देवता इति भावः । "भवनसमांशकाधिपतयः" इत्युक्त्या एतद्द्वादशांशविचारेऽपि योज्यम् ।

अत्र 'क्षितिजे'त्यष्ट एकपदेन समस्यन्ते । 'सुरगुर्वि'त्युत्तरपदेन । एते क्षितिजादयः सुरगुर्वादयश्च मेषादीनामश्वयादीनां च नाथा भवन्ति । मेषाश्विप्रथमो हि कालचक्रक्रमः । अतः क्षितिजादयो गृहपाः अंशकपाः द्वादशांशपाः सव्यापसव्यचक्रस्थराशिपाश्च भवन्ति ।

क्षितिजादयः कालचक्रदशानाथाश्च भवन्ति । अजमृगेत्यादिना कालचक्रदशापहारः सूचितः । अष्टोत्तरशतचक्रांशेषु प्रथममेषांशस्य अजादि-

नवराशिपाः दशापहर्तारः। वृषांशस्य मृगादिनवराशिपाः दशापहर्तारः। मिथुनांशस्य मृगशब्दावृत्त्या मृगतौल्यादिनवराशिपाः दशापहर्तारः। अत्र मृगतौलिशब्देन मृगत्वात् शिववाहनत्वाच्च वृषो गृह्यते। अतो मिथुनांशस्य वृषादिनवराशिपाः दशापहर्तारः। कर्क्यंशस्य चन्द्रभवनादिनवराशिपाः दशापहर्तारः। पुनः सिंहांशस्य अपसव्यमार्गेण वृश्चिकादिनवराशिपाः दशापहर्तारः। कन्यायाः कुम्भादिनवराशिपाः दशापहर्तारः। तुलांशस्य तुलादिनवराशिपाः दशापहर्तारः। वृश्चिकस्य सिंहादिनवराशिपाः दशापहर्तार इत्यप्युक्तसव्यक्रमकथनेनोह्यम्। पुनः धनुरंशस्य अजादिनवराशिपाः दशापहर्तार इत्यादि। एवं सव्यनक्षत्रत्रिकाणां भवति।

अजमृगतौलिचन्द्रभवनादिनवांशकविधिरिति कालचक्रदशापहारविषये मण्डूकगमनं सिंहावलोकनं च सूचिते। अजमृगौ अ इति शून्यम्। अथवा भगणपूर्णत्वम्। अनेन मीनो गृह्यते। ज इत्यष्ट वृश्चिकस्योपलक्षणम्। मीनाद्वृश्चिकगतिरित्यर्थः। मृग इति पञ्चमात्तृतीयगतिर्भवति। मृ इति पञ्चमः ग इति तृतीयः। सिंहान्मिथुनगतिरित्यर्थः। एते गती। तौलिचन्द्रभवनाद्यौ भवतः। अन्तश्च आदिश्च आदी। सव्यान्त एव अपसव्यादिः। 'अजः' तौल्यन्तं 'मृगः' चन्द्रभवनादिश्च भवतः। अनेनैष क्रमो लब्धः। मीनो वृश्चिकः तुलाधरः कन्या कटकः सिंहः मिथुनम् इति। वृश्चिकादि चापान्ते चापादिवृश्चिकान्ते चैव मृगः इत्येष क्रमो दृश्यते। अन्यत्र न। अनेनापसव्यात् सव्यचक्रप्रवेशेऽपि चापान्मेषो भवतीत्यपि लब्धम्। एषा चक्राच्चक्रगतिरेव सिंहावलोकनं भवति। तथा चोक्तं पराशरेण —

"मीने तु वृश्चिके वाऽपि चापो मेषस्तथैव च।
सिंहावलोकनं चैव तादृशं च फलं लभेत्॥" इति।

सिंहात् मिथुनगतिः तद्वत् कन्यायाः कर्कटगतिश्च मण्डूकगती भवतः।

उक्तं च पराशरेण—

कन्यायां कर्कटे चापि सिंहभे मिथुनेऽपि च ।
मण्डूकगतिसंज्ञो वै तादृशं रोगकारणम् ॥" इति ।

एवं दशापहारपरिवृत्तिरेवं भवति । मेषादि नव, मकरादिमीनान्तं वृश्चिकः तुला कन्या कर्कटः सिंहः मिथुनं इति नव, वृषभादिचापान्तं मेषादिमिथुनान्तं इति नव, कटकादिमीनान्तं नव, पुनः अपसव्यक्रमेण वृश्चिकः तुलाधरः कन्या कर्कटः सिंहः मिथुनादिमीनान्तम् इति नव, कुम्भादिचापान्तं मेषादिकन्यान्तम् इति नव, तुलादिमीनान्तं वृश्चिकादिकन्यान्तम् इति नव, कर्कटः सिंहः मिथुनादिचापान्तम् इति नव, पुनः मेषादयो नव इत्यादि यथाक्रममश्विन्यादिसव्यर्क्षपादानां दशापहर्तृक्रमो भवति ।

एतासु दशासु प्रथमदशा देहदशा, नवमी जीवदशा । उत्तरत्र "क्रियतावुरु" इति श्लोकव्याख्याने देहजीवौ वक्ष्येते । अत्र सव्यनक्षत्राणाम् अश्विपुनर्वस्वादिनक्षत्रत्रिकाणां दशाक्रमः सूचितः । अपसव्यनक्षत्राणां चानेनैव क्रमेण चापादिवृश्चिकान्तं मीनादिमेषान्तं च गणनीयम् । यथा रोहिण्यादिनक्षत्रत्रिकात्मकद्वादशनवांशस्य सव्यक्रमेण चापादिमिथुनान्तं सिंहः कर्कट इति नव, कन्यादिवृश्चिकान्तं मीनादितुलान्तम् इति नव, कन्यादिमेषान्तं चापादिकुम्भान्तम् इति नव इत्यादि । अत्र चापादिवृश्चिकान्तं मीनादिमेषान्तं चापादिवृश्चिकान्तं च गणनमपसव्यप्रथमनक्षत्रस्य भवति । द्वितीयस्य, मेषादिमीनान्तस्य मीनादिमेषान्तस्य च प्राधान्येन तृतीयस्य च मीनादिमेषान्तं, चापादिवृश्चिकान्तं, मीनादिमेषान्तं च गणनम् । एवं अश्विकृत्तिकापुनर्वस्वाश्लेषहस्तस्वातीमूलोत्तराषाढपूर्वभाद्रपदरेवत्यात्मकदशताराणां मेषादिमीनान्तवृश्चिकादिचापान्तमेषादि-

मीनान्तगणनं कर्तव्यम् । भरणीपुष्यचित्रापूर्वाषाढोत्तरभाद्रपदात्मकपञ्चनक्षत्राणां वृश्चिकादिचापान्तं, मेषादिमीनान्तं वृश्चिकादिचापान्तं गणनीयम् । रोहिणीमघवैशाखश्रवणात्मकनक्षत्रचतुष्टयस्य चापादिवृश्चिकान्तं मीनादिमेषान्तं चापादिवृश्चिकान्तं च गणनीयम्, मृगशीर्षार्द्रापूर्वफल्गुन्युत्तरफल्गुन्यनूराधाज्येष्ठाश्रविष्ठाशतभिषगात्मकाष्टनक्षत्राणां मीनादिमेषान्तं चापादिवृश्चिकान्तं मीनादिमेषान्तं च गणनीयमिति फलितार्थः । एतद्विस्तरत उक्तं पराशरेण ।

वृत्तं हरिप्लुतमिति मे मतिः । नर्कुटात् कोकिलाच्च यतिभेदात् भिन्नम् । हरिरिति सिंहः मण्डूकः मर्कटश्च । अनेन सिंहावलोकनमण्डूकगतिमर्कटगतयो व्यज्यन्ते । एतद्वृत्तं वसुजलपाण्डवयतियुतम् । अतः

"वसुजलपाण्डवैश्च कथयस्व हरिप्लुतकम् ।"

इति लक्षणं स्यात् । नर्कुटककोकिलवृत्ते तु—

"हयदशभिर्नजौ भजजला गिति नर्कुटकम् ।
मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ॥"

इति लक्ष्येते । वसुजलपाण्डवैरपि सिंहावलोकनमण्डूकप्लुतिमर्कटगतयः उदाहृताः । यथा वसुरित्यष्टौ । अनेन मीनादष्टमराशिप्लवनात्मकं सिंहावलोकनमुदाहृतम् । जलमिति चत्वारि । अनेन कन्यायाश्चतुर्थराशिप्लवनात्मकं मण्डूकगमनमुदाहृतम् । पाण्डव इति पञ्च । अनेन कर्कटात्पृष्ठतो गत्या पञ्चमराशिगमनात्मकं मर्कटगमनमुदाहृतम् । 'क्षितिज' इत्यष्टानां समासेन 'सुरगुरु' इति चतुर्णां समासेन चोभयत्रापि सूर्यचन्द्रवर्जं ग्रहाणां पुनः पाठेन पुनरागमनाभिधः कालचक्रदशापहारक्रमविशेषः सूचितः । उक्तं च जातकपारिजाते—

“ कालचक्रगतिस्त्रेधा निश्चिता पूर्वसूरिभिः ।
मण्डूकगमनं चैव पृष्ठतो गमनं तथा ॥
सिंहावलोकनं नाम पुनरागमनं भवेत् ।
पृष्ठतो गमनं चैव कर्किकेसरिणोरपि ॥ ” इति ।

‘ क्षितिजसितज्ञचन्द्र ’ इत्यनन्तरं यतिः । एवं द्वादश राशयस्त्रेधा विभक्ताः । अतो मेषादिराशिचतुष्टयं सृष्टिखण्डः, सिंहादिराशिचतुष्टयं स्थितिखण्डः, चापादिराशिचतुष्टयं प्रलयखण्ड इत्यपि सूचितम् ॥ ६ ॥

अथ त्रिंशांशान्निरूपयति—

**कुजरविजगुरुज्ञशुक्रभागाः**
**पवनसमीरणकौर्पिजूकलेयाः ।**
**अयुजि युजि तु भे विपर्ययस्थाः**
**शशिभवमालिझषान्तमृक्षसन्धिः ॥ ७ ॥**

इति । अयुजि भे विषमराशौ । पवनसमीरणकौर्पिजूकलेयाः, पवनः पञ्च समीरणः पञ्च कौर्पिः अष्टौ जूकः सप्त लेयः पञ्च भागाश्च आहत्य त्रिंशद्भागाः । अतस्त्रिंशांश इति संज्ञा । एते कुजरविजगुरुज्ञशुक्रभागाः कुजशनिगुरुबुधशुक्राणां यथाक्रमं भागा भवन्ति । विषमराशिषु मेषमिथुनसिंहतुलाधनुःकुम्भराशिषु आदौ पञ्च भागाः कुजस्य । ततः पञ्च शनेः । ततः अष्टौ गुरोः । ततः सप्त बुधस्य । ततः पञ्च शुक्रस्य । युजि भे तु समराशिषु मेषादिव्यतिरिक्तवृषकर्क्याादिराशिषु । विपर्ययस्था विपरीताः भवन्ति । समराशिषु आदौ पञ्चभागाः शुक्रस्य । ततः सप्त बुधस्य । ततः अष्ट गुरोः । ततः पञ्च शनेः । ततः पञ्च कुजस्य ।

शशिभवनालिझषान्तं कटकवृश्चिकमीनराशीनामन्त्यभागाः ऋक्षसन्धिः ऋक्षसन्धिसंज्ञका भवन्ति। ऋक्षशब्देन राशिर्नक्षत्रं च गृह्येते। राशिनक्षत्रयोर्युगपच्छेदहेतुर्व्यञ्जितः। अत एव भसन्धिरित्यपि संज्ञा। न तु राशिसन्धिर्भवनसन्धिर्वा।

ऋक्षसन्धिः ऋक्षप्रमाणेन सन्धिः ऋक्षसन्धिः। अक्षरसङ्ख्यया ऋक्ष इति षष्टिः। षष्टिविनाडीप्रमाणं ऋक्षसन्धिः। अतः अन्त्यभागषट्कमेषां राशीनां ऋक्षसन्धिरिति व्यवह्रियते। अथवा ऋचां षः ऋक्षः ऋक् इति भागः ष इति षट्। षड्भागा एतेषां राशीनामन्त्ये ऋक्षसन्धिरिति व्यवह्रियन्ते। अत एव मीनान्त्यभागषट्कस्य मीनमेषयोः सन्धिरिति संज्ञयाऽस्य सन्ध्यंशस्य पूर्वभागत्रयस्य मीनवत्फलदत्वम्। अन्त्यभागत्रयस्य मेषवत्फलदत्वम्। एवं कर्किवृश्चिकयोरपि चिन्त्यम्।

एवं शशिभवनालिझषान्तस्य ऋक्षसन्धिः भसन्धिरिति द्वे संज्ञे। किन्त्वलिझषान्तयोः चक्रसन्धिरिति संज्ञान्तरमपि दृश्यते। व्यञ्जिता चैषा संज्ञा आचार्येण 'कालाङ्गानी'ति श्लोके।

"मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयः।"

इत्यनेन। तयोर्मेषप्रथमचक्रस्याऽश्विप्रथमचक्रस्य चान्त्यत्वात्।

शशिभवनालिझषान्तमृक्षसन्धिः। शशिभवनान्तराशिचतुष्टयस्य अल्यन्तराशिचतुष्टयस्य झषान्तराशिचतुष्टयस्य च ऋक्षप्रमाणेन सन्धिः स्यात्। ऋक्ष इति राशिपर्यायत्वात् द्वादश। द्वादशभागात्मकः सन्धिः। कर्किवृश्चिकमीनान्तेषु षट् षड्भागाः। अतः प्रतिखण्डं पूर्वराशित्रयेषु षड् भागाः। एवं मेषस्य अन्त्यभागद्वयस्य राशिसन्धित्वं, वृषस्य अन्त्यभागद्वयस्य राशिसन्धित्वमित्यादि। सन्धिसंज्ञकभागद्वयोः पूर्वस्य राशिवत्फलदत्वम् अन्त्यभागस्योत्तरराशिवत् फलदत्वं चेत्यर्थः।

'पवनसमीरण' इत्यनेन स्थानावकाशः सूचितः । भोजनशयनमैथुनादिचिन्तायां तत्तत्कारकस्य त्रिंशांशस्थितिवशात्स्थानावकाशश्चिन्त्यः । यथा गुरुत्रिंशांशस्थकारकग्रहेणाऽवकाशबाहुल्यं वाच्यमित्यादि । तथा च कृष्णीये—

" गृहभागेष्ववकाशो भोजनविधिशयनमैथुनानि तथा ।" इति ।

वृत्तं पुष्पिताग्रा ।

'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति लक्षणात् । अतः पुष्पिताग्रत्वं व्यञ्जितम् । शशिभवनान्तादपि गरीयः अत्यन्तम् । तस्मादपि मीनान्तमिति सिद्ध्यति । एतन्न्याय्यमेव । शशिभवनान्तं सर्गस्थितिखण्डयोः सन्धिः । वृश्चिकान्तं स्थितिसंहारयोः । मीनान्तं संहारसृष्ट्योः । अतः खण्डान्तमेव गण्डान्तमभवत्किल ।

अन्तशब्देन अशुभत्वं सूचितम् । इन्द्रदेवताकं छन्दः । अतः राजयोगश्च सूचितः । तथा च सारावल्याम्—

" जातो न जीवति नरो मातुरपत्यं भवेत्स कुलहन्ता ।<br>
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद्भूपः ॥" इति ।

इन्द्रदैवत्यच्छन्दस्त्वादिन्द्रदेवताकगुरुत्रिंशांशगतग्रहोऽपि राजयोगकर इत्यस्यापि ध्वनिः । उक्तं च सारावल्याम्—

'एकोऽपि विहगः कुर्यात् पञ्चमांशगतो नृपम् ।' इति ।

इन्द्रदैवत्यं छन्दः ऐन्द्रस्य आयुषः रश्मिजायुषोऽपि व्यञ्जकम् । पवनसमीरणशब्दौ आर्यसंज्ञे । कौर्पिजूकलेयशब्दा अनार्यसंज्ञाः । अतः कुजरविजयोः गुरुज्ञशुक्राणां च पवनसमीरणौ कौर्पिजूकलेयाश्च रश्मयो भवन्ति ।

5

कुजस्य पञ्च रश्मयः रविजस्य पञ्च रश्मयः । गुरुज्ञशुक्राणां 'शकुबुगुशुच-राद्या वृद्धितो वीर्यवन्तः' इति वक्ष्यमाणक्रममनुसृत्य, जूकलेयकौर्प्यंशवः सन्ति । अतो गुरोः सप्त रश्मयः । बुधस्य पञ्च । शुक्रस्य अष्ट रश्मयः । वृत्तस्य पुष्पिताग्रत्वात् परमोच्चे पूर्वरश्मिः अतिनीचे रश्मिरहितश्च ग्रहः इत्यपि सिद्धम् । इन्द्रदैवत्यच्छन्दस्त्वात् पञ्चाशदक्षरवत्वाच्च पञ्चाशद्रश्मयो ग्रहाणां राजयोगदा इत्यपि व्यज्यते ।

अस्मिन् श्लोके पञ्चाशदक्षराणि सन्ति । संयुक्ताक्षरक्षकारवर्जं पञ्चाशदक्षराणि । अतोऽनेन श्लोकेन ग्रहाणां वर्णाश्च सूचिताः । कुज इत्युक्तत्वात् कुजस्य कुः कवर्ग इत्यर्थः । अयुजि युजि तु मे अयुजि एकः युजि तु भे । भकारोऽक्षरसङ्ख्यया चत्वारः । अयुजि कुजादारभ्य युग्मराशौ चतुर्ग्रहपर्यन्तं कुजशुक्रबुधगुरुशनयो भवन्ति । एते क्रमेण कुचुटुतुपूनां वर्णानामधिपा भवन्ति । कुजस्य कवर्गः शुक्रस्य चवर्गः बुधस्य टवर्गः गुरोः तवर्गः शनेः पवर्गश्चेति लब्धम् । उक्तं च कृष्णीये—

"वर्गाः कचटतपाद्याः लोहितसितसौम्यजीवसौराणाम् ।" इति ।

पवनसमीरण इति देवतावाचकेन त्रिंशांशानां देवताः सूचिताः । कुजस्य अग्निरूपत्वात् अग्निः । शनेः वायुरूपत्वात् समीरणशब्दप्रयोगाच्च वायुः । इन्द्रदैवत्यछन्दस्त्वात् गुरोः इन्द्रः । जूक इति वणिक् कुबेरः बुधस्य भवति । शुक्रस्य जलरूपत्वात् जलदः । एवं त्रिंशांशकानां देवता अप्युक्ताः । तथा चोक्तं पराशरेण—

"त्रिंशांशेशाश्च विषमे कुजार्कीज्यज्ञभार्गवाः ।
पञ्चपञ्चाष्टसप्ताक्षभागा व्यत्ययतो समे ॥
वह्निः समीरशक्रौ च धनदो जलदस्तथा ।
विषमेषु क्रमाज्ज्ञेयाः समराशौ विपर्ययम् ॥" इति ।

'पवनसमीरण' इति देववाचकशब्दौ। कौर्पिजूकलेया इत्यनार्यसंज्ञाः। पवनसमीरण इति पञ्च पञ्च भवति। अतो दशमांशो व्यज्यते। कौर्पिजूकलेयेन त्रिंशांशो व्यज्यते। इन्द्रदैवत्यच्छन्दस्त्वात् दशमांशस्य इन्द्रादि दशदिक्पाला अयुजि, व्यत्ययेन समभे च नाथा भवन्तीति व्यञ्जितम्। पुनश्च कुजरविजगुरुज्ञशुक्राश्च नाथा भवन्ति। कुजरविज इति डप्रत्ययान्तजनिधात्वन्ततयैकरूपत्वादेकान्वयः। अतो मेषस्य दशमांशः कुजादारभ्य रविजपर्यन्तं भवतीति व्यञ्जितम्। अनेन क्रमेण वृषस्य दशमांशः 'गुरुज्ञशुक्रा' इति नवमपादारभ्य शुक्रपर्यन्तं भवति। गुरुं पितरं जानाति इति गुरुज्ञः नवमभावपः। एवं मेषदशमांशाः मेषादिमकरान्तं भवन्ति। वृषदशांशाः मकरादितौल्यन्तं भवन्ति। मिथुनदशांशाः मिथुनादयो भवन्ति। ओजराशिषु स्वर्क्षात् युग्मराशिषु नवमाद्दशमांशाः कल्प्यन्त इति भावः। आह च भगवान् पराशरः—

"दिगंशया ततश्चौजे युग्मे तन्नवमाद्वदेत्।
पूर्वादिदशदिक्पाला इन्द्राग्नियमराक्षसाः॥
वरुणो मारुतश्चैव कुबेरेशानपद्मजाः।
अनन्तश्च क्रमेणोजे समे वा व्युत्क्रमेण तु॥"

इति। अनेन त्रिंशांशदशमांशौ व्याख्यातौ। 'पवनसमीरण' इति त्रिंशांशकस्य पञ्चभूतेषु वाय्वात्मकत्वं सूचितम्। अनेन कालपुरुषस्य वायुध्यानस्थानभूतानाहतात्मक आधार इत्यपि व्यञ्जितम्। अत एव "द्रेक्काणहोरे' ति श्लोकेऽस्य चतुर्थोपदेशः। विस्तरतस्तत्र वक्ष्यते॥ ७॥

अनार्यसंज्ञा आर्यीकरोत्यार्यावृत्तेन—

**क्रियताबुरुजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः।**
**तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्॥ ८॥**

इति । मेषादिराशयः क्रमेणेत्थं क्रियतावुरुजितुमकुलीरलेयपाथोनजूक-कौर्प्याख्याः तौक्षिकः आकोकेरः हृद्रोगः अन्त्यभं च । क्रियः, तावुरुः, जितुमः, कुलीरः, लेयः, पाथोनः, जूकः, कौर्पिः, तौक्षिकः, आकोकेरः, हृद्रोगः, अन्त्यभं च । च भवन्ति चेत्यर्थः । एते मेषादय इति प्रकाशयितु-माचार्येण 'क्षितिजे'तिवत् क्रियाद्यष्टावेकपदेन समस्यन्ते ।

"स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ।"

इति खल्वाचार्येण प्रतिज्ञातम् । अत एव राशयः स्वतःप्रसिद्धत्वान्नाम-भिर्नोपदिष्टाः । कथं तर्हि राशीनां यवनसंज्ञा अत्रोच्यन्ते श्लोकेनैकेन "मात्रा-लाभः पुत्रलाभ" इति पाणिनीयमतमनुसरता वराहमिहिरेण इति चेदुच्यते । आचार्येणैते शब्दाः क्वचिदेव प्रयुक्ताः । अतोऽस्य प्रयोजनं न पर्यायपदोप-देशः, किंतु "पवनसमीरणकौर्पिजूकलेयाः" इति पूर्वश्लोक एव व्यञ्जितम्, एते प्राधान्येन सङ्ख्यावाचका इति । क्रियाद्यष्टपदानामेकपदेन समासः काल-चक्रदशाक्रमं सूचयति । राशय एवोपदिष्टा अस्मिन् श्लोके । अतः राशीनां स्वामिनो वशात् कालचक्रदशासङ्ख्या सूचिता । क्रियतावुरु इत्यादयः अक्षर-सङ्ख्यया द्वौ (२) एकं (१) षट् (६) चत्वारि (४) द्वौ (२) अष्ट (८) षट् (६) पञ्च (५) एकं (१) त्रीणि (३) द्वौ (२) त्रीणि (३) एकं (१) एकं (१) सप्त (७) शून्यं (०) अष्ट (८) एकं (१) एकं (१) एकं (१) एकं (१) षट् (६) षट् (६) एकं (१) शून्यं (०) एकं (१) एकं (१) द्वौ (२) अष्ट (८) द्वौ (२) त्रीणि (३) षट् (६) एकं (१) चत्वारि (४) षट् (६) सप्त (७) भवन्ति । आहत्य अष्टादशोत्तरशतं (११८) भवन्ति । अतो द्वादशराशीनां कालचक्रदशावर्षाण्यष्टादशोत्तरशतमिति व्यञ्जितम् ।

**चेत्थ** चात् इत्थं भवन्तीत्यर्थः । चान्त्यभमित्यत्र दृश्यमानचकारात् इत्थं भवन्ति दशागणनविषये इति सिद्ध्यति । वृत्तमार्या संज्ञास्त्वनार्याः ।

अतश्चकारात्क्रमगणनेन आर्याणां वर्षाणि ज्ञेयानि । आर्याः सत्त्वगुणप्रधानाः ।

"चन्द्रार्कजीवा ज्ञसितौ कुजार्की यथाक्रमं सत्त्वरजस्तमांसि ।"

इति वक्ष्यति । एतेषामर्कचन्द्रगुरूणां सत्त्वगुणप्रधानतया आर्याणां चात् क्रमगणनेन वर्षा ऊह्याः । चण्डकिरणत्वात् सूर्यस्य चन्द्रापेक्षया न्यूनसत्त्ववत्त्वम् । गुरुः परमसात्त्विकः । अनेनैष क्रमो लब्धः । चकारात् क्रमेण "चान्त्यभं चेत्थं" "क्रियतावुरुजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः" "तौक्षिक आकोकेरो हृद्रोगः" इति पञ्चाक्षराणामेकविंशत्यक्षराणां दशाक्षराणां सत्त्वात् पञ्च वर्षा एकविंशतिवर्षाः दश वर्षा इति लब्धम् । सूर्यस्य पञ्च वर्षाः, चन्द्रस्यैकविंशतिः, गुरोर्दश । आहत्यार्याणां षट्त्रिंशत् संवत्सराः । सप्तग्रहाणां द्विसप्ततिवर्षा इति पूर्वं 'कालाङ्गानी'ति श्लोके व्याख्यातम् । अतोऽनार्याणामपि षट्त्रिंशत्संवत्सरा एव । किंत्वस्मिन् श्लोके चात् व्युत्क्रमेण गणनीयम् । मात्राच्छन्दः । अतः पूर्वार्धे त्रिंशन्मात्राणां सत्त्वात् प्रथमपादान्ते यत्यभावाच्च पञ्चदशमात्रात्परतश्छेदः । एवं कृते व्युत्क्रमेण गणिते च 'हृद्रोगश्च' 'तौक्षिक आकोकेरो' 'यपाथोनजूककौर्प्याख्याः' 'न्त्यभं चेत्थं क्रियतावुरुजितुमकुलीरले' इति चतुर्धा भवन्ति । एतेषु चत्वारि, सप्त, नव, षोडशाक्षराणि वर्तन्ते । अतश्चत्वारि वर्षाणि महानार्यस्य शनेः । सप्त कुजस्य । कुजापेक्षया शनेः पापाधिक्यम् । ततो नव राजसस्य बुधस्य । ततः षोडश राजसब्राह्मणस्य शुक्रस्य । पापत्वक्रमस्तु "हेलिः सूर्यः" इति श्लोकव्याख्याने सम्यक् प्रदर्शयिष्यामः ।

उक्तं च कालचक्रदशावर्षाः पराशरेण मुनिवरेण—

"भूतैकविंशद्गिरयो नव दिक्षोडशाब्धयः ।
सूर्यादीनां क्रमाद्वायू राशीनां स्वामिनो वशात् ॥"

इति । वृत्तमार्या ।

"यस्यां पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥"

इति श्रुतबोधलक्षणात् । क्रियाद्यष्टावेकपदेन समस्यन्ते । तौक्षिकादयो व्यस्ताः । अष्टानामेकपदसमासः

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥"

इति गीताश्लोकं स्मारयति । अनेन कालचक्रदशाक्रमे प्रथमदशाराशिभूमिरथवा देहो भवति ।

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥"

इति स्मृत्यनुसारेण जीवत्वं सूचयति व्यस्ततौक्षिकशब्दः । आर्यावृत्तमपि जीवत्वज्ञापकमेव । अक्ष्युपनिषदुक्तेन आर्यशब्दनिर्वचनभूतेन

"स भूमिकावानित्युक्तः शेषस्त्वार्य इति स्मृतः ।"

इति वचनेन आर्यशब्दः कर्मयोगपूर्त्यनन्तरं ज्ञानभूमिकान्वेषणार्थं भ्रममाणपरः । अत आत्मस्वरूपजिज्ञासुरनेन आर्यशब्देन ग्रह्यते । कालचक्रदशाक्रमे प्रथमदशा देहः अन्तिमदशा जीव इति फलितार्थः । तथा चोक्तम्—

"देहजीवौ मेषचापौ दस्राद्यचरणस्य वै ।
देहजीवौ नक्रयुग्मौ" इत्यादि ।

अर्थान्तरस्याऽपि ध्वनिः । आर्यावृत्तस्थानार्यसंज्ञाभिरार्याग्रेसरस्य गुरोर्महानार्यस्य शनेश्च परस्परक्षेत्रस्थितिः

" विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ "

इति गीतोक्तज्ञानित्वं सूचयतीति व्यञ्जितम् ।

अन्योन्यदृष्टिकेन्द्रत्रिकोणस्थितिसम्बन्धेनाऽप्येवमूह्यम् । तयोर्योगस्तु "ज्ञेयः श्मश्रुकरः" इति वक्ष्यमाणानिष्टफलमिश्रं ज्ञानित्वं जनयति ॥ ८ ॥

अथ षड्वर्गमाह—

**द्रेक्काणहोरानवभागसंज्ञा-**
**स्त्रिंशांशको द्वादशसंज्ञितश्च ।**
**क्षेत्रं च यद्यस्य स तस्य वर्गो**
**होरेति लग्नं भवनस्य चार्धम् ॥ ९ ॥**

इति । द्रेक्काणः राशित्रिभागः । होरा राश्यर्धम् । नवभागसंज्ञः नवांशकः । त्रिंशांशकः । द्वादशसंज्ञितश्च द्वादशांशकः । क्षेत्रं च । एतेषु षड्वर्गेषु यत् यस्य भवति सः तस्य वर्गो भवति । यथा सूर्यस्य द्रेक्काणे, होरायां, नवांशे, द्वादशांशे, क्षेत्रे वा स्थितः ग्रहः सूर्यवर्गस्थो भवति । अस्य प्रयोजनं किंशुकोत्तमादिद्वित्र्यादिवर्गैक्ये द्रष्टव्यम् । विस्तरत उत्तरत्र वक्ष्यते ।

द्रेक्काणादिक्रमेण कालपुरुषस्य मूलाधारादिषडाधाराः क्रमेण सूचिताः । शास्त्रस्य मन्त्रतुल्यत्वं पूर्वमेव प्रदर्शितम् । अतोऽस्याऽऽधारादिचिन्ता न्याय्यैव । तथा चोक्तम्—

" मूलाधारे दृगाणः स्यात् पितृचिन्ता रविस्तथा ।
स्वाधिष्ठाने तु होरा स्यान्मातृचिन्ता तथा शशी ॥
मणिपूरे नवांशश्च भ्रातृचिन्ता कुजोऽपि च ।
अनाहते च त्रिंशांशो वाणीचिन्ता बुधस्तथा ॥

विशुद्धौ द्वादशांशः स्यात् पुत्रचिन्ता तथा गुरुः ।
आज्ञायां क्षेत्रमुद्दिष्टं जायाचिन्ता सितस्तथा ॥
द्वादशान्ते शनैश्चारी नाशचिन्ता च कीर्तिता ।
तत्रस्थैस्तदधीशैश्च बलाबलवशात्फलम् ॥" इति ।

पादवक्त्रपाणिचक्षुर्नासिकाश्रवणान्यङ्गानि च भवन्ति द्रेक्काणादय इत्यपि सूचितं षडङ्गतया । नवांशकाः धनञ्जयव्यतिरिक्तनवप्राणाः द्वादशांशकाः मनोबुद्धिः दशेन्द्रियाणि च । आहत्यैकविंशतितत्त्वात्मकसूक्ष्मशरीरं सूचितम् । क्षेत्रमिति

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।"

इति त्वगसृगादियुक्तस्थूलशरीरस्योपलक्षणम् ।

मूलाधारादिक्रमेणात्र क्षेत्रशब्दः आज्ञाचक्रस्य सूचकः । युक्तं चैतत् । तद्धि कुरुक्षेत्रसंज्ञकम् ।

"भ्रुवोर्घ्राणस्य यः सन्धिः स एवैतत् कुरुक्षेत्रम् ।"

इति निरुक्तम् । भूमिजलाग्निरूपाकारोकारमकारात्मकप्रणवरूपत्वान्मूलाधारस्वाधिष्ठानमणिपूरात्मकद्रेक्काणहोरानवभागानामेकपदेन समासः । बिन्दुरूपत्वाद्वायुतत्वात्मकानाहतसूचकत्रिंशांशकस्य परत उपदेशः । नादरूपत्वादाकाशात्मकविशुद्धिसूचकद्वादशांशस्य पृथग्ग्रहणम् । एते पञ्च भूतात्मकाः प्रथमार्धेन गृह्यन्ते । तत्परत्वात् कलारूपत्वात् क्षेत्रस्यान्यार्धनिवेशनम् ।

द्रेक्काणः द्रेक्काणः होरा राश्यर्धम् । होरा इति चतुर्विंशांशश्च गृह्यते । नवभागसंज्ञाः नव भ अग संज्ञा इति च्छेदः । नव इति नवांशः नव इत्यक्षरसङ्ख्यासूचितचत्वारिंशाशः । नव इत्यक्षरसङ्ख्यासूचितचत्वारिं-

शत्कलात्मकः पञ्चचत्वारिंशांशः । भ इति द्वादशांशः ऋक्षांशश्च । भ इत्यक्षरसङ्ख्यासूचिततुरीयांशश्च । अगः अचलम् इति सप्तांशः । अग इत्यक्षरसङ्ख्यासूचितत्रिंशत्कलात्मकः षष्ट्यंशश्च । त्रिंशांशकः । द्वादशसंज्ञितश्च । द्वौ दश द्वादश । इन्द्रवज्रावृत्तम् । इन्द्रादिदिक्पालदेवताकदशांशस्य द्योतकत्वात् दश इति प्रत्येकग्रहणस्य सूचकम् । अतो द्वादश द्विदशात्मको भवति । इन्द्रेत्यक्षरसङ्ख्यासूचितविंशांशस्य वज्रेत्यक्षरसङ्ख्यासूचितचतुर्विंशांशस्य पूर्वोक्तप्रकारेणेन्द्रादिदिक्पालकसङ्ख्याकदशांशकस्य च द्योतकमिन्द्रवज्रावृत्तम् । अत्र होराशब्देन चतुर्विंशांश उक्तः । दश इति दशमांशः । द्वादश इति द्विदशात्मकविंशांशकश्चोक्तः । क्षेत्रं राशिः । तस्य वर्गः तस्येत्यक्षरसङ्ख्यासूचितषोडशांशवर्गश्च आहत्य तस्य वर्गः इत्यावृत्तिरिष्यते । षोडशवर्गः यत् यस्य यद्वर्गः यस्य भवति सः तस्य वर्गः पुनरप्यावृत्तिः । तस्य वर्गो भवतीति षोडशवर्गः सूत्रितः ।

अथवा होराशब्द एव दशांशविंशांशावपि गृह्णीयात् । किञ्च कारणं गृह्णीयात्? "होरेति लग्नं भवनस्य चार्धम्" इति । होराशब्देन लग्नं भवनस्यार्धं च व्यवह्रियेते । लग्नमित्यक्षरसङ्ख्यया त्रीणि । अतो भागत्रयात्मको दशांशः लग्नशब्देन सूचितः । भवनस्य अर्धं राश्यर्धम् । भमिति द्वादश वनमिति चत्वारि । अतो भवनमित्यष्टचत्वारिंशत् । तस्यार्धं चतुर्विंशतिः । अनेन सिद्धांशः सूचितः । पुनः भवनस्य राशेः । अर्धं अक्षरसङ्ख्यया नवतिः । नवतिकलात्मको विंशांशोऽनेन सूचितः । राशेः विंशतिमो भाग इत्यर्थः । एवं राश्यर्धदशांशविंशांशचतुर्विंशांशाः "द्रेक्काणहोरा" इत्यत्र होराशब्देन निर्दिष्टाः । इदमर्थमेव

"मार्ताण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे"

"होरादयस्तनुकुटुम्बसहोत्थबन्धु"

इति वचनाभ्यामेव होरायाः लग्नत्वे राश्यर्धत्वे च सिद्धे चतुर्थपादस्य निवेशनम् ।

इन्द्रवज्रावृत्तेन इन्द्रदेवताकगुरुवर्गस्य प्राशस्त्यं व्यञ्जितम् ।

होरालग्नं इति भवनस्य इतीत्यक्षरसङ्ख्यासूचितषष्टिनाडीयुक्त-द्वादशराश्यात्मकदिनस्य भवनस्य राशेः अर्धं च भवति । पञ्चनाड्यात्मक-राशेरर्धं भवति । सार्धनाडीद्वयवत् होरालग्नमिति भावः । एतत् होरालग्न-मायुर्दाये प्रयोजनवद्भवति । एतत्कालहोरायाः भिन्नम् । अनेन षोडश वर्गा व्याख्याताः ॥ ९ ॥

अथ पृष्ठोदयादिराशय उच्यन्ते—

**गोऽजाश्विकर्किमिथुनाः समृगा निशाख्याः**
**पृष्ठोदया विमिथुनाः कथितास्त एव ।**
**शीर्षोदया दिनबलाश्च भवन्ति शेषा**
**लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥ १० ॥**

इति । समृगाः मकरसहिताः, गोजाश्विकर्किमिथुनाः वृषभमेषचापकर्कि-मिथुनाः, निशाख्या रात्रिराशयो भवन्ति । त एव विमिथुनाः मकरचाप-मेषवृषभकटकराशयः पृष्ठोदयाः कथिताः । शेषाः सिंहकन्यावृश्चिकतुलाधर-कुम्भराशयः मिथुनश्च शीर्षोदयाः कथिता इति शेषः । सिंहकन्यावृश्चिक-तुलाधरकुम्भराशयो मीनश्च दिनबलाश्च दिनराशयो भवन्ति । पृथुरोमयुग्मं मीनराशिः उभयतः लग्नं समेति उभयोदयो भवति । मुखपुच्छप्रतिबद्ध-मत्स्ययुगलस्वरूप इत्यर्थः । निशाराशयो रात्रिफलदाः । दिनराशयो दिवा-फलदाः । एतद्यात्राप्रकरणे योज्यम् । विशेषतो युद्धयात्रायाम् ।

कथितास्त एव । कथितास्ते एव इत्यपि पदच्छेदः । ते पृष्ठोदयराशयः कथितास्ते कथितः अस्तः यस्य तस्मिन् । न तु कथितोदये । अनिष्टफलदा इति भावः । शीर्षोदयराशिः शुभफलद इत्यपि व्यज्यते । प्रयोजनान्तरमपि

"पृष्ठोभयकोदयर्क्षगाः स्वान्त्यान्तः प्रथमेषु पाकदाः" ।

इति वक्ष्यति ।

"क्षितिजसितज्ञ" इति श्लोके क्षितिजेत्यष्टपदानां समासः । सुरगुर्विति चतुर्णां च । मेषाद्यष्टराशिषु पूर्वराशिचतुष्टयं कटकयुतत्वात् चन्द्रस्येति लभ्यते । अतस्ते रात्रिराशयश्च भवन्ति । सिंहादिराशिचतुष्टयं तु सिंहयुतत्वात् सूर्यस्य । अत एव ते दिनराशयश्च भवन्ति । अनेनैव क्रमेण अश्विमकरौ रात्रिराशी, कुम्भमीनौ दिनराशी । किंतु अश्विमकरौ सूर्यस्य राशी । कुम्भमीनौ चन्द्रस्य राशी । तथा च सारावल्याम्—

"द्वादशमण्डलभगणे पूर्वार्धे सिंहतो रविर्नाथः ।
कर्कटकात्प्रतिलोमं शशभृदथान्येऽपि तद्दानात् ॥" इति ।

"मत्स्यौ घटी"त्याद्याकारकथनेनैव पृष्ठोभयकोदयादिके सिद्धे पृष्ठोदयादीनां स्पष्टग्रहणार्थमयमारम्भः । प्रायेण जनाः पृष्ठोदयशब्देन पृष्ठेनोद्यन्त इति मन्यन्ते । एवं चेत् पृष्ठोदयत्वात् मेषराशिः वृषाभिमुख एव भवितुमर्हति । एवमेव मुद्रितचित्रेष्वपि दृश्यते । तदबद्धम् । वस्तुतो मेषः मीनाभिमुख एव । सः पृष्ठेनोदेतीत्यनेन पृष्ठोदयानन्तरमेवोदयः पूर्णो भवतीत्यर्थः । उदयशब्देन पूर्णोदय एव गृह्यते । न त्वर्धोदयादयः । अत एव पराशरहोरायां मकरस्वरूपम्—

"पृष्ठोदयो बृहद्गात्रः कर्बुरो वनभूचरः ।
आदौ चतुष्पदन्ते तु विपदो जलगो मतः ॥"

इति वर्णितम् । आद्यभागस्य चतुष्पदत्वात् मुखत्वाच्च मकरः न पृष्ठेनोदेति । किंतु पृष्ठभूतस्य जलगस्योदयानन्तरमेव पूर्णोदितो भवति । अतः पृष्ठोदयादित्वं पृष्ठोदयानन्तरपूर्णोदयत्वपरमेव । मकराद्यभागस्य चतुष्पदत्वात् मुखत्वाच्च स चापाभिमुख इत्यपि सिद्धम् ।

"क्षितिजसित" इति वर्गविवेकमारब्धवता आचार्येण प्रकरणमसमाप्यैव पृष्ठोदयादिभेदप्रतिपादकोऽयमारम्भः किमर्थं कृत इति चेत् श्लोकस्यास्य दशमत्वसम्पादनार्थमित्युच्यते । दशमत्वसम्पादनेन किं प्रयोजनम्? राशीनां भगवतो दशावतारदैवत्यज्ञानं प्रयोजनम् । मत्स्यकुम्भादयो राशयो मत्स्यकूर्माद्यवतारदैवत्याः इति व्यञ्जितम् । मत्स्यकुम्भवृश्चिकतुलाधरकन्यासिंहाः दिनराशयः । शेषाः रात्रिराशयः । अनेनावतारगणने एष क्रमः इष्यते । एवं मत्स्यराशेर्मत्स्यावतारो देवता । कुम्भस्य कूर्मः । वृश्चिकस्य सूकरः । तुलाधरस्य नरसिंहः । कन्यायाः मायावामनः । सिंहस्य परशुतपोधनः । कर्कटकस्य करुणाकाकुत्स्थः । मिथुनस्य

"हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ॥"

इति कविसार्वभौमवचनानुसारेण सदा रेवतीसहितो बलभद्राख्यः सङ्कर्षणः । वृषभस्य गोपीलोचनचकोरचन्द्रो वासुदेवः ।

"कृष्णस्तु भगवान् स्वयम् ।"

इति श्रीमन्महाभारतवाक्येन पूर्णावतारत्वेन सुप्रसिद्धः श्रीकृष्णः सङ्कर्षण-प्रद्युम्नानिरुद्धात्मकव्यूहत्रयेणैव सदा वर्तते । अतो मेषस्य प्रद्युम्नः । मकरस्य अनिरुद्धः । धनुर्धरस्य कल्की । एवम्

मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च कृष्णः कल्की जनार्दनः ॥

इति दशविभवावताराः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाश्चतुर्व्यूहाश्चात्र दर्शिताः ।

"रामो रामश्च कृष्णश्च बुद्धः कल्कीति ते दश ।"

इति पक्षे तु मेषस्य बुद्धोऽपि वक्तव्यः । प्रश्ननिमित्तादिषु प्रयोजनवदेतत् । यथा प्रश्नकाले कृष्णस्तोत्रश्रवणेन वृषभः आरूढो भवति । पुनः

"न कुम्भलग्नं शुभमाह सत्यः"

इति वक्ष्यति । कुम्भस्य देवता कूर्मः । अनेन गृहक्षेत्रारामादिषु कूर्मदर्शनं भाविनोऽशुभफलस्य सूचकं भवतीति व्यञ्जितम् । तन्निवृत्त्यर्थं परिहारः कार्यः । "न कुम्भलग्नम्" इति श्लोकव्याख्यानावसरे तत्क्रमं सम्यक् प्रदर्शयिष्यामः ।

वृत्तं वसन्ततिलकम् । अतो वसन्ताधिपः शुक्रो यदि पृथुरोमयुग्म-मुभयतः राशिनांऽशेन च लग्नं समेति मीनलग्नं प्राप्तस्तदा जात उभयोदयो सर्वप्रकारेणाभ्युदयं प्राप्नोति राजा भवतीत्यर्थः । उक्तं च जातकपरिजाते—

"मीने मीननवांशके भृगुसुते लग्नस्थिते भूपतिः ॥" इति ॥१०॥

अथ राशीन् विभजति क्रूरसौम्यादिविभागेन—

**क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः**
**प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः ।**
**मार्ताण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे**
**द्रेक्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम् ॥ ११ ॥**

इति । ते सत्रिकोणाः त्रिकोणसहिताः क्रियवृषनृयुक्कर्कटाः मेषादिद्वादशराशय इत्यर्थः । क्रूरः सौम्यः यथाक्रमं क्रूरसौम्यसंज्ञका भवन्ति । पुरुषवनिते पुरुषस्त्रीसंज्ञकाश्च भवन्ति । ओजराशयः क्रूराः पुरुषराशयश्च भवन्ति, युग्मराशयः सौम्याः स्त्रीराशयश्च भवन्तीति भावः । चरागद्विदेहाः चरस्थिरोभयसंज्ञकाश्च भवन्ति । मेषादिचतुष्केन्द्राः चराः, वृषादिकेन्द्राः स्थिराः, मिथुनादिकेन्द्राः उभयराशय इत्यर्थः । प्रागादीशाः प्रागादिचतुर्दिशामधिपाश्च भवन्ति । मेषत्रिकोणराशयः प्रागीशाः । वृषत्रिकोणराशयः दक्षिणेशाः । मिथुनत्रिकोणराशयः पश्चिमदिगधिपाः । कर्किंत्रिकोणराशयः उदीचीशाश्च भवन्ति । हृतनष्टादौ चोरद्रव्यादिदिग्विज्ञानमस्य प्रयोजनम् ।

क्रूरसौम्यादिविभागप्रयोजनं तूत्तरत्र द्रष्टव्यम् । "ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः" इति वक्ष्यति । संज्ञाविधानसामर्थ्याज्जातके प्रश्ने च ओजयुग्मराशिवशात् क्रूरसौम्यत्वे वक्तव्ये । तथा च पुरुषवनितात्वे वक्तव्ये इति व्यञ्जितम् ।

तथा च सारावल्याम् —

"ओजेषूग्राः पुरुषाः सौम्या युग्मेषु सर्वभवनेषु ।"

इति । द्रव्यस्वरूपनिर्णयेऽपि क्रूरसौम्यत्वे राशिवशाद्वक्तव्ये । पुरुषवनितात्वप्रयोजनम्

" सहजभवननाथे पुंग्रहे पुंग्रहर्क्षे
पुरुषखचरयुक्ते पुंग्रहालोकिते वा ।
नयनभवनकेन्द्रे कोणगे वा बलिष्ठे
बहुधनसुखवन्तं सोदरं याति जाता ॥ "

इत्यादिजातकपारिजातादिवचनादिषु द्रष्टव्यम् । एवमेव पुत्रभावेऽपि पुरुषराशिपुरुषग्रहपुरुषयोगालोकनवशात् पुरुषप्रजात्वं वक्तव्यम् । अन्यथा स्त्रीत्वं वक्तव्यमित्यादि च व्यञ्जितम्, पुरुषवनिते इति संज्ञाविधानात् । एवमेव सर्वभावेषु युक्त्या बुद्ध्या च सम्यग्विचार्य वक्तव्यम् ।

'अयुजि समभे' इत्यपि अयुक्समभे इति कर्तव्यम् । क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः अयुक्समभे च स्युरित्यर्थः । अस्य प्रयोजनं मैथुनप्रश्नादिषु द्रष्टव्यम् । तथा च कृष्णीये—

" विषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरेषु । "

इति । चरादिविभागश्च जातके प्रश्ने च सञ्चारशीलत्वादिगुणावबोधनार्थम् । चरादिषु पुरुषस्वभावं भावाध्याये तत्र तत्र दर्शयति । प्रश्ने फलस्यापि चरस्थिरमिश्रत्वं व्यञ्जितं संज्ञाविधानेन । तथा च भट्टोत्पलः—

" स्थिरराशौ लग्नगते स्थानप्राप्तिं वदेन्न गमनं च ।
रोगोपशमो नाशो द्रव्याणां स्यात् पराभवो नात्र ॥
चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये ।
स्थिरवत्प्रथमेऽर्धे स्यादवरं चरराशिवत्सर्वम् ॥ "

इति । चरागद्विदेहेत्युक्त्या द्विदेहस्य पूर्वभागश्चरः उत्तरभागः स्थिर इत्यपि व्यञ्जितम् ।

अयुजि ओजराशौ मार्ताण्डेन्द्वोः सूर्यचन्द्रयोः भवत इति शेषः। समभे युग्मराशौ चन्द्रभान्वोः चन्द्रसूर्ययोः होरे भवतः। द्रेक्काणाः स्वभवन-सुतत्रित्रिकोणाधिपानां तद्राशिपञ्चमनवमाधिपानां स्युः।

अत्यष्टिश्छन्दः "क्षितिजसितज्ञ" इति श्लोकं स्मारयति। अनेन अंशकेष्वप्येवंविधविभागो भवतीति व्यञ्जितम्। मन्दाक्रान्तावृत्तम्।

"मन्दाक्रान्ता जलधिषडगैर्म्भौ भनौ तौ गुरू चेत्।"

इति लक्षणात्। मन्दा आक्रान्ता इति छेदः। मन्दा इति

"त्रैगुण्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते॥"
"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति॥"

इत्यादिस्मृतिश्रुती ज्ञापयति। अतः मन्दा इति, एतेषां कर्मिणां पथः पितृयानस्य सूचकः।

"तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते।"

इत्युक्तत्वाच्चन्द्रहोरायाः पितरो देवता इत्यूह्यम्। आक्रान्ता इति।

"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षड्डुदङ्ङेति मासाँस्तान्। मासेभ्यः संवत्सरँ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति।" इति सूर्यद्वारकदेवयानं स्मारयति। अतः सूर्यहोरायाः देवाः देवता इत्यपि व्यञ्जितम्। तथा चोक्तं पराशरहोरायाम्—

"सूर्येन्द्वोर्विषमे राशौ समे तद्विपरीतकम्।
पितरश्चन्द्रहोरेशाः देवाः सूर्यस्य कीर्तिताः॥

राशेरर्धं भवेद्धोरा ताश्चतुर्विंशतिः स्मृताः ।
मेषादि तासां होराणां परिवृत्तिद्वयं वदेत् ॥"

इति । होरा इति चतुर्विंशांशः । तत्र होरे चतुर्विंशांशौ । मन्दाक्रान्तावृत्तेन पूर्वान्तिमे इत्यपि योज्यम् । अयुजि ओजराशौ मार्तण्डेन्द्वोः सूर्यस्य चन्द्रस्य च भवतः । ओजराशौ चतुर्विंशांशाः सिंहादारभ्य परिवृत्तिद्वयेन कर्कटे पर्यवस्यन्तीत्यर्थः । तथा समभे पूर्वान्तिमौ चतुर्विंशांशौ चन्द्र-भान्वोर्भवतः । कर्कटादारभ्य प्रतिलोमेन परिवृत्तिद्वयेन सिंहे पर्यवस्यन्ति चतुर्विंशांशा इत्यर्थः । तथा च पराशरः—

"सिद्धांशकानामधिपाः सिंहादोजभगे गृहे ।
कक्र्याद्युग्मभगे खेटे स्कन्दः पशुधरोऽनलः ॥
विश्वकर्मा भगो मित्रो मयोऽन्तकवृषध्वजः ।
गोविन्दो मदनो भीमः सिंहादौ विषमे क्रमात् ॥
कर्कादौ समभे भीमाद्विलोमेन विचिन्तयेत् ॥"

इति । स्वभवनसुतत्रित्रिकोणाधिपानाम् । स्व आत्मा ब्रह्मा । ब्रह्मरुद्र-विष्णूनामात्मान्तरात्मपरमात्मत्वं सन्ध्योपासनविधौ निर्दिष्टम् । स्वसुतः नारदः । भ इति द्वादश । अतः आदित्यव्यञ्जकः मित्र इत्यर्थः । वनमिति जलं वरुणवाचकम् । अतः भवनसुतः मैत्रावरुणिः अगस्त्य इत्यर्थः । सुत इति स्वशब्देन भवनशब्देन च संबध्यते । अत्रिः अत्रिसुतः दुर्वासाः सुतत्रि इत्यत्र "अकः सवर्णे दीर्घः" इति दीर्घसन्धिस्थाने "अतो गुणे" इति पररूपसन्धिरार्षः । परेण अत्रिशब्देनाऽपि सुतशब्दोऽनुबध्यते इति सूचयितुमत्र पररूपसन्धिः कृतः । अतो द्रेक्काणाः स्वभवनसुतत्रीणां नारदागस्त्यदुर्वाससां त्रिकोणाधिपानां च स्युरिति भावः । तथा च पराशरः—

"राशित्रिभागद्रेक्काणास्ते च षट्त्रिंशदीरिताः ।
परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत् ॥
स्वपञ्चनवमानां च विषमेषु समेषु च ।
नारदागस्त्यदुर्वासा द्रेक्काणेशाश्चरादयः ॥"

इति । ते चरागद्विदेहा इत्यप्युक्तत्वात् चरस्थिरोभयद्रेक्काणानां नारदागस्त्यदुर्वासस ईशा इत्यपि सिद्धम् । त्रिकोणाधिपानामित्युक्तत्वात् चरादित्रिकोणाधिपानामिति पक्षान्तरमपि व्यञ्जितम् । अस्मिन् पक्षे मेषे मेषसिंहधनुरधिपाः द्रेक्काणेशाः । वृषे मकरवृषभकन्याधिपाः द्रेक्काणेशा इत्यादि । तथा च कृष्णीये—

"क्षितिसुतरविगुरुसौरा भृगुबुधभार्गवशनैश्चराः सबुधाः ।
सोमाङ्गारकजीवा द्रेक्काणगणेश्वराः प्रोक्ताः ॥"

इति । पुरुषवनिता इते इत्यपि पदच्छेदः । अक्षरसङ्ख्यया इते इति षष्टिः । षष्ट्यंशे इत्यर्थः । क्रूरः सौम्यः क्रूरभागाः सौम्यभागाश्च सन्तीत्यर्थः । क्रूर इत्यारम्भसामर्थ्यादक्षरद्वयनिर्देशाच्चाद्यभागद्वयं क्रूरमिति लब्धम् । क्रूरसौम्य इत्योजयुग्मविधानाद्युग्मराशिषु षष्ट्यंशेशाः व्यत्यस्ता भवन्तीत्यपि व्यज्यते ।

पुरुषवनिता पुरुषस्य भगवतो नारायणस्य वनिता योगमाया श्रीदुर्गादेवीत्यर्थः ।

"अहमशेषसुरासुरमोहिनी यवनिका मधुकैटभमर्दिनः ।"

इति हि तस्या वचनं श्रीमद्वेङ्कटनाथदेशिककृतयादवाभ्युदये । ते च रागद्विदेहाः इति पदच्छेदः । रागात् "बहु स्यां प्रजायेयेति" रागेण द्विदेहाः द्विधा कृताः प्रागादीशाः दिगीशाः दश इत्यर्थः । द्विधा कृताः

दश विंशतिः । अतः विंशांशेशा इति भावः । सा दुर्गा एकाऽपि विंशांशविषये आत्मानं बहुधा कृत्वेशा भवति । मूलप्रकृतिरूपिण्याः देव्याश्चतुर्विंशतितत्त्वान्येव मूर्तयः । ता ओजयुग्मयोः स्थितानां चत्वारिंशद्विंशांशानां कालीगौर्यादयो दयामेधादयश्च चत्वारिंशद्देवता भवन्तीत्यत्र सर्वं स्पष्टम् ।

ते अचरागद्विदेहा इत्यपि पदच्छेदः । अचर इति अचलम् । धातुद्रव्यमित्यर्थः । अग इति वृक्षादिवाचकत्वान्मूलद्रव्यवाचकः । अचलमिति स्थिरम् । अग इति गत्यभावस्यैव द्योतकत्वाज्जीववत्त्वं किञ्चिदस्ति । अत एष शब्दो मूलद्रव्यपरः । द्विदेहा इति स्थूलसूक्ष्मरूपशरीरद्वयपरिग्रहद्योतकत्वाज्जीवपरः । अतः "द्विदेहाः" इति पदं जीवद्रव्यवाचि । मेषादयः क्रमेण धातुमूलजीवद्रव्याणि भवन्तीति भावः । चरराशयो धातुद्रव्याणि स्थिरराशयो मूलद्रव्याणि उभयराशयो जीवद्रव्याणि च भवन्ति । क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः सत्रीणि कोणाश्च । सत्रीणि सत्रवन्ति नक्षत्रेष्टियुतानि नक्षत्राणि । अभिजिद्व्यावृत्त्यर्थं सत्रीति निर्देशः । सत्रि इत्यक्षरसङ्ख्यया सप्तविंशतिः, अतः सप्तविंशतिनक्षत्राणीत्यर्थः । तानि कोणाश्च मेषादित्रिकोणाश्चैवं भवन्ति । अश्विन्यादिनक्षत्राणि च क्रमेण धातुमूलजीवद्रव्याणि भवन्तीति फलितार्थः । तथा च कृष्णीये—

"चन्द्रारोरगसौरैर्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां मेषाश्विन्यादि धात्वादि ॥"

इति । सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः द्वादशसूचकेन कालचक्रदशाविषयसूचकस्य "क्रियतावुरु" इति श्लोकस्य स्मारकेण च 'क्रिय' इति पदेन राशीनां स्वामिनो वशात् केचन गुणा वक्तव्या इति सिद्ध्यति । एवं मेषत्रिकोणराशयो मेषाधिपकुजवत् पित्तप्रकृतयो भवन्ति । वृषत्रिकोणराशयो वृषाधि-

पशुक्रवद्वातप्रकृतयः। मिथुनत्रिकोणराशयो मिथुनाधिपबुधवद्वातपित्तकफ-प्रकृतयः। कर्किंत्रिकोणराशयः कर्क्यधिपचन्द्रवत् कफप्रकृतयश्च भवन्ति। शुक्रचन्द्रौ द्वावपि वातकफात्मकौ। किंतु सत्त्वगुणवत्तया चन्द्रस्य कफाधिक्यं, शुक्रस्य तु वाताधिक्यमिति विवेकः।

उक्तं च पराशरेण—

"पित्तानिलत्रिधात्वैक्यं श्लैष्मिकाश्च क्रियादयः।

इति। अर्थान्तरस्यापि ध्वनिः। क्रियवृषनृयुक्कर्कटानामीशा अपि धातुमूल-जीवधातुग्रहा भवन्ति। तत्र कुजो मेषवद्धातुद्रव्यकारकः। शुक्रो वृषव-न्मूलद्रव्यकारकः। बुधो मिथुनवज्जीवद्रव्यकारकः। चन्द्रः कर्किवद्धातु-द्रव्यकारक इति॥ ११॥

**केचित्तु होरां प्रथमां भपस्य वाञ्छन्ति लाभाधिपतेर्द्वितीयाम्।**
**द्रेक्काणसंज्ञामपि वर्णयन्ति स्वद्वादशैकादशराशिपानाम्॥ १२॥**

इति। केचित् यवनेश्वरादयः प्रथमां होरां भपस्य राशीशस्य द्वितीयां लाभाधिपतेश्च वाञ्छन्ति। द्रेक्काणसंज्ञामपि स्वद्वादशैकादशराशिपानां वर्णयन्ति कथयन्ति। तेषां पक्षे मेषे कुजशन्योः होरे भवतः। वृषे शुक्रगुर्वोरित्यादि। द्रेक्काणास्तु मेषे कुजगुरुशनीनाम्। वृषे शुक्रकुजगुरू-णामित्यादि। तथा च यवनेश्वरः—

"आद्यां च होरां भवनस्य पत्युरेकादशक्षेत्रपतेर्द्वितीयाम्।
स्वद्वादशैकादशराशिपानां द्रेक्काणसंज्ञाः क्रमशोऽत्र चोक्ताः॥"

इति। एष पक्षः कैश्चित्प्रश्ने आदृतः। आचार्यपक्षस्तु सत्यमतानुसारी। तथा च सत्यः—

"ओजेषु रवेर्होराः प्रथमा युग्मेषु चोत्तराः शेषाः ।
इन्दोः क्रमशो ज्ञेया जन्मनि चेष्टौ स्वहोरास्थौ ॥
राशिस्त्रिद्रेक्काणस्तत्पञ्चमनवमभवनपतयः स्युः ।
तेषामधिपतयः स्युः स्वद्रेक्काणे ग्रहा बलिनः ॥"

इति । वृत्तमिन्द्रवज्रा ।

प्रथमां होरां प्रथमां चतुर्विंशांशम् । भपस्य भानां नक्षत्राणाम् । इन्द्रवज्रावृत्तत्वान्नक्षत्ररूपज्योतींषि गृह्यन्ते । तानि च इन्द्रस्य सैनिकाः । अतः भपः देवसेनापतिः स्कन्दः । अतः प्रथमश्चतुर्विंशांशः स्कन्दस्येत्यर्थः । द्वितीयां लाभाधिपतेर्वाञ्छन्ति । वेदेषु पशुरेव धनवत्पठ्यते । यथा "स प्रजावान् पशुमान् भवति" इति । अतो लाभाधिपतिः पशुधरः । अत एवोक्तं सिद्धांशेशपरिगणने "स्कन्दः पशुधरोऽनल" इत्यादि पराशरेण ।

द्रेक्काणसंज्ञामपि स्वद्वादशैकादशराशिपानाम्, स्व इति ब्रह्मा तस्य राशिं पिबति इति राशिपः सर्वस्वभोगात् पुत्रः नारदः । द्वादश इत्यादित्यः । मित्र इत्यर्थः । तस्य राशिपः मैत्रावरुणिरगस्त्यः । एकादश इति एकादशमूर्तिः रुद्रः । तस्य राशिपः अंशसंभवः दुर्वासाः । एतेषामिति वर्णयन्ति । पूर्वोक्तक्रमेणास्मिन् पक्षेऽपि नारदागस्त्यदुर्वासस एव द्रेक्काणेशाः ।

केचित् तत्त्वचिन्तकाः । द्रेक्काणसंज्ञां तत्काललग्नद्रेक्काणं तत्पूर्वगतद्रेक्काणं तदनुगतद्रेक्काणं च पूर्वजन्मनि इहजन्मनि भाविजन्मनि च स्थितानि । स्वद्वादशैकादशराशिपानां स्वस्य आत्मनः । द्वादशराशिः व्ययसमुच्चयः । वृत्तमिन्द्रवज्रा । अनेन व्ययशब्दः स्वर्गप्राप्तिविरोधिपरः । अतः द्वादशराशिपाः तत्पतयः पापानि । एकादशराशिः लाभसमुच्चयः स्वर्गप्राप्तिहेतुः । तत्पतयः पुण्यानि । एतेषां स्वरूपमिति वर्णयन्ति । तत्तद्द्रेक्काणेशबलाबलवशात्तत्तज्जन्मार्जितपुण्यपापान्यूह्यानीति भावः । स्वद्वादशैकादशराशि-

पानां स्व इत्यक्षरसङ्ख्यया चत्वारि । बलपिण्डस्य तुरीयांशसूचितपाप-पुण्यानामिति वर्णयन्ति । स्वद्वादशैकादशराशिपानां चतूरूपस्थितानां पापपुण्यानामिति वर्णयन्ति । द्रेक्काणेशस्य द्रेक्काणस्य वा संज्ञाशब्दसूचित-सप्तवर्गजबलस्य तुरीयांशः पुण्यम्, चतुर्भ्यः विरहितं पुण्यं पापम्, तयोरन्तरं रूपचतुष्टयं पुण्यं यदि भवेत् तदा मुक्तिर्वाच्या, पापं रूपचतुष्टयं चेद्भाविजन्मनि हेययोनौ जन्म च वाच्यम् । उक्तं च उत्तरकालामृते—

"प्राक्प्रत्यक्तनुभागतस्त्रिभिरपि द्रेक्काणकैस्तद्धपैः
प्राग्वद्वर्गजवीर्यमब्धिविहृतं पुण्यं हि रूपादिकम् ।
तद्भेदच्युतमत्र पापमिति तल्लेख्यं तयोरन्तरं
पुण्यं रूपचतुष्टयं यदि भवेन्मुक्तिर्ह्यसच्चेदसत् ॥" इति ।

स्वद्वादशेत्यनेनार्थान्तरस्यापि ध्वनिः । स्व इत्युक्त्या प्रथमद्रेक्काणः लग्नवदुत्थितः । द्वादशभावस्य व्ययस्थानत्वात् क्षीणत्वम् । अथवा शयानत्वं ज्ञेयम् । एकादशभावो लाभस्थानम् । अतस्तृतीयद्रेक्काणस्य लाभवत इवोप-विष्टत्वम् । तथा च कृष्णीये —

"द्रेक्काणो भवनादावुत्थित इति कीर्त्यतेऽन्त उपविष्टः ।
मध्ये शयितो ज्ञेयस्तेषु भवा वा तदा योज्याः ॥" इति ॥१२॥

अथ दिवाकरादितुङ्गराशीनाह—

**अजवृषभमृगाङ्गनाकुलीरा**
**झषवणिजौ च दिवाकरादितुङ्गाः ।**
**दशशिखिमनुयुक्तिथीन्द्रियांशै-**
**स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ १३ ॥**

इति । अजवृषभमृगाङ्गनाकुलीराः झषवणिजौ च मेषः वृषः मकरः कन्या कर्कटकः मीनराशिः तुलाधरः एते राशयः दिवाकरादितुङ्गाः दिवाकरादीनां सूर्यादीनां सूर्यचन्द्रकुजबुधगुरुशुक्रशनीनां यथाक्रमं तुङ्गा उच्चराशयः भवन्ति । अनेन ग्रहाणां तुङ्गराशय उक्ताः ।

अजवृषभमृगाङ्गनाकुलीराः झषवणिजौ च दशशिखिमनुयुक्तिथीन्द्रियांशैः त्रिनवकविंशतिभिश्च दशभिः त्रिभिः अष्टाविंशत्या पञ्चदशभिः पञ्चभिः सप्तविंशत्या विंशत्या च भागैः दिवाकरादितुङ्गाः दिवाकरादितुङ्गसंज्ञकाः भवन्ति । यथा मेषः दशभिरंशैर्दिवाकरतुङ्गसंज्ञकः । वृषः त्रिभिरंशैश्चन्द्रतुङ्गसंज्ञक इत्यादि । अतः मेषः दशभिरंशैः दिवाकरस्य स्वतुङ्गो भवति । वृषः त्रिभिरंशैश्चन्द्रस्य स्वतुङ्गो भवतीत्यादि । अनेन मेषादिराशयः उक्तभागैर्दिवाकरादीनां स्वतुङ्गा भवन्तीति लब्धम् । मेषे दशभिरंशैः रविः स्वतुङ्गगः । वृषे त्रिभिरंशैश्चन्द्रः स्वतुङ्गग इत्यादि । अनेन स्वतुङ्गसंज्ञा व्याख्याता ।

अतो मेषे दशभिरंशैरेव रविः स्वतुङ्गगः । शिष्टविंशतिभागैर्वितुङ्गग एव । उच्चराशिमाश्रितोऽपि न तुङ्गग इत्यर्थः । अत एवोक्तमाचार्येणानिष्टफलदत्वं तुङ्गाद्भ्रष्टस्य दिवाकरस्य

"प्रथितश्चतुरोऽटनोऽल्पवित्तः क्रियगे त्वायुधभृद्वितुङ्गभागे ।"

इति । शशिभवनालिझषान्तमृक्षसन्धिरिति मीनान्त्यभागषट्कस्य भसन्धिसंज्ञया मीनान्त्यभागत्रयस्य मेषवत्फलदत्वमिति पूर्वमेवोक्तम् । अनेन श्लोकेन मीनान्त्यभागत्रयस्थस्य रवेः स्वतुङ्गत्वं सूचितमाचार्येण । एतत्स्पष्टतरं सूचितं सारावलिकृता—

"उच्चाभिलाषी सविता त्रिकोणे स्वर्क्षे शशी जन्मनि यस्य जन्तोः ।
स शास्ति पृथ्वीं बहुरत्नपूर्णां बृहस्पतिः कर्कटकोपगश्चेत् ॥"

इति। मीनान्त्यभागस्थस्य रवेरुच्चाभिलाषित्वमुक्तमनेन श्लोकेन। उच्चाभिलाषित्वमिति परमोच्चाभिलाषित्वपरम्। एतदेव स्वतुङ्गत्वम्।

स्वोच्चसंस्थेषु पञ्चस्वाविर्भूतमभूतपूर्वेण महसा साकेतनगर्याम्। पुनर्वसूयुक्तशुक्लनवम्यामवततार राघवः। एतन्मेषं गते पूषणि न सम्भवति। पुनर्वस्वन्त्ये चन्द्रस्फुटं त्रयो राशयः त्रयो भागाः एकोनविंशतिः कलाः। नवम्यादौ तिथिस्फुटं त्रयो राशयः षड्भागाः। अतः सूर्यस्फुटं एकादश राशयः सप्तविंशतिर्भागाः एकोनविंशतिः कलाः भवति। अनेन भगवदवतारसमये सूर्यस्य मीनान्त्यभागस्थितिरेव न्याय्या। पूर्वोक्तहेतुना सूर्यः स्वोच्च एव। अत एव "स्वोच्चसंस्थेषु पञ्चसु" इति ऋषिवाक्यम्। "वाक्पताविन्दुना सह। प्रोद्यमाने" इत्युक्तत्वात् गुरुस्फुटमपि त्रयो राशयः त्रयो भागाः एकोनविंशतिः कला एव।

ऋषेरभिप्रायं ऋषिरेव वेदितुमर्हति। होराशास्त्राचार्याणां सूर्यादीनामृषीणामभिप्रायं ज्ञात्वैवोक्तं "स्वोच्चसंस्थेषु" इत्यादिकविना। भोजराजस्तु सरसकविरेव। "उच्चस्थ" इत्युक्तमनेन। भगवदवतारसमये सूर्यस्य नोच्चसंस्थत्वं किन्तु स्वोच्चसंस्थत्वमेव। अतः

"स्वोच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मीनान्त्यसन्धौ रवौ।"

इत्येव सुवचम्। एतन्मनसि निधायैवोक्तमाचार्यैः कवितार्किकसिंहैः "देवकी पूर्वसन्ध्ये"ति। यत्तु

"मेषं पूषणि सम्प्राप्ते पुष्पवृष्टिसमाकुले।
आविरासीज्जगन्नाथः परमात्मा सनातनः।
नीलोत्पलदलश्यामः पीतवासाश्चतुर्भुजः॥"

इति श्रीमदध्यात्मरामायण उक्तं तत् कल्पभेदेन तत्त्वविषयकम्।

भगवदवतारवर्णनं भगवतैव साध्यम् ।

"वक्ता सहस्रवदनः पुरुषः स एव
लिख्येत तस्य चरितं सरसं पवित्रम् ।"

यथा वर्णितो वासुदेवावतार आचार्यैः सर्वतन्त्रस्वतन्त्रैः—

"अथ सितरुचिलग्ने सिद्धपञ्चग्रहोच्चे
व्यजनयदनघानां वैजयन्त्यां जयन्त्याम् ।
अखिलभुवनपद्मक्लेशनिद्रापनुत्यै
दिनकरमनपायं देवकीपूर्वसन्ध्या ॥"

इति । वैजयन्ती जयन्ती श्रेष्ठा श्रीजयन्ती । एष शब्दोऽष्टमीरोहिणी-पर्याय इत्याबालवृद्धं सुप्रसिद्धम् । कृष्णस्येदमष्टमी कृष्णाष्टमीत्यत्र किंनाम प्रमाणमपेक्षते । अतः सूर्यस्य सिंहस्थितिरस्य शुक्रस्य चोच्चराशि-स्थित्यसम्भवश्च स्पष्टः । अनेन शेषास्तुङ्गगा इति सिद्धम् । सिद्धपञ्च-ग्रहोच्चे, पञ्चोच्चो लोकनायक इति तस्य पञ्चोच्चत्वं सिद्धमेव । सितरुचिलग्ने सितरुचिश्चन्द्रः, चन्द्रसहितगोलग्ने इत्यर्थः । गोपतिश्चायं श्रीपतिः । अथवा सितरुचिलग्ने गोलग्ने । "रक्तः श्वेतः" इति सितरुचित्वाद्वृषभः । रोहिणीस्थस्य चन्द्रस्य स्वोच्चभागस्थित्यसम्भवात् "उच्चे" इत्युक्तं विद्व-ज्जनमकुटावतंसैः श्रीमद्वेङ्कटनाथदेशिकैः ।

रविकुलदीपो राघवः । तस्य जातके रवेः स्वोच्चत्वम् ।

"आसागरान्तमवमत्य महीपतीन्द्रान्
भूम्ना निजेन परिहृत्य ययातिशापम् ।
ओजोनिरोधकमिलाश्रयमुग्रसेनं
राजानमेकमकरोज्जगदेकनाथः ॥"

इत्युक्तवच्चन्द्रकुलमिच्छाधीनस्वेतरसर्वः स्वमहिम्ना रक्षागोपो रामयवीयानुद-हार्षीत् । तस्य जातके चन्द्रस्योच्चत्वम् । प्रकृतमनुसरामः ।

तुङ्गत्वं नाम उन्नतत्वम् । एतदेकस्मिन् राशावेकस्मिन् भागेऽप्ये-कस्मिन् सूक्ष्मांश एव वक्तव्यम् । वृत्तं च पुष्पिताग्रा । अतः स्वतुङ्गसंज्ञायाः पुष्पिताग्रत्वं व्यञ्जितम् । पुष्पिताग्रशब्दः पूर्णाग्रत्वपरः । अत उक्तभागान्त्ये पूर्णोच्चत्वं सूचितम् । दशमभागान्ते रवेः परमोच्चत्वं मेषे । वृषे तृतीय-भागान्ते चन्द्रस्य परमोच्चत्वमित्याद्यवगन्तव्यम् ।

एता उच्चस्वोच्चपरमोच्चसंज्ञाः स्पष्टमेवोक्ताः सारावल्याम् । यथा—

" सूर्यादीनामुच्चा ह्यजवृषमृगयुवतिकर्किमीनतुलाः ।
स्वोच्चग्रहाः कथ्यन्ते भागैस्तेषां क्रमेण परमोच्चैः ॥
दिग्वह्न्यष्टाविंशति " इत्यादि ॥

" ग्रहस्य तुङ्गादवरोहिसंज्ञा " " आरोहिणी निम्नपरिच्युता च " इति वचनाभ्यां तुङ्गभागात्परत आरभ्य अवरोहित्वम्, नीचभागानन्तरमारभ्य आरोहित्वं च उक्ते । आरोहित्वे सति स्वतुङ्गसंज्ञासिद्ध्यर्थमयमारम्भः । अतस्तुङ्गशब्देन परमोच्चत्वं विवक्षितम् । उपचारेणोच्चराशिरप्युच्चो भवति । नीचशब्दोऽप्यतिनीचपर्याय एव । अत एवोक्तं " नीचेऽतोऽर्धं ह्रसति " इत्यतिनीचभागमुद्दिश्य । नीचराशिस्तु नीचगृहमित्येवोच्यते । यथा " शत्रुनीचगृहार्कगैः " इति ।

ते त एव दशशिखिमनुयुक्तिथीन्द्रियत्रिनवकविंशतयः । अस्ते नीचाः अस्तनीचाः । अस्ते अजवृषादीनामस्ते नीचा अतिनीचा भवन्ति । तुलाधरे दशमो भागः सूर्यस्य अतिनीचः, इत्यादि ।

अजादि पञ्च एकपदेन समस्यन्ते । " अज " इति देववाचक-शब्देनाऽऽरब्धम् । अतः पञ्चसु ग्रहेषु तुङ्गगतेषु जातो दिव्यो भवतीति सूचितम् । तथा च कृष्णीये—

"सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः ।
एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ॥"

इति । इन्द्रदैवत्यं छन्दः । अतः पञ्चसु ग्रहेषु तुङ्गगेषु जातो राजा भवतीति च सूचितम् । तथा च "पञ्चोच्चो लोकनायकः" इति । झषवणिजावित्युक्तत्वाद्द्विग्रहतुङ्गत्वं वणिक्शब्दसूचितप्रकृष्टकार्यत्वकारणं भवति । तथैवोद्धृतकृष्णीयवचनम् ।

दशशिखिमनुयुगित्याद्यष्टोत्तरशतं भवति । होराशास्त्रप्राणभूतनवांशकाश्च राशिचक्रेऽष्टोत्तरशतं भवन्ति । अनेनास्य ग्रन्थरूपमन्त्रस्याऽष्टोत्तरशतसङ्ख्याकजपः उच्चत्वदः, अथवा सिद्धिद इति व्यञ्जितम् । होराफलज्ञप्तये एतच्छास्त्रं यथोपदिष्टन्यासपूर्वकमष्टोत्तरशतवारं जप्यमिति भावः ।

अजवृषादयः दिवाकरादितुङ्गाः दिवाकरादिनवग्रहाणां तुङ्गा भवन्ति । अजवृषभ इति सप्त राशय एवोक्ताः । अतः क्रमयोगेन राहुकेत्वोरप्यजवृषभावेव तुङ्गौ भवतः । अजभं राहोः वृषभं केतोः । अजः ब्रह्मा तस्य भं रोहिणी तद्युतभं वृषभः । वृषा इन्द्रः तस्य भं ज्येष्ठा । तद्युतभं वृश्चिकराशिः । अतो वृषः राहोस्तुङ्गराशिः । केतोस्तु वृश्चिकस्तुङ्गराशिः । उक्तं च पराशरहोरायाम्—

"राहोस्तु वृषभं केतोर्वृश्चिकं तुङ्गसंज्ञकम् ।
कन्या च स्वगृहं प्रोक्तं मीनं च स्वगृहं स्मृतम् ॥"

इति । "क्षितिजसितज्ञ" इति श्लोकव्याख्यानावसरे राहुकेत्वोः स्वक्षेत्रे दर्शिते ।

अत्रेन्द्रदैवत्यच्छन्दश्श्लोकेन नीचोऽप्युक्तः । अनेन नीचगखेटेनाऽपि राजयोगो वाच्य इति व्यञ्जितम् । ते त एव ग्रहाः अस्तनीचाः अस्तमितनीचाश्च भवन्ति । कदा इति चेदुच्यते । वृत्तमौपच्छन्दसिकं वा ।

"पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ।"

इति प्रमाणात् । छन्दांसि चत्वारि । अतश्चतुष्टयगते नीचत्वस्याऽस्तमितत्त्वं, अथवा भङ्गो भवति । कस्मिन् ग्रहे चतुष्टयगते एवंविधनीचभङ्गो भवति? उच्चनीचा ह्यत्र कथिताः । तस्मान्नीचगस्योच्चभपे नीचभपे वा लग्नाच्चन्द्राद्वा चतुष्टयगते नीचभङ्गराजयोगो भवतीत्यत्र किं नाम प्रमाणमपेक्षते । उक्तं च—

"नीचगभेशोच्चेशे केन्द्रे नृपतुल्यः" इति ।

सारावल्यां च—

"नीचस्थितो जन्मनि यो ग्रहः स्यात्तद्राशिनाथोऽपि तदुच्चनाथः ।
स चन्द्रलग्नाद्यदि केन्द्रवर्ती राजा भवेद्धार्मिकचक्रवर्ती ॥"

इति । ते अस्तनीचा अन्योन्यास्तगतोच्चग्रहैर्नीचतुल्या भवन्ति । अन्योन्यदृष्टियुक्तावुच्चग्रहौ नीचं फलमेव कुर्यातां कारकत्वसंज्ञासिद्ध्यभावे इति भावः । एवमन्योन्यदृष्टियुक्तनीचग्रहौ शुभफलं कुर्यातामित्यप्यूह्यम् । अत्र श्लोकार्धस्थितैः षण्मात्राभिरष्टमात्राभिर्द्वादशाक्षरैश्च षष्ठाष्टमव्ययाधीशैरपि राजयोगश्चिन्त्य इतीन्द्रदैवत्यच्छन्दसा व्यञ्जितम् । विस्तरतोऽन्यत्र वक्ष्यते ।

वृत्तं पुष्पिताग्रा पञ्चाशदक्षरवती । अतो ग्रहाणां राशीनां चाक्षराश्च सूचिताः । अज इति सूर्यस्य । अकारात् जायत इति अजः सर्वे अक्षरा इत्यर्थः । संवृताकारादेव सर्वेऽक्षरा उद्भूताः । अत एवोक्तम् "अक्षराणामकारोऽस्मि" इति । अज इति अच् । सूर्यस्य अचः स्वरा इत्यर्थः । कुजादीनां कवर्गादयः पूर्वमेवोक्ताः । परिशेषात् यरलवशषसहाः ळक्षौ च चन्द्रस्य । अज इति राहोश्चेति पक्षे तुल्यास्यप्रयत्नतया अच्सजातीयाः

शषसहाः राहोर्भवन्ति। अस्मिन् पक्षे चन्द्रस्य शेषा एव। अज इति मेषपर्यायत्वात् स्वराः नित्यं स्वरसंयुक्ता अनुस्वारविसर्जनीयादयश्च अजादिषड्राशीनां भवन्ति। झषवणिजौ इति निर्देशात् तुलादिझषपर्यन्तषड्राशीनां कादिवर्गाः यरलवाश्च। शादय ऊष्माणः ळक्षौ च पूर्वोक्तहेतुना अचमनुसृत्य मेषादीनां भवन्ति। तथा च कृष्णीये—

"वर्गाः कचटतपाद्या लोहितसितसौम्यजीवसौराणाम्।
सूर्यस्याकाराद्याः शशिनो वर्णा यकाराद्याः॥
मेषादौ द्वादशकेऽकादीन् विनियोजयेद्वर्णान्।
इत्येवं ब्रुवतोऽन्ये परे तु लग्नादिमिच्छन्ति॥" इति।

पुष्पितत्वमार्तवोपलक्षणम्। वृत्तमौपच्छन्दसिकम्। अत्र श्लोकार्धे षण्मात्राः, अष्टमात्राः, द्वादशाक्षराणि च सन्ति। अजादि पञ्च चैकपदेन समस्यन्ते। अनेन स्त्रीणां रजोदर्शनमारभ्य पञ्चमदिनात्प्रभृति दीर्घायुरपत्यकरः संभोगो भवति। षष्ठाष्टमादियुग्मरात्रिषु पुरुषप्रजा जायन्त इति सूचितम्। एतासु द्वादशसु रात्रिषु नखदशनादिक्षतानि च न कार्याणीत्यपि द्वादशाक्षरैः सूचितम्। चतुर्थरात्रौ संभोगयोग्याऽप्यल्पायुःपुरुषप्रजाजनकहेतुत्वात् स्त्री श्रेयस्कामेन न गम्येति सिद्धत्वात् पञ्चमादिद्वादशरात्रय एवोक्ताः। अथवा विषमपादस्थद्वादशाक्षरैः समपादस्थत्रयोदशाक्षरैश्च संयोगयोग्यदिवसाश्चतुर्थदिवसवर्जं द्वादश, अन्यथा त्रयोदश इति सूचितम्। पुनः अजवृषभमृगाङ्गनाकुलीराः अः विष्णुः तस्मात् जायन्त इति अजाः सकलस्थावरजङ्गमानि। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति अजवृषभाः धर्मे निविष्टमतयो नराः। ये

"ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः।"

इति गृहस्थब्रह्मचर्यमनुतिष्ठन्ति तैः। मृग्यते इति मृगा। सन्तानार्थमेव केवलं संभोगाय मृग्यमाणा। तस्याः अङ्गनायाः भार्यायाः। अकुलीराः कुलीररहिताः रजोदर्शनमारभ्य अक्षरसङ्ख्यासूचितप्रथमतृतीयद्वितीयदिवस-रहिताः अकुलीराः, कुलीरशब्दसूचितचतुर्थदिवसरहिताश्च दिवसाः। दिवाकरादितुङ्गाः दिवाकरादयः सूर्यादिवासराः तेषु तुङ्गाः श्रेष्ठाः भवन्ति। रजोदर्शनमारभ्य चत्वारो दिवसाः श्रेयस्कामैर्वर्ज्याः, ऋतु-काले शिष्टा द्वादश उपादेया इति भावः। स्वतुङ्गसंज्ञा ह्यनेन श्लोकेन विहिता। मेषमासे हि सूर्यस्तुङ्गगः। स्वतुङ्गस्थे सूर्ये तुलादिमीनान्ताः षड्राशय एव रात्रिलग्नानि भवन्ति। अतो झषवणिजौ इति झषवणिजो-रन्तरे स्थितानि चत्वारि लग्नानि गृह्यन्ते। तान्यपि भोगयोग्यानि। दिवा भोगः मा भूत्, रात्रावपि पूर्वान्तिमयामौ वर्ज्याविति भावः चतुर्थदिवसस्नानमपीन्द्रदेवताकगुरुनक्षत्रभूतपुष्यस्नानवत्कार्यमित्यपीन्द्रदैवत्य-च्छन्दसा सूचितम्।

ऊक्तं च संहितायाम्—

"न दिनत्रयं निषेवेत्स्नानं माल्यानुलेपनं च स्त्री।
स्नायाच्चतुर्थदिवसे शास्त्रोक्तेनोपदेशेन॥
पुष्यस्नानौषधयो याः कथितास्ताभिरम्बुमिश्राभिः।
स्नायात्तथाऽत्र मन्त्रः स एव यस्तत्र निर्दिष्टः॥
युग्मासु किल मनुष्या निशासु नार्यो भवन्ति विषमासु।
दीर्घायुषः सुरूपाः सुखिनश्च विकृष्टयुग्मासु॥"

"न नखदशनविक्षतानि कुर्यादृतुसमये पुरुषः स्त्रियः कथञ्चित्।
ऋतुरपि दश षट् च वासराणि प्रथमनिशात्रितयं न तत्र गम्यम्॥"

इति । अजादिपञ्चानामेकपदेन समासेनेन्द्रदैवत्यच्छन्दसा च पञ्चमहापुरुषलक्षणं सूचितम् । कुजादिपञ्चग्रहाणां भागानां सम्मेलनादाप्तपञ्चनवत्यङ्गुलाधिकव्यायामत्वं सूचितम् । 'दशशिखी'त्याद्यष्टोत्तरशतेनाऽष्टोत्तरशतावधिकं व्यायामत्वं सूचितम् । उक्तं च संहितायाम्—

"षण्णवतिरङ्गुलानां व्यायामो दीर्घता च हंसस्य ।
शशरुचकभद्रमालव्यसंज्ञितास्त्र्यङ्गुलविवृद्ध्या ॥"

इति । आचार्यस्य छन्दश्शास्त्रपरिज्ञानमजानता भट्टोत्पलेन—"अत्र वृत्तभङ्गभयात्पूरणप्रत्ययान्तदशादय आचार्येण नोक्ताः" इत्युक्तम् । तदसत् । दशादिभागेष्वप्यन्त एव परमोच्चता । अत एवाऽऽचार्येण पुष्पिताग्रावृत्तं प्रयुक्तम् । 'दशशिखी'त्यष्टोत्तरशतसूचकशब्दैरष्टोत्तरशताङ्गुलपरिमितकायः पुरुष उत्तम इत्यपि सूचितम् । तथा च संहितायाम्—

"अष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम् ।
उत्तमसमहीनानामङ्गुलसङ्ख्या स्वमानेन ॥" इति ॥ १३ ॥

अथ वर्गोत्तमलक्षणमाह—

**वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-**
**पर्यन्तगाः सुशुभदा नवभागसंज्ञाः ।**
**सिंहो वृषः प्रथमषष्ठहयाङ्गतौलि-**
**कुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात् ॥ १४ ॥**

इति । चरगृहादिषु चरस्थिरोभयराशिषु पूर्वमध्यपर्यन्तगा नवभागसंज्ञाः वर्गोत्तमाः वर्गोत्तमसंज्ञकाः स्युः । चरगृहेषु प्रथमनवांशको वर्गोत्तमसंज्ञकः । स्थिरराशिषु मध्यमः पञ्चमनवांशः । उभयराशिषु नवमनवांशः । एते

नवांशवर्गोत्तमाः सुशुभदाः सुतरां शुभदा भवन्ति । "शुभं वर्गोत्तमे जन्म" इति वक्ष्यति । एष वर्गोत्तमः राशिनवांशकैक्यम् ।

नवभागसंज्ञा इति षडक्षरगतो हि नवभागः । अतः षष्ठभावसूचितशत्रुक्षेत्रगतेष्वपीत्यर्थः । सुशुभदा इत्यक्षरचतुष्टयेन सुखदत्वं सूचितम् । शत्रुक्षेत्रेऽपि वर्गोत्तमः सुशुभद इति भावः । सुशुभदा सु इत्यक्षरसङ्ख्यया सप्त । अस्तनीचा इति उच्चात्सप्तमराशिर्नीचः सु इत्यनेन सूचितः । नीचस्थोऽपि शुभद इत्यर्थः । एष न्याय्य एव । "नीचेऽतोऽर्धंह्रसती"ति परमनीचभागस्यैवार्धह्रासः । "द्विरुत्तमस्वांशकभत्रिभागगैः" इति वर्गोत्तमस्य द्विगुणम् । अनेन परमनीचव्यतिरिक्तभागस्थस्यैकाधिकेन गुण्यत्वम् । अतः सुशुभदो भवति । परमनीचभागे वर्गोत्तमः शुक्रस्यैव संभवति । तत्रैव गुणकहारकयोः साम्येन बुधराशिस्थितिः शिष्यते । अत एवोक्तं मन्त्रेश्वरेण—

"वर्गोत्तमांशस्थितखेचरोऽपि स्वक्षेत्रगस्योक्तफलानि तद्वत् ।"

इति । तद्वदित्यस्य "सपत्ननीचर्क्षगतोऽपि" इत्यर्थः ।

नवभागसंज्ञाः नव, भ, अग इति छेदः । नव इति नवांशः । भ इति द्वादशांशः । अग इति त्रिंशत्कलात्मकषष्ट्यंशः । एते नवांशद्वादशांशवर्गोत्तमाः षष्ट्यंशवर्गोत्तमाश्च सुशुभदाः शुभफलप्रदा भवन्ति । तथा च सारावल्याम्—

"वर्गोत्तमनवांशास्तथादिमध्यान्तगाश्चराद्येषु ।
सूनेः कुलमुख्यकरा द्वादशभागा स्वराश्याद्याः ॥"

इति । षष्ट्यंशपक्षे तु वर्गोत्तम इति वर्गेषु उत्तमत्वं सूक्ष्मत्वं दर्शयति । षष्ट्यंशः खल्वंशेष्वणिष्ठो भागः । अथवा उत्त इत्यक्षरसङ्ख्यया षष्टिः उत्तम इति सप्तमशब्दवत् षष्ट्यंशस्य द्योतकः

वर्गेषु उत्तमः । अतः वर्गोत्तमाः षष्ट्यंशाः । सुशुभदानवभागसंज्ञाः सुशुभभागाः दानवभागा इति द्विधा भवन्ति । दानवशब्दसाहचर्यात् सुशुभशब्दो देवानामुपलक्षणम् । अतः षष्ट्यंशाः देवभागा असुरभागा इति द्विधा विभक्ता इत्यर्थः । सुशुभ इत्यक्षरसङ्ख्यासूचितसप्तमपञ्चमचतुर्थांशाः देवभागा इत्यपि सूचितम् । एवमोजराशिषु । तत्र देवभागाः सुशुभदाः विशेषेण शुभफलप्रदा इति भावः । अनेन षष्ट्यंशस्य प्राधान्यं व्यञ्जितम् । उक्तं च पराशरेण—

"यत्र कुत्रापि संप्राप्तः क्रूरषष्ट्यंशकाधिपः ।
तत्र नाशो न सन्देहो मैत्रेयाजवचो तथा ॥
यत्र कुत्रापि संप्राप्तः कलांशाधिपतिः शुभः ।
तत्र वृद्धिश्च पुष्टिश्च मैत्रेयाजवचो तथा ॥"

इति । सारावल्यां च—

"नीचं गता द्वित्रिचतुर्ग्रहेन्द्राः षष्ट्यंशके शोभनवर्गयुक्ताः ।
स्वतुङ्गराश्यंशकसंयुता वा धरापतिर्धार्मिकचक्रवर्ती ॥" इति ।

वर्गोत्तमाः चरगृहादिषु सुशुभदानवभागसंज्ञाः चरगृहे सुशुभसंज्ञाः देवभागाः स्थिरगृहे दानवसंज्ञाः राक्षसभागाः उभयगृहे भागसंज्ञाः भं नक्षत्रं आगच्छन्ति इति भागाः । भागाः संज्ञाः येषां ते । जातकर्मकाले नक्षत्रेण संज्ञिताः नरा इत्यर्थः । नरभागा इति भावः । अत एव 'क्षितिजसितज्ञ' इति श्लोकव्याख्यानावसरे नवांशदेवताः चरराशिषु देवनृराक्षासाः, स्थिरेषु नृराक्षसदेवाः, उभयेषु राक्षसदेवनराश्च इति व्याख्यातम् । पराशरमतं तु चरनवांशकाः देवभागाः, स्थिरनवांशाः नरभागाः, उभयनवांशाः राक्षसांशाः इत्येव । आचार्यकं त्वत्र यथोपदेशं कर्तव्यम् ।

चरगृहादिषु पूर्वमध्यपर्यन्तगा वर्गोत्तमा भवन्ति। सुशुभदानव-भागसंज्ञा अपि ते वर्गोत्तमा भवन्ति। सुशुभाः देवाः। दानवाः असुरराक्षसाः। भागसंज्ञाः भ इति सप्तविंशांशः। अग इति त्रिंशत्कला-त्मकः षष्ट्यंशः। सप्तविंशांशे षष्ट्यंशे वा देवभागे असुरभागे वा स्थिता अपि वर्गोत्तमा भवन्ति। अनेन न केवलं वर्गोत्तमस्य श्रेष्ठत्वं किन्तु ऋक्षांशषष्ट्यंशयोर्देवासुरविभागस्यैव प्राधान्यमपि व्यञ्जितम्। अत एव तयोर्मेषादित्वकथनेन न दोषप्रसङ्ग इत्युक्तम्। यत्तु पराशरेण

"नक्षत्रेशाः क्रमाद्दस्रयमवह्निपितामहाः।
चन्द्रेशादितिजीवाहिपितरो भगसंज्ञितः॥
अर्यमार्कस्त्वष्टमरुच्छक्राग्निमित्रवासवाः।
निरृत्युदकविश्वेजगोविन्दवसवोऽम्बुपः॥
ततोऽजपादहिर्बुध्न्यः पूषा चैव प्रकीर्तिताः।
नक्षत्रेशास्तु भांशेशभांशसंख्या स्वभात्क्रमात्॥"

इत्युक्तं तत्पक्षे 'भवनसमांशकाधिपतयः स्वगृहात्क्रमशः' इत्यत्र भानां नक्षत्राणां वनं समूहः। तत्समांशकाधिपतयः सप्तविंशांशेशाः। स्वगृहात् स्वाश्रितराशेः। क्रमशः भवन्ति इति व्याख्येयम्। तदेष अपवादविधि-र्ऋक्षांशस्य मेषादित्वं बाधित्वेष्टं साधयति।

सिंहो वृषः प्रथमषष्ठहयाङ्गतौलिकुम्भाः सिंहः वृषभः मेषः कन्या धनुः तुलाधरः कुम्भश्च यथाक्रमम्। सूर्यात् त्रिकोणभवनानि मूलत्रिकोणराशयः भवन्ति। अत्र सिंहः वृष इति व्यस्तोक्त्या सूर्यचन्द्रयोः प्राधान्यं सूचितम्।

सूर्यादिति न केवलं सूर्यादिसप्तग्रहाणाम्। किन्तु सूर्यादि-नवग्रहाणामेव। कुम्भशब्दस्यावृत्त्या कुम्भ एव राहोर्मूलत्रिकोणराशिः। ततः पुनराद्योक्तसिंहः केतोर्मूलत्रिकोणभवनम्। तथा चोक्तम् —

" राहोर्वृषोच्चं केतोस्तु वृश्चिकं तुङ्गसंज्ञकम् ।
मूलत्रिकोणं कुम्भं च क्रियं मित्रभमुच्यते ।
एतत्सप्तमराशिस्तु केतोर्मूलत्रिकोणभम् ॥ " इति ।

अत्र सिंहः सूर्यस्य त्रिकोणं स्वगृहं च । वृषश्चन्द्रस्योच्चक्षेत्रं त्रिकोणं चेत्यादिषु पूर्वाचार्यैः काचिद्व्यवस्था कृता । यथा—

" सिंहे विंशतिरादितो गवि परे सर्वेंऽशकास्तुङ्गतो
मेषे द्वादश पञ्च योषिति परे तुङ्गाद्धयाङ्गे दश ।
जूके पञ्च घटे तु विंशतिरमी मूलत्रिकोणाह्वयाः
सूर्यादेः क्रमशो ग्रहस्य कथिताः शेषाः स्वराश्यंशकाः ॥ "

इति विद्यामाधवेनोक्तम् । पाणिनीयव्याकरणशास्त्रवत् " आकडारादेका संज्ञा " इति संज्ञान्तरस्य निषेधवचनाभावादस्मिन् शास्त्रे संज्ञान्तरेण न काऽपि क्षतिः । सिंहः सूर्यस्य त्रिकोणं स्वगृहं च । अत एव त्रिकोण-भवनानीत्युक्तम् । न तु त्रिकोणानीति । " स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणम् " इत्यत्रापि त्रिकोणस्य स्वक्षेत्राद्व्यतिरिक्तगुणो नोच्यते ।

अथवा सिंहे विंशत्यंशात्परतो नीचांशकसम्भवाद्विंशतेरंशानां त्रिकोणत्वम् । वृषे स्वोच्चस्य त्रिभागकत्वात् तत्परतस्त्रिकोणम् । कुजस्य दशभागात्परतो नीचांशकतया दश भागाः न तु द्वादश । अथवा प्रथमेति प्रथमद्रेक्काणग्रहणेन दश भागाः । बुधस्य षष्ठ इत्युक्त्या राशेः षष्ठो भागः । अथवा पञ्च भागा उच्चात्परतः । गुरोः हयाङ्गेत्युक्त्या प्रथमद्रेक्काणः । अथवा दश भागाः । शुक्रस्य तौलीत्युक्त्या यजमानस्य षष्ठांशग्रहणात्पञ्च भागाः । शनेः तुङ्गवन्नीचांशात्पूर्वं विंशतिरंशा इति ।

वृत्तं वसन्ततिलकं, सिंहोन्नता वा । अनेन किंशुकसिंहासनपारिजातादिवर्गैक्यानि व्यञ्जितानि । वर्गोत्तम इति तमप्प्रत्ययान्ततया त्रिवर्गैक्यमुत्तममिति च व्यञ्जितम् । तथा च पराशरः—

" षड्वर्गाः सप्तवर्गाश्च दिग्वर्गा नृपवर्गकाः ।
भवन्ति वर्गसंयोगे षड्वर्गे किंशुकादयः ॥
द्वाभ्यां किंशुकनामा च त्रिभिर्व्यञ्जनमुच्यते ।
चतुर्भिश्चामराख्यं च छत्रं पञ्चभिरुच्यते ॥
षड्भिः कुण्डलयोगः स्यान्मुकुलाख्यं च सप्तभिः ।
सप्तवर्गेऽथ दिग्वर्गे पारिजातादिसंज्ञकाः ॥
पारिजातं भवेद्द्वाभ्यामुत्तमं त्रिभिरुच्यते ।
चतुर्भिर्गोपुराख्यं स्याच्छरैः सिंहासनं तथा ॥
पारावतं भवेत् षड्भिर्देवलोकं च सप्तभिः ।
वसुभिर्ब्रह्मलोकाख्यं नवभिः शक्रवाहनम् ॥
दिग्भिः श्रीधामयोगः स्यादथ षोडशवर्गके ।
भेदकं च भवेद्द्वाभ्यां त्रिभिः स्यात्कुसुमाख्यकम् ॥
चतुर्भिर्नागपुष्पं च पञ्चभिः कन्दुकाह्वयम् ।
केरलाख्यं भवेत् षड्भिः सप्तभिः कल्पवृक्षकम् ॥
अष्टभिश्चन्दनवनं नवभिः पूर्णचन्द्रकम् ।
दिग्भिरुच्चैःश्रवा नाम रुद्रैर्धन्वन्तरी भवेत् ॥
सूर्यकान्तं भवेत्सूर्यैर्विश्वैः स्याद्विद्रुमाख्यकम् ।
शक्रसिंहासनं शक्रैर्गोलकं तिथिभिर्भवेत् ॥
भूपैः श्रीवल्लभाख्यं स्याद्वर्गा भेदैरुदाहृताः ॥ " इति ।

सिंहोन्नतावृत्तम् । अनेन राजयोगश्च सूचितः । वर्गोत्तमाश्चर-गृहादिष्वित्युक्तत्वाच्चरादिषु स्वक्षेत्रेषु वर्गोत्तमगः राजयोगकरः । गृहा-दिष्वित्युक्तत्वात् सर्वेषु ग्रहेषु स्वगृहेषु वर्गोत्तमगतेषु जातः राजा भवतीति सूचितम् । तथा च सारावल्याम्—

"वर्गोत्तमस्वभवनेषु गता ग्रहेन्द्राः
सर्वे यदा रुचिररश्मिशिखाकलापाः ।
उत्पद्यते जलधिसीमवर्ती धरित्रीं
यः पालयेत् क्षितिपतिर्जितशत्रुवर्गः ॥" इति ।

वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगाः सुशुभदाः । चरगृहादिषु चरादीनां चरादिषु । पूर्वमध्यपर्यन्तगाः चरस्य चरस्थिरोभयेषु पूर्वश्चरः स्थिरस्य स्थिरोभयचरेषु मध्यः उभयः उभयस्य उभयचरस्थिरेषु पर्यन्तगः स्थिरश्च सुशुभदा भवन्ति । वर्गोत्तमाश्च जीवरोगमृतिवर्गेषु उत्तमा भवन्ति जीवा भवन्तीत्यर्थः । चरगृहात् इषुपूर्वमध्यपर्यन्तगा इत्यपि च्छेदः । इषवः इन्द्रियाणि । "इन्द्रियाणि शरानाहुः" इति श्रीमद्भागवतम् । इषूणां पूर्वः अनादित्वादक्षरत्वाच्च इषुपूर्वः जीवः । पर्यन्तगा इति अन्तशब्दसूचितमृतिः । अतो मध्यशब्दः रोगपरः । एवं चरस्य चरादयः जीवरोगमृतयो भवन्ति । स्थिरस्य स्थिरोभयचरा मृतिजीवरोगा भवन्ति । उभयस्य उभयचरस्थिराः रोगमृतिजीवा भवन्ति । उक्तं च—

"चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः ।
द्वन्द्वे स्थिरोभयचराः जीवो रोगो मृतिः क्रमात् ॥"

इति ॥ १४ ॥

अथ मेषादिद्वादशराशिनिरूपणानन्तरं लग्नादिद्वादशभावान् निरूपयति—

**होरादयस्तनुकुटुम्बसहोत्थबन्धु-**
**पुत्रारिपत्निमरणानि शुभास्पदायाः ।**
**रिःफाख्यमित्युपचयान्यरिकर्मलाभ-**
**दुश्चिक्यसंज्ञितगृहाणि न नित्यमेके ॥ १५ ॥**

इति । होरादयः लग्नादयः तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिःफाख्यमिति भवन्ति । तनुः लग्नम् । अत्र शरीरं चिन्त्यम् । कुटुम्बं कलत्रपुत्रादिभरणीयजनो द्वितीयभावतश्चिन्त्यः । सहोत्थः सहोदरः तृतीयभावतश्चिन्त्यः । बन्धुः प्रथमबन्धुभूतमाता चतुर्थभावतश्चिन्त्या, पिता चापि बन्धुशब्देन ग्राह्यः । अतस्तस्मान्मारकस्थानभूतदशमतो मातृपितृमरणं चिन्त्यं भवति । आत्मबन्धुपितृबन्धुमातृबन्धुभागिनेयादयश्चापि चतुर्थभावाच्चिन्त्याः । पुत्रः पञ्चमभावतश्चिन्त्यः । पुन्नाम्नो नरकात् त्रायत इति पुत्रशब्दनिर्देशात् सर्वनरकादितस्त्राणहेतवो मन्त्रदेवतादयो व्यञ्जिताः । अरिः शत्रुः आन्तरशत्रुभूतरोगश्च षष्ठभावतश्चिन्त्यौ । पत्नी भार्या सप्तमभावतश्चिन्त्या । मरणं मरणतुल्यविपद्रोगद्रव्यनाशपराभवादयश्चाष्टमभावाच्चिन्त्याः । शुभशब्देन सर्वविधभाग्यधर्मादयश्च गृह्यन्ते । आस्पदं स्थानकृत्ये दशमभावतश्चिन्तनीये । "प्रतिष्ठाकृत्यमास्पदम्" इत्यमरः । आयः लाभः एकादशतश्चिन्त्यः । रिःफशब्दः पापरोगादीनपि गृह्णाति । ते द्वादशतश्चिन्त्याः ।

'लग्नादयस्तनुकुटुम्ब' इति वक्तव्ये कुतः 'होरादयस्तनुकुटुम्ब' इत्युपदिष्टमाचार्येण ? अत्रोच्यते । होरा इति चतुर्विंशति-

पर्यायशब्देन चतुर्विंशतितत्वानि ज्ञापयति । होरा: चतुर्विंशतितत्त्वानि आदयः पतयः येषां ते होरादयः द्वादशभावाः । अनेन द्वादशभावपानां होरासंज्ञा विहिता । यथा चतुर्विंशतितत्त्वानि पञ्चविंशं तत्त्वं जीवं तदाश्रयं षड्विंशं तत्त्वमीश्वरं चाश्रित्य तिष्ठन्ति तथैव भावपानामाश्रयस्थानस्थानपवशाद्भावपाक्रान्तराशीशाश्रितस्थानस्थानपवशादपि भावानां शुभाशुभफलानि वाच्यानि । तत्र विशेषतः प्राणमयस्य लग्नस्य पत्युः केन्द्रकोणोच्चस्वर्क्षादिस्थित्या भाग्ययोगा वाच्याः । अनेन

" लग्नाधिपाप्तभपतिस्थितराशिनाथ-
स्वोच्चस्वभेषु यदि कोणचतुष्टयस्थः ।
योगः स काहल इति प्रथितोऽथ तद्व-
ल्लग्नाधिपाप्तभपतिर्यदि पर्वताख्यः ॥ "

इत्यादिफलदीपिकोक्ताः काहलपर्वतादियोगा व्याख्याताः ।

अत्र तन्वाद्यष्टभावानामेकपदेन समासः । अनेनायमर्थः सूचितः । तन्वाद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् । यथाऽऽत्मनो धर्मसापेक्षत्वम् । धनस्य प्रवृत्तिसापेक्षत्वम् । पराक्रमस्यार्थागमसापेक्षत्वम् । सुखस्य धनव्ययसापेक्षत्वम् । सुतप्राप्तेर्धर्मसापेक्षत्वम् । शत्रुनिरसनस्य प्रवृत्तिसापेक्षत्वम् । कलत्रसुखस्यार्थागमसापेक्षत्वम् । मरणस्य सर्वव्ययसापेक्षत्वम् इति ।

पुनस्तन्वाद्येकादशभावानां प्रथमार्धनिवेशनम् । रिःफाख्यमिति द्वादशस्योत्तरार्धनिवेशनम् । अनेन सर्वेषां भावानां तेभ्यो व्ययस्थानं विशेषतश्चिन्तनीयमिति व्यञ्जितम् ।

अत एव जातकचन्द्रिकायाम् —

" भाग्यव्ययाधिपत्येन रन्ध्रेशो न शुभप्रदः । "

इत्यष्टमेशस्य भाग्यव्ययाधिपत्यहेतुना दोषः प्रोक्तः। तस्यैवाष्टमेशस्याऽऽयुः-स्थानाधिपत्यशुभत्वमपि वर्तते। अतो लग्नेशरन्ध्रेशयोरैक्ये आत्मनो धर्मसापेक्षत्वादायुःसापेक्षत्वाच्च रन्ध्रेशत्वप्रयुक्तदोषस्य न प्रसङ्गः। उक्तं च तत्रैव—

"रन्ध्रेशोऽपि विलग्नपो यदि शुभं कुर्यात्" इति।

अत्र अपिशब्देनेतदरदुःस्थानाधिपत्यप्रयुक्तमशुभत्वमपि नश्यतीति केचि-ज्जल्पन्ति। तन्न। अत्र रन्ध्रेशशब्देन भाग्यव्ययाधिपत्यप्रयुक्तरन्ध्रेशत्वमेव विवक्षितम्। अतो विलग्नपः भाग्यव्ययाधिपोऽपि शुभं कुर्यादिति भावः। अनेन षष्ठेशलग्नेशयोरैक्ये षष्ठाधिपत्यकृतदुष्टफलं दृश्यत एव। वृषभस्य "जीवशुक्रेन्दवः पापाः" इति, वृश्चिकस्य "सौम्यभौमसिताः पापाः" इति चात एवोक्तं चन्द्रिकायाम्। तदनुसारेणैवोक्तं मन्त्रेश्वरेण—

"शुक्रे वृश्चिकगे मदे मृतवधूः" इति।

अत्र लग्नषष्ठेशस्य सप्तमस्थितिर्दोषावहैवेति दर्शितम्। भौमे सप्तमगे वृषे मृतवधूरित्यप्यूह्यम्।

अपि च "उदयरविशशाङ्क" इति "मेन्द्वर्कास्पद" इति च वचनाभ्यां रविचन्द्रयोरपि लग्नतुल्यत्वं सूचितम्। अतः

"न रन्ध्रेशत्वदोषस्तु सूर्याचन्द्रमसोर्भवेत्"।

'पत्नी' इत्यस्य 'पत्नि' इति ह्रस्वत्वं कथम्?

"नटविटगायकगणिकाज्यौतिषमुखकन्दराणि यदि न स्युः।
वैयाकरणकिरातादपशब्दमृगाः क्व यान्ति संत्रस्ताः॥"

इति वैयाकरणा दैवज्ञानपहसन्ति। प्रायेण ज्योतिश्शास्त्रग्रन्था व्याकरणविधीनुलङ्घयन्ति। एष ग्रन्थ एव निर्दुष्टो दृश्यते। अतः 'तनुकुटुम्बे'

त्यादिसमस्तपदस्यैवं विग्रहः कार्यः। तनुश्च कुटुम्बश्च सहोत्थश्च बन्धुश्च एतेषां समाहारः तनुकुटुम्बसहोत्थबन्धु। पुत्रश्च अरिश्च पत्नी च एतेषां समाहारः पुत्रारिपत्नि। तनुकुटुम्बसहोत्थबन्धु च पुत्रारिपत्नि च मरणं च पुत्रारिपत्निमरणानि। अतः पुत्रादित्रयाणां समस्तत्वात् मरणस्य व्यस्तत्वाच्च तद्वच्छुभादित्रयाणां समस्तत्वात् रिःफस्य व्यस्तत्वाच्च पुत्रादि-चतुर्भावानां शुभादिचतुर्भावानां विशेषसापेक्ष्यं व्यज्यते। अनेन पुत्र-भावः पञ्चमनवमाभ्यां चिन्त्यः। षष्ठदशमाभ्यामरिभावश्चिन्त्यः। सप्तमैकाद-शाभ्यां कलत्रं चिन्त्यम्। मरणरिःफाभ्यां समस्तारिष्टानि चिन्त्यानीत्यूह्यम्। ग्रन्थान्तरेषु सम्यगेवैतत्प्रदर्शितम्। यथा "भवगौ द्वौ ग्रहौ स्त्रीद्वयं स्यात्" इत्येकादशभावस्य कलत्रचिन्ताविषयत्वम्।

तन्वाद्यष्टभावा ऐहिकराशयः। धर्मादित्रयः पारत्रिकराशयः। व्ययभावो धनानामिव सुकृतदुष्कृतानामपि व्ययत्वेन मोक्षराशिरिति पदत्रयेणोक्तिः सूचयति।

शुभास्पदायाः इत्यपि शुभास्पदाया एव शुभास्पदाया इति विगृह्येत। तत्राद्यः शु, भास्, पद, आय इति चतुर्धा विभज्येत। एते अक्षर-संख्यया पञ्च, चत्वारः, एकाशीतिः, दश च भवन्ति। अतः एतैः पञ्चमः, तुरीयः, एकाशीतितमः अथवा नवमः, दशमश्च सूचिताः। एते भावाः शुभास्पदायाः शुभस्यास्पदभूतलाभाः भवन्ति। पुनरेकपदसमा-सेनैतेषां पतीनां द्वयोस्त्रयाणां, चतुर्णां वा येन केन प्रकारेण सम्बन्धो विशेषशुभफलदो भवतीत्यपि सूचितम्। तथा च पराशरहोरायाम्—

"पञ्चमेशदशा या तु धर्मपस्य दशा तु या।
अतीव शुभदा प्रोक्ता कालविद्भिर्मनीषिभिः॥
समन्त्रनाथस्य तपोधिपस्य दशा शुभा राज्यसुतप्रदा स्यात्।

सकीर्तिनाथस्य सुखेश्वरस्य दशा तथा प्राहुरुदारचित्ताः ॥"

"सपञ्चमेशस्य तपोधिपस्य दशा भवेद्राज्यसुखार्थलाभा ।
तथैव मानाधिपसंयुतस्य सुतेश्वरस्याऽपि दशा शुभा स्यात् ॥
पञ्चमेशेन युक्तस्य मानेन्द्रस्य दशा शुभा ।
सुखेशसहितस्याऽपि धर्मेशस्य दशा शुभा ।
पञ्चमस्थानगस्याऽपि मानेशस्य दशा शुभा ॥
शुभाशुभस्थानगमानपस्य तथैव मानार्थसुखान्विता स्यात् ।
तदा नृणां सौख्यकरी भवेद्धि सुतेशयुक्तस्य च मानपस्य ॥"

"सुखेशो मानभावस्थो मानेशः सुखराशिगः ।
तयोर्दशां शुभां प्राहुर्ज्योतिश्शास्त्रविदो जनाः ॥
सुतेशमानेशसुखेशधर्मपा एकत्र युक्ता यदि यत्र कुत्र ।
तेषां दशा राज्यफलप्रदा तैर्युक्तग्रहाणामपि वै वदेद्वा ॥
वाहनस्थानसंयुक्तमन्त्रनाथदशा शुभा ।
सुखराशिस्थकर्मेशदशा राज्यप्रदायिनी ॥
आभ्यां युक्तस्य खेटस्य दृष्टियुक्तस्य वै तयोः ।
राज्यप्रदां दशां प्राहुर्विद्वांसो वेदचिन्तकाः ॥
कर्मस्थितस्य बुद्धीशदशा सम्पत्करी भवेत् ।
मानस्थिततपोधीशदशा राज्यप्रदायिनी ॥" इति ।

'शुभास्पदायाः' इत्यत्र शुभा इत्यपि पदच्छेदः । शुभाशब्दस्य मङ्गलदेवतेत्यर्थः ।

"शुभां हिरण्यप्राकारां समुद्रतनयां जयाम् ।"

इति लक्ष्म्यष्टोत्तरशतनामस्तोत्रम् । श्रीमद्रामायणे च—

" शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः। "
इति शुभाशब्दप्रयोगः सीतामुद्दिश्य। अतः शुभाशब्देन महालक्ष्मीर्गृह्यते। वृत्तं वसन्ततिलकम्। वसन्ताधिपः शुक्रश्च लक्ष्मीदेवताकः। अनेनापि लक्ष्मीवाचको भवति शुभाशब्दः। अतो नवमस्थानं विशेषभाग्यस्थानं लक्ष्मीस्थानं च भवति। विस्तरत उत्तरत्र वक्ष्यते।

अरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणि षष्ठदशमैकादशतृतीयभावाः। उपचयानि उपचयसंज्ञका भवन्ति। अनेनेतरे राशय अपचया इत्यपि व्यञ्जितम्। एके केचित् गार्ग्यादय एतत्संज्ञां न नित्यमनित्यमित्याहुरिति शेषः। अरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणि स्वतः उपचयान्यपि कारणान्तरैरपचयस्थानानि भवन्तीतिति केषाञ्चित्पक्ष इति सारः। तथा च गार्गिः—

" अथोपचयसंज्ञा स्यात् त्रिलाभरिपुकर्मणाम्।
न चेद्भवन्ति दृष्टास्ते पापैः स्वस्वामिशत्रुभिः॥ "

इति। एतन्नाचार्यस्य मतम्। आचार्येण सत्ययवनेश्वरादिपक्ष एवाङ्गीकृतः।

तथा च सत्यः—

" दशमैकादशषष्ठतृतीयसंज्ञानि जन्मलग्नाभ्याम्।
उपचयभवनानि स्युः शेषाण्यृक्षाण्यपचयाख्यानि॥ "

इति। यवनेश्वरश्च—

" षष्ठं तृतीयं दशमं च राशिमेकादशं चोपचयर्क्षमाहुः।
होरागृहस्थानशशाङ्कभेभ्यः शेषाणि चैभ्योऽपचयात्मकानि॥ "

इति। अथवा नित्यमित्यक्षरसङ्ख्यया दश। अतो दशमस्थानं नोपचयमित्याहुः। " त्रिषडायगताः पापाः " " भवरिपुसहजोपगैश्च शेषैः " इत्याद्यत्र

प्रमाणम् । उपचय इत्यन्वर्थसंज्ञया सर्वेऽपि ग्रहा उपचयगताः शुभफलप्रदा इति सूचितम् । दुःस्थानत्वेऽप्युपचयसंज्ञया षष्ठोऽपि शुभाशुभग्रहाक्रान्तः शुभफलप्रदो भवति । सर्वे ग्रहाः षष्ठगता भावहानिं कुर्वन्ति । अनिष्टभावस्यानिष्टेन जातकिन इष्टसम्पत्तिः ।

तथा च श्रीदेवकीर्तिः—

"सौम्याः षष्ठे पापास्तन्वर्थसुखारिधर्मधीद्यूने ।
कुर्युर्भावविपत्तिं शेषोपगताश्च तद्वृद्धिम् ॥"

इति । सत्यमते तु षष्ठगः पापोऽशुभफलप्रद एव । वृत्तं वसन्ततिलकम् । वसन्ताधिपः शुक्रः । रिःफोपचयान्युत्तरार्धेनोक्तानि । अतः शुक्रः रिःफे, उपचयेषु च बलिष्ठो भवतीति व्यञ्जितम् । उक्तं च जातकपारिजाते—

"स्वोच्चस्ववर्गदिवसे यदि राशिमध्ये
शत्रुव्ययानुजगृहे हिबुकेऽपराह्णे ।
युद्धे च शीतकरसङ्गमवक्रकाले
शुक्रोऽरुणस्य पुरतो यदि शोभनः स्यात् ॥"

"सोदरारातिगः शुक्रः शोकरोगभयप्रदः ।
तत्रैव शुभकारी स्यात् पुरतो यदि भास्करात् ॥" इति ।

रिःफाख्यमित्युपचयानि । रिःफाख्यं रिःफसंज्ञको द्वादशो भावः । आख्यमिति निर्देशोऽन्यत्राक्षरसंख्यया निर्देश इति सूचयितुम् । इति अक्षरसंख्यया शून्यं, षट् च भवति । सङ्कलनेन षट् । षष्ठभाव इत्यर्थः । 'उपचयानि' अक्षरसंख्यासङ्कलनेनाष्टमभावं सूचयति । एते च स्वतो दुःस्थानान्यपि पतीनामन्योन्यसम्बन्धात् शुभास्पदायाः शुभफलानामास्पदभूतलाभस्य राजयोगस्य कारका भवन्ति । उक्तं च उत्तरकालामृते—

" रन्ध्रेशो व्ययषष्ठगो रिपुपतौ रन्ध्रे व्यये वा स्थिते
रिःफेशोऽपि तथैव रन्ध्ररिपुभे यस्यास्ति तस्मिन्वदेत् ।
अन्योन्यर्क्षगता निरीक्षणयुताश्चान्यैरयुक्तेक्षिता
जातोऽसौ नृपतिः प्रशस्तविभवो राजाधिराजेश्वरः ॥ "

इति । 'शुभास्पदायाः । रिःफाख्यमित्युपचयानि' इति निर्देशेन चतुर्थ-दशमकोणसंबन्धेन पापानां मारकदुःस्थानपानां च दशा अपि शुभफलदा इति सूचितम् । तथा च पराशरहोरायाम्—

" षष्ठस्य सप्तमेशस्य नायको मानराशिगः ।
दशा तस्य शुभा ज्ञेया तथा तेन युतस्य च ॥
एको द्विसप्तमस्थाननायको यदि सौख्यगः ।
तेन युक्ता दशा ज्ञेया शुभाः प्राहुर्मनीषिणः ॥
षष्ठाष्टमव्ययाधीशाः पञ्चमाधिपसंयुताः ।
तेषां दशा च शुभदा प्रोच्यते कालवित्तमैः ॥ "

" पञ्चमेशेन युक्तस्य ग्रहस्य शुभदा दशा ।
तथा धर्मपयुक्तस्य दशा परमशोभना ॥
पापदृष्टस्य खेटस्य दशा राज्यप्रदायिनी ।
शुभयुक्तस्य खेटस्य दशा द्रव्यप्रदायिनी ॥
सपञ्चमेशलग्नेशदशा राज्यप्रदायिनी ॥ " इति ॥ १५ ॥

संज्ञान्तराण्याह—

**कल्पः स्वविक्रमगृहप्रतिभाक्षतानि**
**चित्तोत्थरन्ध्रगुरुमानभवव्ययानि ।**
**लग्नाच्चतुर्थनिधने चतुरश्रसंज्ञे**
**द्यूनं च सप्तमगृहं दशमर्क्षमाज्ञा ॥ १६ ॥**

इति । त एव होरादयः । कल्पः लग्नम् । स्वविक्रमगृहप्रतिभाक्षतानि । स्वं धनम् । विक्रमः पराक्रमः । गृहम् । प्रतिभा बुद्धिः । क्षतानि इति सर्वदुरितानि गृह्यन्ते । चित्तोत्थरन्ध्रगुरुमानभवव्ययानि । चित्तोत्थः कामः भोगनारीणामपि ग्रहणम् । रन्ध्रः सर्वविधदुर्बलत्वम् । गुरुः पित्रादयश्च । मानः । भवः । व्ययः । एते क्रमेण लग्नादयः स्युः ।

लग्नाच्चतुर्थनिधने तुरीयाष्टमौ चतुरश्रसंज्ञे चतुरश्रसंज्ञकौ स्तः । द्यूनं च सप्तमगृहं सप्तमभावः द्यूनसंज्ञकः । दशमर्क्षं दशमभावः आज्ञा । आज्ञा इत्युक्तत्वाद्राज्यस्थानं च भवति ।

भवशब्दमावर्त्य द्वादशतमो भावो भवव्ययः भवति । भवः संसारः । भवव्ययः मोक्षः । अतो द्वादशतो मोक्षचिन्ता कर्तव्येति व्यज्यते ।

प्रतिभाक्षतं वा षष्ठभावः । अनेनाऽऽभिचारादि गृह्यते । उक्तं च—

"षष्ठेन च तदीशेन चाभिचारादिलक्षणम् ।" इति ।

द्यूनं च सप्तमगृहं सप्तमभावचिन्तायां द्यूनं च चतुरश्रसंज्ञको भवति । वृत्तं वसन्ततिलकम् । अतः कलत्रकारकशुक्रस्य चतुरश्रभावचिन्तायां सप्तमोऽपि चिन्तनीय इत्यर्थः ।

चतुर्थनिधने इति समस्तत्वात् सङ्कलनलब्धद्वादशराशिरपि चतुरश्रं भवति । अत एवोक्तं मन्त्रेश्वरेण—"सिताद्व्ययसुखाष्टगैः" इति । अनेन चतुष्टयवच्चतुरश्रस्थानान्यपि चतुर्थनिधनसप्तमव्ययरूपचतुःस्थानानि भवन्ति । विस्तरतः कलत्रभावनिरूपणावसरे वक्ष्यते ।

व्ययानीति नपुंसकत्वं कथम् ।

"अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ।"

इति ह्यमरः । अतः "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति पाणिनीयसूत्रेण "व्ययाश्च" इत्येव वक्तव्यमिति चेदुच्यते । अत्र चित्तोत्थरन्ध्रं,

गुरुमानं, भवव्ययं इति पदत्रयाणां द्वन्द्वसमास इष्यते। भवाख्यो व्ययं अक्षरसङ्ख्यया एकादशभावः भवव्ययम्। अनेनैव सूचयत्यन्यत्राप्यक्षरसङ्ख्या निर्देशः कृत इति। गुरुश्च मानं च एतयोः समाहारः गुरुमानम्। गुरुरिति नवमभावः। मानमिति गुरुशब्दसाहचर्यादक्षरसङ्ख्यया च पञ्चमो भावः। चित्तोत्थाद्रन्ध्रं इति विग्रहेण चित्तोत्थरन्ध्रं द्वितीयभावः। एते द्वितीयपञ्चमनवमैकादशभावाः। स्वविक्रमगृहप्रतिभाक्षतानि स्वस्य अर्थस्य अर्थाश्रितानि विक्रमगृहप्रतिभाक्षतानि शौर्यक्षेत्रप्रगल्भत्वाद्यैश्वर्याणि क्षतानि अपचयश्च चिन्त्यानीति। कल्पः मुख्यः पक्षः। प्राधान्येनावगन्तव्यमिति भावः। द्वितीयपञ्चमनवमैकादशभावपानां मिथः सम्बन्धो धनवृद्धिकरः, तेषां दुःस्थानतदीशसम्बन्धो धनक्षयकर इति सारः। तथा चोत्तरकालामृते—

"द्वेष्वायाङ्कगृहेश्वराः कतिपयाः सर्वेऽपि वा खेचराः
सम्बन्धत्रयगा बलेन सहिता लक्षाधिपं कुर्वते।
षष्ठाष्टव्ययभावपैर्यदि भवेत्तत्र क्षयर्णप्रदा-
स्तत्तत्खेटदशाविपाकसमये शत्रोर्भयं चादिशेत्॥" इति।

अर्थान्तरस्यापि ध्वनिः। स्वविक्रमगृहप्रतिभाक्षतानि स्वात् विक्रमगृहं चतुर्थभावः। प्रतिभा पञ्चमभावः। अक्षतं धर्मः नवमभावः। चित्तोत्थरन्ध्रगुरुमानभवव्ययानि चित्तोत्थः सप्तमभावः। रन्ध्रगुरुमानः रन्ध्रात् गुरुः चतुर्थः तस्मान्मानः लग्नं चिन्त्यभावो वा। भवव्ययं भवाद् व्ययः दशमभावः। एते चिन्ताविषयकभावस्य केन्द्रत्रिकोणभावा अपि शुभपापयोगदृष्टिवशाद्भावस्य वृद्धिं हानिं वा कुर्वन्तीति। कल्पः भावचिन्ताविधिः। तथा च मन्त्रेश्वरः—

"तत्तद्भावत्रिकोणे स्वसुखमदनभे चास्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुः सकलशुभकरीमन्यथा चेत्प्रणाशं
मिश्रं मिश्रैर्ग्रहेन्द्रैः सकलमपि तथा मूर्तिभावादिकानाम् ॥" इति ।

उद्धर्षिणीवृत्तं वाऽयं पूर्वश्लोकश्च । विशेषहर्षकारित्वं चन्द्रस्य । स च चन्द्रः पूर्वश्लोकोक्तोपचयगो यदि राजयोगकरो भवति । अस्मिन् श्लोके दशमर्क्षमाज्ञेत्युक्तत्वात् तद्राजयोगस्यान्यसाहाय्यापेक्षकत्वं चात्र व्यञ्जितम् । कल्प इति व्यस्तोक्तिः । द्यूनं च सप्तमगृहमिति दशमभावेन सह चतुर्थपादे निवेशनम् । अनेन जन्माधिपस्य द्यूनस्थितिरथवा दशमस्थितिः पूर्वोक्तराजयोगस्य सहकारिणी भवति । तथा चोक्तं सारावल्याम्—

"लग्नाच्छशी त्रिरिपुलाभनभःस्थलेषु
भूमावखण्डितगतिः पृथिवीश्वरः स्यात् ।
दृष्टः सुरेन्द्रगुरुणा न च वीक्षितोऽन्यै-
र्जन्माधिपो दशमगः स्मरगोऽथवा स्यात् ॥"

इति । भावगणने गुरुशब्दनिवेशनाद्गुरुदृष्टेः साहाय्यमपि व्यञ्जितम् ।

प्रतिभाशब्दोऽपि पूर्वश्लोकोक्तशुभाशब्दानुकरणमेव । अतः पञ्चमस्थानमपि लक्ष्मीस्थानं भवति । आह च भगवान् पराशरः—

"लक्ष्मीस्थानं त्रिकोणं तु विष्णुस्थानं च केन्द्रकम् ।" इति ।

चित्तोत्थ इति सप्तमस्य संज्ञा । वृत्तं वसन्ततिलकम् । वसन्ताधिपः शुक्रः । वसन्तश्च कामजनकः । अतः शुक्रस्य सप्तमस्थितिः कामोद्दीपकव्यञ्जका इति सूचितम् । चित्तशुद्धिर्हि शास्त्रेषु विधीयते । अतः सप्तमशुद्धिरभिप्रेताऽऽचार्येण । न्याय्यमेतत् । पापाः सप्तमगा अनिष्टं कुर्वन्ती-

त्यत्र न सन्देहः। शुभेषु शुक्रस्य स्थितिः कलत्रबहुत्वसूचका। बुधः क्लीबः। अतः

"क्लीबेऽस्ते वा भवति भवगौ द्वौ ग्रहौ स्त्रीद्वयं स्यात्॥"

इति वचनेनानिष्टफलदः। चन्द्रः कृष्णपक्षे पापः शुक्ले शुक्रवद्भवति। गुरोः सप्तमस्थितिः दिग्बलभूतलग्नात्सप्तमत्वेन दिङ्नीचत्वं करोति। अतः सप्तमशुद्धिरेव शुभावहा। अनिष्टाध्याये विस्तरतो वक्ष्यते।

दशमर्क्षं दशमभावः आज्ञा आज्ञास्थानं भवेद्यदि लग्नाधिपाश्रितस्थानं यदि भवेत्। यत्र राजा स्थितस्तद्ध्याज्ञास्थानम्। तदा सप्तमगृहं सप्तमभावः, दशमाद्दशमभावः द्यूनं च भवति। 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्यस्माद्धातोर्गत्यर्थेऽधिकरणार्थेक्तान्तो द्यूनशब्दः। 'दिवोऽविजिगीषायाम्' इति निष्ठातस्य नत्वम्। 'क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणे क्तः। दीव्यते गम्यते अथवा पद्यते अस्मिन्निति द्यूनं पदं भवति। लग्नाद्यावति भे लग्नेशस्तस्मात्तावति भे पदं वर्तत इति भावः। एवमितरेषां भावानामपि द्रष्टव्यम्। तथा च जैमिनिः—

"यावदीशाश्रयं पदमृक्षाणाम्॥ स्वस्थे दाराः॥ सुतस्थे जन्म॥"

इति। (अत्र 'स्व' इत्यक्षरसङ्ख्यया चतुर्थो भावः। सुत इत्यक्षरसङ्ख्यया सप्तषष्टिः, अथवा मण्डलशुद्ध्या सप्तमो भावः)

प्रयोजनं तु पदसंज्ञाविधानादेव स्पष्टम्। अस्मिन् पदे पव गम्यते जातेन। दशानाथो भावाधिपत्येनाऽऽश्रयेण वा मात्रं न फलकारी भवति। किन्तु यत्पदाधिपो यत्पदाश्रितस्तत्फलमपि स्वदशाभुक्तिषु ददातीत्यवगन्तव्यम्। पदसम्बन्धरहितो ग्रहः फलदानेऽशक्तो भवति।

कल्पादिषड्भावानां प्रथमपादनिवेशनम्। इतरेषां द्वितीयपादनिवेशनम्। अनेनैतेऽदृश्यार्धे दृश्यार्धे च भवन्तीति सूचितम्। लग्नादिषड्भावा अदृश्यार्धगताः। इतरे दृश्यार्धगताः॥ १६॥

अथ कण्टकादिसंज्ञाः प्राह—

**कण्टककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम्।**
**तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च॥ १७॥**

इति। सप्तमलग्नचतुर्थखभानां कण्टककेन्द्रचतुष्टयसंज्ञाः कण्टकाः केन्द्राः, चतुष्टया इति तिस्रः संज्ञाः सन्ति। तेषु यथाभिहितेषु यथाक्रममित्यर्थः। कीटनराम्बुचराः पशवश्च, कीटराशयः नरराशयः जलचरराशयः चतुष्पाद्राशयश्च बलाढ्याः स्युः। कीटराशिः सप्तमकेन्द्रो यदि भवेत् तदा बलाढ्यः। नरराशिर्लग्नं यदि भवेद् बलिष्ठः। जलचरराशिश्चतुर्थे बलिष्ठः। चतुष्पाद्राशिर्दशमे बलिष्ठः। कीटादिविभागस्त्वाचार्येण प्रत्येकं नोक्तः "मत्स्यौ घटी" इति श्लोकेनैव सिद्धत्वात्।

उक्तं च भगवता गार्गिणा—

"नृयुक्तुला घटः कन्या पूर्वार्धं धनुषस्तथा।
लग्नस्था बलिनो ज्ञेया एते हि नरराशयः॥
चतुर्थे कर्कटो मीनो मकरार्धं च धन्विनः।
पश्चिमं बलिनो नित्यमेते हि जलराशयः॥
सप्तमे वृश्चिकः कीटो बलवान् परिकीर्तितः।
धन्व्यन्तार्धाजगोसिंहा बलिनः खे चतुष्पदाः॥"

इति। अत्राऽर्धशब्देन धन्व्यन्तात्परमव्यवहितार्धं, अथवा मकरार्धं गृह्यते।

'तेषु यथाभिहितेषु बलाढ्या' इत्यनेन ते सप्तमलग्नचतुर्थखभावा उत्तरोत्तरं बलवत्तरा इति व्यञ्जितम्। सप्तमापेक्षया लग्नकेन्द्रस्य बलाधिक्यम्। तदपेक्षया चतुर्थस्य, दशमः केन्द्रेषु बलवत्तमः। किंच कण्टक, केन्द्र, चतुष्टय, संज्ञा इतिवत् सप्तम, लग्न, चतुर्थखभानामित्यस्य स्थित्या सप्तमः विशेषेण कण्टकः, लग्नं विशेषेण केन्द्रः, चतुर्थखे चतुष्टये इत्यपि व्यञ्जितम्। कण्टकशब्देन सप्तमस्य मारकत्वं सूचितम्। अत एव तस्य केन्द्रेष्ववरत्वम्। लग्नस्य विशेषतः केन्द्रसंज्ञा तस्य त्रिकोणसंज्ञाप्राबल्यनिवृत्त्यर्थम्। चतुर्थदशमौ प्रबलौ केन्द्रौ।

अत एवोक्तं पराशरहोरायाम्—

"पञ्चमं नवमं चैव विशेषधनमुच्यते।
चतुर्थं दशमं चैव विशेषसुखमुच्यते॥" इति।

वृत्तं चारणगीतम्। "चारणगीतमिदं भभभागौ" इति लक्षणात्। चारणगीतत्वं शुभानाम्। केन्द्रस्य कण्टकत्वमप्युक्तम्। अनेन शुभानां केन्द्राधिपत्यदोषः सूचितः। उक्तं च—

"केन्द्रेशस्य सतोऽसतोऽशुभशुभौ कुर्याद्दशाकोणपाः
सर्वे शोभनदास्त्रिवैरिभवपा यद्यप्यनर्थप्रदाः।" इति।

दोधकवृत्तमिति केचित्। तत्पक्षे—"दोधकवृत्तमिदं भभभागौ" इति लक्षणम्। सिद्धचारणगीतो हि भगवान् लक्ष्मीरमणः। अतः केन्द्रस्थानं विष्णुस्थानं भवति। अथवा केन्द्र इति शब्द एव विष्णुपरः। कस्य ब्रह्मणः इन्द्रो नाथः जनकत्वेन विष्णुः केन्द्रो भवति।

अत एव पराशरेणोक्तम्—

"लक्ष्मीस्थानं त्रिकोणं तु विष्णुस्थानं च केन्द्रकम्।"

इति । शुभाशब्देन प्रतिभाशब्देन च त्रिकोणस्य लक्ष्मीस्थानत्वं पूर्वमेव प्रदर्शितम् । अत्र तु चारणगीतवृत्तेन राजयोगः सूचितः । पुरुषरूपविष्णोः मूलप्रकृतिरूपलक्ष्म्या संयोग एव योगः । अतः केन्द्रत्रिकोणेशयोः संबन्धः राजयोगकरः । तत्रापि दशमर्क्षस्याऽऽज्ञात्वेन दशमेशत्रिकोणेशयोः सम्बन्धः प्रबलत्रिकोणभूतनवमेशकेन्द्रेशयोः संबन्धश्च विशेषफलप्रदौ । धर्मकर्मपयोः सम्बन्ध एव पूर्णराजयोगः । अत्र कण्टकत्वात् सप्तमं केन्द्रत्रिकोणत्वात् लग्नं च वर्जयित्वा चतुर्थदशमेशयोरन्यतरस्य पञ्चमनवमेशयोरन्यतरेण संबन्धः राजयोग इति फलितार्थः ।

तथा चोक्तं जातकचन्द्रिकायाम्—

"केन्द्रत्रिकोणपतयः संबन्धेन परस्परम् ।
इतरैरप्रसक्ताश्चेद्विशेषफलदायकाः ॥
केन्द्रत्रिकोणनेतारौ दोषयुक्तावपि स्वयम् ।
संबन्धमात्रात्प्रबलौ भवेतां योगकारकौ ॥" इति ।

फलदीपिकायां च—

"धर्मकर्मभवनाधिपती द्वौ संयुतौ महितभावगतौ चेत् ।
राजयोग इति तद्वदिह स्यात् केन्द्रकोणपयुतिर्यदि शङ्कः ॥" इति।
"क्षेत्रे स्थितिर्मिथो योगः दृष्टिः केन्द्रेषु संस्थितिः ।
त्रिकोणे वा स्थितिः पञ्चप्रकारो बन्ध ईरितः ॥"

इत्युक्तप्रकारेण बन्धः पञ्चधा भवति । तत्र मिथः क्षेत्रस्थितिर्गरिष्ठा । अत एव भाग्यकर्मपयोः कर्मभाग्यस्थिती राजयोगाध्याये पठिता मन्त्रेश्वरेण । यथा—

"कर्मेशो नवमगतश्च भाग्यनाथो मध्यस्थो भवति नृपो जनैः प्रशस्तः ॥"

इति । भाग्यकर्मपयोगस्य प्राशस्त्यम् । अतस्तयोर्भाग्ये वा कर्मणि वा स्थितिरपि राजयोगकर्यैव । इतरकेन्द्रकोणस्थाने युतिरपि भाग्यदैवेत्यपि सिद्धं विष्णुलक्ष्मीस्थानत्वात् । एवमेवेतरभावेष्वपि युतिरपि किञ्चित्फलदायिनी भवति । दुःस्थाने युतिरधमा ॥ १७ ॥

पणपरादिसंज्ञा आह—

**केन्द्रात्परं पणपरं परतश्च सर्व-**
**मापोक्लिमं हिबुकमम्बु सुखं च वेश्म ।**
**जामित्रमस्तभवनं सुतभं त्रिकोणं**
**मेषूरणं दशममत्र च कर्म विद्यात् ॥ १८ ॥**

इति । केन्द्रात्परं पणपरं भवति । केन्द्रस्यानन्तरराशेः पणपरसंज्ञा विधीयते । परतः पणपरस्यानन्तरं राशयः सर्वे सर्वे आपोक्लिमं आपोक्लिमसंज्ञका भवन्ति । केन्द्रात्परं पणपरं परत आपोक्लिममित्यर्थान्तरस्य ध्वनिः । केन्द्रपणपरापोक्लिमगतैर्ग्रहैर्बाल्ययौवनस्थविरत्वेषु फलं वाच्यमिति ।

उक्तं च सारावल्याम्—

"केन्द्रात्परं पणपरमापोक्लिमसंज्ञितं तयोः परतः ।
बाल्युवस्थविरत्वे क्रमेण फलदा ग्रहास्तेषु ॥" इति ।

उक्तभावानां संज्ञान्तराण्याह—वेश्म गृहं चतुर्थराशिः हिबुकं अम्बु सुखं च भवति । अम्बु इत्युक्त्या कूपादिचिन्ता चतुर्थभावतः कर्तव्येति दर्शितम् । सुतभं पञ्चमस्थानं त्रिकोणं त्रिकोणसंज्ञकं भवति । दशमं मेषूरणं च भवति । अत्र कर्म विद्यात् अयं कर्मसंज्ञकोऽपीत्यर्थः । कर्म प्रवृत्तिः । जातस्य प्रवृत्तिरस्माच्चिन्त्येति भावः । यज्ञादिकर्म च चशब्देन सूचितम् ।

सुतभं त्रिकोणम्। त्रिकोणं पञ्चमनवमभावौ। सुतभं सुतः राजा

"पार्थिवे तनये सुतः।"

इत्यमरः। तत्स्थानं भवति। राजकारकस्थानं भवतीत्यर्थः। त्रिकोणाभ्यां तदीशाभ्यां च प्रभुत्वं चिन्त्यमिति भावः।

द्वितीयपादेन चतुर्थभावः, तृतीयेन सप्तमभावः, चतुर्थेन दशमभावः, प्रथमपादेन केन्द्रश्चोक्ताः। अनेनापि सूचितं लग्नस्य विशेषतः केन्द्रसंज्ञा इति।

त्रिकोणं लग्ननवमपञ्चमभावाः सुतभं भवन्ति। तेभ्यः पुत्रभावश्चिन्त्यः। अस्तभवनं च सुतभं भवति। मेषूरणं च सुतभं भवति। अनेन पुत्रभावविषये केन्द्रत्रिकोणानां प्राधान्यं सूचितम्।

"गुरुलग्नेशदारेशपुत्रस्थानाधिपेषु च।
सर्वेषु बलहीनेषु वक्तव्या त्वनपत्यता॥"

इति सारावल्यामुक्तम्।

"वंशच्छेत्ता खमदसुखगैश्चन्द्रदैत्येज्यपापैः" इति वक्ष्यति।

जामित्रमस्तभवनम्। जामयः कुलस्त्रियः।

"जामिः स्वसृकुलस्त्रियोः"

इत्यमरः। ताः त्रायते इति जामित्रं श्वेतच्छत्रं राजचिह्नम्। अत एवोक्तं श्रीमद्रामायणे—

"नाराजके जनपदे वाहनैः शीघ्रगामिभिः।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः॥"

इति। अतः जामित्रं छत्रराशिः, अस्तभवनं अस्तस्य क्षिप्तस्य भस्य नक्षत्रस्य वनं तुरीयो भागः नक्षत्रपादः नवांशः भवति। नवांशक-

लग्नं छत्रराशिरित्यर्थः । एवं चरचक्रे । स्थिरे तु जामित्रं छत्रराशिः अस्तभवनं क्षिप्तभवनं भवति । पदभवनवत्क्षिप्तभवनं भवति । छत्रं तु छादकः । विन्ध्यवीथीप्लवङ्गमश्च सूर्यः । अतो वीथ्या एवाऽवगन्तव्यम् । आरूढादुदयो यावति स्थितस्तावति वीथ्याश्छत्रं स्थितम् । वृत्तं च सिंहोन्नता । अतः अस्तभवनं अस्तमिति विन्ध्येनास्तमितः विन्ध्यवीथी-प्लवङ्गमः सूर्यः व्यञ्जितः । तद्भवनं तत्स्थानम् । भवनं भचतुष्टयं राशिचतुष्टयं सिंहोन्नतं चेत् । सिंहान्तिमं वृषादिसिंहान्तराशिचतुष्टयं चेत् । सुतभं सुतस्य राज्ञः भं तारापथः वीथी त्रिकोणं सिंहत्रिकोणं भवति । वृत्तं मधुमाधवी वा । अतः मेषः ग्राह्यः । सूर्ये वृषादिचतुष्टये मेषः वीथी भवति । पुनः सूर्यस्थानं भवनं सिंहादिचतुष्टयं सिंह इति नृसिंहदैवत्यः तुलाधरः गृह्यते । तुलादिमकरान्तराशिचतुष्टये यदि भवेत् । वीथी सुतभं त्रिकोणं मधुमाधवसाहचर्यात् मिथुनं भवति । परिशेषात् कन्याकुम्भ-मीनमेषाणां कन्यात्रिकोणं वृषः वीथी भवति । उक्तं च प्रश्नमार्गे—

"मार्ताण्डे वृषतौलितश्च चतुरो राशीनतोऽन्यांस्तथा
प्राप्तेऽजो मिथुनं क्रमेण च वृषो वीथ्योऽथ यावान् भवेत् ।
आरूढादुदयोऽथ वीथिभवनात्तावद्गदेच्छत्रभं
ग्राह्यं स्यात्स्थिरचक्र एतदद्दढे लग्नांशकश्छादकः ॥" इति ।

वृत्तं वसन्ततिलकम् । उद्धर्षिणी सिंहोन्नता वा । अनेन चन्द्रशुक्रा-पोक्लिमैरुक्तराजयोगः सूचितः ।

तथा च सारावल्याम्—

"परमोच्चगतश्चन्द्रो यदि शुक्रेण दृश्यते ।
कुर्यान्महीपतिं शेषैः शुभैरापाक्लिमोपगैः ॥"

इति। उद्धर्षिणीवृत्तमेतत्। केन्द्रात्परं वरीयः पणपरं परतश्च आपोक्लिममिति व्याख्यया चन्द्रस्य त्रिकोणेषु केन्द्रापेक्षया पणपरस्थितिस्तदपेक्षया आपोक्लिमस्थितिः शुभावहा भवति। अत एव आपोक्लिमत्वात् त्रिकोणत्वाच्च नवमस्थानं चन्द्रस्य विशेषत उक्तम्।

तथा च सारावल्याम्—

"..... नवमे चन्द्रे यदा चेद्यशो
यस्येभस्य च दानलुब्धमधुपैश्चातुर्दिशं गीयते ॥"

इति। केन्द्रशब्दो लग्नपरो वा भवेत्। लग्नकेन्द्रं विना केन्द्रस्थस्य चन्द्रस्य विशेषशुभदत्वं वाच्यम्।

तथा च जातकपारिजाते—

"लग्नं विहाय केन्द्रस्थे चन्द्रे पूर्णकलान्विते।
गुरुभार्गवसंदृष्टे जातो राजा भवेन्नरः ॥" इति ॥

केन्द्रं अत्ति अततीति वा केन्द्रात् केन्द्रगमित्यर्थः। परं पणपरं पणपरसंज्ञं भवति। सर्वं सर्वे ग्रहाः केन्द्रात् केन्द्रगाः परतश्च यत्परं पणपरमिति संज्ञितं तत्रस्थाश्च भवन्ति चेत्। आपः जलम्। अक्लिमं अक्लमं ग्लानिरहितं भवन्ति। वृत्तं च सिंहोन्नता। सिंहासनेऽभिषिक्तः भवति। अत एव तज्जलं न क्लमकारीत्युक्तम्। केन्द्रपणपरस्थैः सर्वैर्ग्रहै राजा भवतीति सूचितम्। तथा च उत्तरकालामृते—

"चेल्लग्नादिचतुष्टये पणपरे सर्वेऽपि खेटाः स्थिता-
श्चापोक्लीमगृहे न चेदिह भवेज्जातो नरो भूपतिः।
चेन्न क्रूरयुतेक्षिताः शुभखगाश्चन्द्रोऽपि पूर्णस्तथा
स श्रीमान् सुजनेडितो बलयुतः पूर्णो न चेदूनता ॥"

इति ॥ १८ ॥

भावान् निरूप्य लग्नबलं परामृशति—

**होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा**
**केन्द्रस्था द्विपदादयोऽह्नि निशि च प्राप्ते च सन्ध्याद्वये ।**
**पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं ततो**
**दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यं त्रिकोणं च तत् ॥ १९ ॥**

इति । स्वामिगुरुज्ञवीक्षितयुता पतिना गुरुणा बुधेन वा वीक्षिता वा युता वा न अन्यैः स्वामिगुरुज्ञेतरैः न वीक्षितयुता होरा वीर्योत्कटा अतिवीर्यवती भवति ।

वृत्तं शार्दूलविक्रीडितम् । अनेन द्वादश भावा अपि सप्तग्रहैरेवं चिन्त्या इति व्यज्यते । अथवा होरा द्वादश भावा इति व्याचक्ष्महे । यथा—

"होरादयस्तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः ।
रिःफाख्यमिति"

इत्यत्र तन्वादयः होरा होरासंज्ञका इतीष्टसम्पत्तिः । द्वादशभावानां समुदायः होरा इति व्यवह्रियत इत्यर्थः । अतो होरा द्वादश भावाः स्वामिगुरुज्ञवीक्षितयुता पतिगुरुबुधयुतेक्षिताः नान्यैश्च वीर्योत्कटा भवन्ति । अत्र गुरुशब्देनाऽसुरगुरुरपि ग्राह्यः । अन्यशब्देन पापा ग्राह्याः । तथा चोक्तम्—

"यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात् तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानि-
र्निर्देष्टव्या जन्मिनां पृच्छतां वा ॥"

इति । अपि च—होराशब्दस्यावृत्त्या होरा द्वादश भावाः 'होरास्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा' लग्नेशगुरुसितबुधैः युताः वीक्षिता वा अन्यैः पापैः न न वीक्षितयुताः वीर्योत्कटा भवन्ति ।

तथा च फलदीपिकायाम्—

"यद्भावेष्वशुभोऽपि वोदयपतिस्तद्भाववृद्धिं दिशे-
द्दुःस्थानाधिपतिस्स चेद्यदि तनोः प्राबल्यमन्यस्य न ।
अत्रोदाहरणं कुजे सुतगते सिंहे झषे वा स्थिते
पुत्राप्तिं शुभवीक्षिते झटिति तत्प्राप्तिं वदन्त्युत्तमाः ॥"

इति । केन्द्रस्था राशयो वीर्योत्कटा इति शेषः । अनेन पणपरस्था मध्यबलाः, आपोक्लिमस्था हीनबला इति च सूचितम् । उक्तं च बादरायणेन—

"केन्द्रस्थाः स्युरतिबला मध्यबलाः पणपराश्रिता ज्ञेयाः ।
आपोक्लिमगाः सर्वे हीनबला राशयः कथिताः ॥"

इति । द्विपदादयः द्विपदादिराशयः अह्नि निशि च सन्ध्याद्वये प्राप्ते च वीर्योत्कटा भवन्ति, बलिनो भवन्ति, द्विपाद्राशयः अह्नि, चतुष्पाद्राशयः रात्रौ, कीटराशयो जलचरराशयश्च पूर्वापरसन्ध्ययोश्च वीर्योत्कटा भवन्तीत्यर्थः ।

होरा इति चतुर्विंशतिपर्यायत्वाच्चतुर्विंशतितत्त्वानि व्यञ्जयति । होरा लग्नं च भवति । लग्नं हि देहः । भूतपञ्चककर्मज्ञानेन्द्रियदशकतन्मात्रपञ्चकमनोऽहंकारमहत्प्रकृत्यात्मकचतुर्विंशतितत्त्वानि च देहः । तस्य देहस्य वीर्योत्कटत्वं जीवानुप्रवेशेनैव सिद्ध्यति । जीव एव चतुर्विंशतितत्त्वानां स्वामी भवति । अतो होरास्वामिशब्दो जीवद्योतकः । होरास्वामिगुरुज्ञ इत्यस्य होरास्वामिरूपजीवज्ञावित्यर्थः । जीवभूतगुरुज्ञाविति फलितार्थः । गुरुबुधौ जीवद्रव्यसूचकाविति भावः । धातुमूलद्रव्यग्रहाश्चोह्याः । आत्मकारकत्वात् सूर्यो ब्राह्मणत्वात् शुक्रश्च मूलद्रव्यसूचकौ भवतः । इतरे धातुद्रव्यसूचका इति सिद्धम् ।

तथा च पराशरः—

"राह्वारपङ्गुचन्द्राश्च विज्ञेया धातुखेचराः ।
मूलग्रहौ सूर्यशुक्रावपरा जीवसंज्ञकाः ॥"

इति । पूर्वार्धे मेषादिराशिषट्के विषयादयः पञ्च षट् सप्त अष्ट नव दश च सङ्ख्याः कृतगुणाः कृतज्याः अथवा कृतेन गुणिता इत्यर्थः । कृतशब्देन कृतयुगस्य कलिचतुष्कतया चत्वारि गृह्यते । कृतचतुर्गुणा इत्यर्थः । मानं राशिप्रमाणं भवति । तत उत्तरार्धे प्रतीपं प्रतिलोमेन कृतचतुर्गुणाः दशादि-पञ्चान्ताः प्रमाणं भवति । अनेन मीनमेषयोर्विंशतिः प्रमाणं भवति । वृष-भकुम्भयोश्चतुर्विंशतिरित्यादि । प्रश्नादिषु द्रव्यप्रमाणज्ञानार्थमत्र प्रमाणमुक्तम् ।

तथा चोक्तं ह्रस्वादिविभागः कृष्णीये—

"युक्तप्रमाणकायाः कुलीरमृगमिथुनचापाह्वाः ।
ह्रस्वाः कुम्भझषाजा वृषश्च शेषाः पुनर्दीर्घाः ॥"

इति । सत्यश्च—

"दीर्घाधिपतिर्दीर्घे गृहे स्थितोऽवयवदीर्घकृद्भवति ।"

इति । सहजं दुश्चिक्यं भवतीति शेषः । नवमं तपश्च तपः संज्ञकम् । तत् तदेव नवमं त्र्याद्यं त्रिकोणं च त्रित्रिकोणं च भवति । अनेन लग्नस्यापि त्रिकोणसंज्ञा विहिता । अन्यथा नवमस्य त्रित्रिकोणत्वाभावात् । त्रिषु आद्यं त्र्याद्यम् । नवमं त्रिकोणेषु आद्यं प्रधानं भवतीत्यर्थः । नवमस्थानं विशेष-तश्चिन्तनीयमिति भावः ।

तथा च सारावल्याम् —

"सर्वमपहाय चिन्त्यं भाग्यर्क्षं प्राणिनां विशेषेण ।" इति ॥ १९ ॥

अथ राशीनां वर्णा उच्यन्ते—

**रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डु-**
**श्चित्रः कृष्णः कनकसदृशः पिङ्गलः कर्बुरश्च ।**
**बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाः प्लवत्वं**
**स्वेशाशाख्यं दिनकरयुताद्भाद्द्वितीयं च वेसिः ॥ २० ॥**

इति । प्रथमभवनाद्येषु मेषादिराशिषु यथाक्रमं रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डुः चित्रः कृष्णः कनकसदृशः पिङ्गलः कर्बुरः बभ्रुः स्वच्छश्च वर्णाः स्युरिति शेषः । मेषः रक्तः, वृषः श्वेतः, मिथुनराशिः हरितवर्ण इत्यादि । राशीनां प्लवत्वं दिक्प्रवणत्वं स्वेशाशाख्यं राशीश्वरस्य दिगाख्यम् । ग्रहदिशो द्वितीयाध्याये वक्ष्यति । मेषवृश्चिकयोर्दक्षिणप्लवत्वम् । वृषतुलाधरयोराग्नेयप्लवत्वमित्यादि ।

मन्दाक्रान्तावृत्तम् । मन्देनापि आक्रान्तत्वं व्यञ्जितम् । स्वेशाशाख्यं स्वस्य ईशः प्रश्नराशिः जन्मलग्नं वा आशाख्यं भवति आशापूरणं कुरुते शत्रुजयं करोतीत्यर्थः । स्वलग्नं वा प्रश्नराशिर्वा यद्दिक्प्लवो भवति तां दिशं गतो राजाऽचिरेण शत्रून् जयतीति व्यञ्जितम् । तथा च सारावल्याम्—

"भवनाधिपतिदिशातः प्लव इति यवनैः प्रयत्नतः प्रोक्तम् ।
तत्प्लवगो विनिहन्यादचिरेण महीपतिः शत्रून् ॥"

इति । दिनकरयुतात् भात् सूर्यस्थितराशितः । द्वितीयं च वेसिः । द्वितीयं वेसिसंज्ञं च भवति । द्वादशं वासीति चकारेण सूचितम् ।

दिनकरयुताद्भात् दिनकरयुतात् नक्षत्रादित्यप्यर्थः । अनेन नरचक्रं स्त्रीडिम्भचक्रं च सूचिते । तथा चोक्तम्—

"यस्मिन् चरति भे भानुस्तदादौ त्रीणि मस्तके ।

इत्यादि नरचक्रे, "नारीचक्रे मस्तके त्रीणि भानि" इत्यादि स्त्रीचक्रे ।

'भाद्द्वितीयं च वेसिः' इति चकारेण तिर्यङ्मुखादिराशयो व्यज्यन्ते । उक्तं च कृष्णीये—

"ऊर्ध्वमुखो रविमुक्तो राशिर्युक्तस्त्वधोमुखो ज्ञेयः ।
अभिलषितं तिर्यक् स्यात्तेषां केन्द्राश्च तत्संज्ञाः ॥"

इति ।

"ऊर्ध्वमुखो यदि राशिर्होराप्रश्नेनास्य सिद्धिकरी ।
अन्ये विफले भवतः शुभयुतदृष्टे शुभाख्ये च ॥"

वृत्तं मन्दाक्रान्ता । जलधिषडगयतियुतम् । श्लोकेऽस्मिन् राशीनां प्लवत्वमुक्तम् । अनेन चतुर्थराशेरुक्तपाटलशब्देन राशीनां पाटलादिदेशाः सूचिताः। सप्तग्रहाणामपि देशाः सप्तमराशेरुक्तकृष्णशब्दसूचितकृष्णानद्यन्तादिदेशाः सूचिताः । उक्तं च राशिग्रहाणां देशाः जातकपारिजाते—

"क्रमात्पाटलकर्णाटचेरचोलवसुंधराः ।
पाण्ड्यकेरलकोलाख्यमलयानिलसैन्धवाः ॥
उदक्पाञ्चालयवनकोसलक्षितिसंज्ञिताः ।
मेषादिसर्वराशीनां वासदेशाः प्रकीर्तिताः ॥"

"लङ्कादिकृष्णासरिदन्तमारः सितस्ततो गौतमिकान्तभूपः ।
विन्ध्यान्तमार्यः सुरनिम्नगान्तं बुधः शनिः स्यात्तुहिनाचलान्तम् ॥"

इति । षड्यतियुतत्वात् मन्दव्यतिरिक्तानां षण्णां ग्रहाणां षट्छास्त्रकारकत्वं सूचितम् ।

मन्दाक्रान्तावृत्तेन आक्रान्तत्वस्य मन्दत्वं अथवा विषयत्वं व्यञ्जितम्। दिनकरयुतात् सूर्ययुक्तात्। भात् नक्षत्रात्। स्वेशाशाख्यं स्वेशाः आत्मेशाः अस्मिन् शास्त्रे प्राधान्येन प्रतिपादिताः राशीशाः। सप्त ग्रहाः। सप्तमं नक्षत्रमिति भावः। आशाः दिशः दश। दशमं नक्षत्रम्। आशाः अहङ्कारतत्त्वजनितानि पञ्चभूतपञ्चतन्मात्रदशेन्द्रियमनांसि एकविंशतिः आशाहेतुभूतानि। एतान्येव ब्रह्मक्षत्रभिन्नानि केवलानि क्षत्राणि यानि कर्मयोगविवरणभूताध्यात्ममहाभारते परशुरामेण हतानि। एकविंशतिमं नक्षत्रमित्यर्थः। आवृत्या पुनः स्वेशाशाख्यं अक्षरसंख्यया चत्वारि, पञ्च, पञ्च, एकं च भवति। सङ्कलनेन पञ्चदश। पञ्चदशं नक्षत्रम्। एतानि स्वेशाशाख्यं स्वः दिनकरः ईशः यस्याः सा आशा नाडी। जन्मान्तरार्जितवासनोद्वहनहेतुना नाड्यः आशा एव। पिङ्गलनाड्याख्यानि भवन्ति। पिङ्गलनाडीगुणयुतानि भवन्तीत्यर्थः। शाण्डिल्योपनिषदुक्तेन

"सुषुम्नायाः सव्यभागे इडा तिष्ठति। दक्षिणभागे पिङ्गला। इडायां चन्द्रश्चरति। पिङ्गलायां रविः। तमोरूपश्चन्द्रः। रजोरूपो रविः। विषभागो रविः। अमृतभागश्चन्द्रमाः।"

इति वचनेन दिनकरयुतादुक्तानि नक्षत्राणि विषाणि इति सारः। तथा च कालप्रकाशिकायम्—

"ऋक्षादर्कयुतात्सप्तपङ्क्तितिथ्येकविंशकाः।
भूकम्पोल्काब्रह्मदण्डध्वजसंज्ञास्त्वमी विषाः॥"

इति। पञ्चप्राणदशेन्द्रियमनोबुद्ध्यात्मकसूक्ष्मशरीरद्योतकात्यष्टिच्छन्दः प्रयुञ्जानेनाऽऽचार्येण सूक्ष्मशरीरगुणमाश्रित्यैवं व्याख्येयमित्यपि सूचितम्।

मन्दाक्रान्तावृत्तेन "भाद्द्वितीयं च वेसिः" इत्यनेन च दिनकरयुताद्भान्नवत्रिपञ्चचतुर्थस्थचन्द्रकृतस्य खचरयोगस्य मन्दाक्रान्तत्वं, अथवाऽनिष्टप्रदत्वं सूचितम्। तथा च कालविधाने—

“ रविनक्षत्रमारभ्य चन्द्रर्क्षान्तं तु गण्यते ।
नव त्रीणि चतुः पञ्च योगोऽयं खचरं विदुः ॥
उपनीतौ वटोर्नाशः सीमन्ते च शिशुक्षयः ।
विवाहे विधवा नारी प्रयाणे मरणं ध्रुवम् ॥ ”

इति । मन्दाक्रान्तत्वं कूर्मस्य । अनेन कूर्मविभागः सूचितः । उक्तं च संहितायाम्—

“ नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा ।
भारतवर्षे मध्यात्प्रागादिविभाजिता देशाः ॥ ”

इति ॥ २० ॥

इति श्रीवराहमिहिरहोराव्याख्यायाम् अपूर्वार्थप्रदर्शिकायां
राशिप्रभेदो नाम प्रथमोऽध्यायः ॥

---

श्रीः

# ग्रहयोनिभेदाध्यायः ॥ २ ॥

प्रणामं मैथिलीजानिः प्रतिगृह्णातु मामकम् ।
यस्यांशलवसम्भूतो भगवान् भास्करः स्वयम् ॥

राशिस्वरूपनिरूपणानन्तरं ग्रहयोनिभेदादयो निरूप्यन्ते । तत्रादौ सूर्यादिग्रहान् कालात्मनो भगवत आत्माद्यवयवत्वेनोपदिशति—

**कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो**
**जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः ।**
**राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः**
**सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ १ ॥**

इति । दिनकृत् सूर्यः । कालात्मा कालपुरुषस्य आत्मा भवतीति शेषः । आत्मशब्देन देहाधिष्ठितजीवात्मा उच्यते । क्वचित् परमात्मा च । तुहिनगुः चन्द्रः । मनः अन्तःकरणम् । अत्र मन इति मनोबुद्ध्यहंकार-चित्तानामुपलक्षणम् । सत्त्वं कुजः । सत्त्वशब्देन हर्षशोकेष्वविकारकरं सत्त्वं विवक्षितम् । ज्ञः वचः वाक् । ज्ञ इति निर्देशात् ज्ञानं च । वच इत्यक्षरसङ्ख्यया चतुष्षष्टिः । अतः बुधः चतुःषष्टिकलाकारकश्चेति सूचितम् । जीवः गुरुः ज्ञानसुखे ज्ञानं सुखं च । जीवशब्दप्रयोगात्

आत्मेत्यपि गम्यते । तत्र सूर्यः परमात्मा अन्तर्यामी सर्वेषाम् । गुरुः जीवात्मा । सितः शुक्रः मदनः कामादिभोगः । चकारेण ज्ञानसुखे चेत्यूह्यम् । सितश्च मदन इति गुरोरपि मदनत्वं सूचितम् । दिनेशात्मजः शनिः दुःखम् ।

वृत्तं शार्दूलविक्रीडितम् । सूर्याश्वयतियुतम् । अनेन सप्त ग्रहाः द्वादशभावानां कारका इति गम्यते । कालात्मा इति सूर्यस्य आत्मकारकत्वम् । सूर्याचन्द्रमसोः पितृमातृकारकत्वं तु वक्ष्यति

"दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात् ।"

इति । सत्त्वं कुज इति विक्रमस्थानभूततृतीयभावान्तर्गतसहजविक्रमादीनां कारकत्वं सूचितम् । विक्रमविषयभूतशत्रुकारकत्वं च कुजस्य वक्तव्यम् । ज्ञो वच इति बुधस्य ज्ञानकारकत्वं विद्याकारकत्वं च स्तः । ज्ञ इति निर्देशात्

"विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"

इत्युक्तज्ञानिवत् सर्वभूतसुहृत्त्वं व्यञ्जितम् । अतो बुधो बन्धुकारकश्च भवति । पुनरपि ज्ञ इति निर्देशान्मोक्षकारकत्वं च । ज्ञ इति नामैकदेशे नामग्रहणमिति ज्ञातिकारकत्वं च सूचितम् । गुरुशुक्रावपि ज्ञानकारकाविति पूर्वमेवोक्तम् । गुरोरध्यात्मविद्याकारकत्वम् । शुक्रस्य लौकिकविद्याकारकत्वम् । सर्वविद्याकारकत्वं बुधस्य । जीव इति निर्दिष्टो गुरुः । विश्वजनकस्य ईश्वरस्य परमात्मनः पुत्राः खलु सर्वे जीवाः । अतो गुरोः पुत्रकारकत्वम् । ज्ञानसुखे इति सुखकारकत्वं च । ज्ञानसुखे योगज्ञानसाङ्ख्यज्ञानलब्धसुखे भवतः । अतो गुरोः साङ्ख्यज्ञानकारकद्वारा मोक्षकारकत्वं च । जीव इति कुटुम्बधनकारकत्वं च । अनेनैव लाभकारकत्वं च भवति ।

स मदनकारकोऽपि भवति । गुरोर्भर्तृकारकत्वं माङ्गल्यकारकत्वं च ग्रन्थान्तरेषु उक्ते । स्त्रीजातकाध्याये विस्तरतो वक्ष्यते । शुक्रः मदनः स्त्रीग्रहत्वात् कलत्रकारकः । सर्वसंसारसुखकामभोगकारकः । आन्दोल्यादि-सर्वाणि वाहनानि च शुक्रादेव चिन्त्यानि । दुःखमिति शनेः रोगमरणादि-सर्वारिष्टकारकत्वं ज्ञेयम् । दुर्गमं खं दुःखमिति व्युत्पत्त्या दुःखशब्दस्य मोक्षपर्यायत्वम् । अतः शनेरपि सर्वपुण्यपापक्षयद्वारा मोक्षकारकत्वं व्यञ्जितम् । आत्मकारकत्वात् सूर्यो मोक्षकारकः ।

तथा च सारावल्याम्—

" द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ
गुरुरिनतनयारौ भार्गवो भानुपुत्रः ।
दिनकररविजेड्यौ जीवभानुज्ञमन्दाः
सुरगुरुरिनसूनुः कारकाः स्युर्विलग्नात् ॥ "

इति । राहुकेतू अपि दिनेशात्मजावेव । सूर्यकृतच्छायारूपत्वात् । दुःखमिति तयोरपि दुःखप्रदत्वम् । आत्मजशब्देन पौत्रस्यापि ग्रहणम् । अतो दिनेशपौत्रस्य मान्देरपि दुःखप्रदत्वम् ।

कालात्मा दिनकृत् कालस्य आत्मा प्रथमांशाधिपः दिनकृत् वासराधिपः । दिनकृत् दिन इत्यक्षरसङ्ख्यया अष्टौ अष्टमांशकारीत्यर्थः । अतो दिनस्य प्रथमाष्टमांशाधिपो वासराधिपः । ततो यथाक्रममित्यर्थः । यथाक्रमेणैवास्मिन् श्लोके निर्देशात् । दिनकृत् अष्टमांशनाथः कालात्मा कालरूपी आत्मा परमात्मैव भवति । अनेन दिनमष्टधा कृत्वा वारेशात्प्रभृति यथाक्रमं नाथान् कल्पयेदित्यर्थः । अष्टमांशस्य कालात्म-नाथकत्वाद्ग्रहाधिपत्याभावान्निरीशत्वमपि दर्शितम् । अत्रापि ग्रहचतुष्टयं

पूर्वभाग उक्तम् । पञ्चमात्प्रभृति उत्तरपादे । अनेन 'रात्रौ पञ्चमवारतः गणनीयम्' इति च व्यञ्जितम् । आह च भगवान् पराशरः—

"रविवारादिशन्यन्तं गुलिकादि निरूप्यते ।
दिवसानष्टधा कृत्वा वारेशाद्गणयेद्बुधः ॥
अष्टमांशो निरीशः स्यात् शन्यंशो गुलिकः स्मृतः ।
रात्रिरप्यष्टधा भक्ता वारेशात्पञ्चमादितः ॥"

इति । दिनकृदेव दिनकृदिति वासरेशो वा अष्टमांशेशः । तथापि चोक्तम्—

"ग्रहा वारनाथादयो वासरस्य
प्रमाणाष्टभागाधिनाथाः क्रमेण ।
तथा यामवत्याश्च तत्पञ्चमाद्या
य आद्यंशनाथः स एवाष्टमस्य ॥"

इति । दिनधा अष्टधा कृन्ततीति वा दिनकृत् कालात्मा । कालात्मा कालस्य आत्मा कालनामकस्य उपग्रहस्य आत्मा इत्यर्थः । अनेन उपग्रहाः कालादयस्तन्त्रेण निर्दिष्टाः । तथा च जातकपारिजाते—

"उपग्रहा भानुमुखग्रहांशाः
कालादयः कष्टफलप्रदाः स्युः ॥
क्रमशः कालपरिधी धूमार्धप्रहरादयः ।
यमकण्टककोदण्डमान्दिपातोपकेतवः ॥"

इति । दिन इत्यक्षरसङ्ख्यया अष्टौ । दिनकृदिति निर्देशात् स्वेतराष्टग्रहाणां कारणभूतो रविरिति व्यञ्जितम् । अत आत्मभूतस्य रवेः

बलवत्त्वं प्रधानमिति व्यञ्जितम् । कालात्मादिषु ग्रहेषु बलवत्सु जातस्य ते आत्मादयो भावाः वीर्योत्कटा भवन्ति । तेषु दुर्बलेषु भावाश्च दुर्बला भवन्ति । तथाप्यात्मभूतस्य रवेर्दौर्बल्यं सर्वं हन्ति । आत्मानं विनेन्द्रियादीनां प्रयोजनाभावात् । मनोभूतत्वाच्चन्द्रबलेन सर्वकार्यार्थ-सिद्धिर्भवति ।

"आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियगणः क्रम एवमेषः ।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥"

इति संहितावचनेनाऽऽत्ममनसोरन्योन्याश्रयत्वादेकस्य बलवशादितरस्यापि बलसिद्धिः । अत एवोक्तमाचार्येण "उदगयने रविशीतमयूखौ" इति । अनेन सूर्यचन्द्रयोर्दुर्बलयोरितरैर्न प्रयोजनम् । तयोर्वीर्यवतोर्विबला अपीतरे शुभफलदाः । उक्तं च—

"चन्द्रार्कौ बलयुक्तौ कुजादयः प्रोक्तमार्गबलहीनाः ।
शुभफलदास्ते सर्वे दशासु योगेषु सञ्चिन्त्याः ॥"

इति ॥ गार्गिश्च—

"स्वोच्चगौ रविशीतांशू जनयेतां नराधिपम् ।
उच्चस्थौ धनिनं ख्यातं स्वत्रिकोणगतावपि ॥
अस्वं दिगम्बरं मूर्खं परपिण्डोपजीविनम् ।
कुरुतामतिनीचस्थौ पुरुषं शशिभास्करौ ॥" इति ।

चरकारकाश्चाप्यनेन श्लोकेन निर्दिष्टाः । यथा कालात्मा आदिन-कृत् इत्यपि पदच्छेदः । आदिशब्दस्यावृत्त्या कालात्मा आद्यादिनकृत्

भवति । आदीन् अस्मिन् शास्त्रे परब्रह्मतया प्रतिपादितस्य भगवतो विवस्वतः द्वादशमूर्तीः द्वादशार्कान् अथवा जगत्सृष्टिस्थित्यन्तकारिणो भगवतो वासुदेवस्य व्यूहावतारभूतान् केशवादीन् नमन्तीति आदिनाः द्वादश राशयः ये द्वादशार्कदैवत्याः केशवादिदैवत्याश्च । तान् कृन्तति चारवशादिति आदिनकृद् ग्रहः । ग्रहेषु यः स्वाश्रितराशिं अधिकं भुक्तवान् स आद्यादिनकृत् । स एव कालात्मा कालपुरुषस्य आत्मा भवति । आत्मकारको भवतीत्यर्थः । मनस्तु हिनगुः इति पदच्छेदः । हिनगुरिति हीनगुः

"अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत् ।"

इति न्यायात् । अत एव श्रीमद्रामायणे छन्दोभङ्गनिवृत्त्यर्थं

"अथ विजयमवाप्य वानरेन्द्रः समरमुखे सुरयक्षसिद्धसङ्घैः ।
अवनितलगतैश्च भूतसङ्घैर्हरुषसमाकुलितैः स्तुतो महात्मा ॥"

इत्यत्र हर्षशब्दस्य स्थाने हरुषेत्युक्तम् । आत्मकारकापेक्षया हीनाः न्यूनाः गावः रश्मयः भुक्तभागाः यस्य स हीनगुः । स मनः मन्त्री भवति । शरीरे मन एव जीवात्मनो मन्त्री । अमात्यकारक इति भावः । ततो न्यूनः सत्त्वं कुजः कुज इति तृतीयभावस्योपलक्षणम् । स हि तस्य कारकः । अमात्यकारकान्न्यूनभुक्तभागः सहोदरकारक इति भावः । ततो ज्ञो वचः चतुर्थभावसूचितमातृकारकः । ततो जीवः ज्ञानसुखे पञ्चमभावोपलक्षितपुत्रकारकः । असित इत्यपि पदच्छेदः । ततः षष्ठभावसूचितशत्रुस्थानीयज्ञातिकारकः । ततो मदनः दारकारकः । शार्दूलविक्रीडितं वृत्तं प्रयुञ्जानेनाऽऽचार्येण आत्मकारकनिर्णयविधौ सप्तग्रहा अष्टग्रहा वा विचार्या इति सूचितम् । तथा च जैमिनिः—

"आत्माधिकः कलादिभिर्न भोगः सप्तानामष्टानां वा । स ईष्टे बन्धमोक्षयोः । तस्यानुसरणादमात्यः । तस्य भ्राता । तस्य माता । तस्य पुत्रः । तस्य ज्ञातिः । तस्य दाराश्च ॥"

इति । दिनेशात्मजः दिनेश इति द्वादशराशीनामुपलक्षणम् । आत्मकारक-राश्यंशजः दुःखं जनयतीति शेषः । प्रायेण दुष्टफलं ददातीत्यर्थः । सूर्याश्वयतियुतशार्दूलविक्रीडितवृत्तेन मीनराशौ तुलाधरे च शुभदो भवतीति सूचितम् । तथा च जैमिनिः—

"पञ्च (१) मूषिकमार्जाराः । तत्र (२) चतुष्पादः । मृत्यौ (३) कण्डूः स्थौल्यं च । दूरे (४) जलकुष्ठादिः । शेषाः (५) श्वापदानि । मृत्यु वज्जाया (६) ग्निकणश्च । लाभे (७) वाणिज्यम् । अत्र (८) जल-सरीसृपाः स्तन्यहानिश्च । समे (९) वाहनादुच्चाच्च क्रमात्पतनम् । जलच-रखेचरखेटकण्डूजुष्टग्रन्थयश्च रिःफे (१०) । तडागादयो धर्मे (११) । उच्चे (१२) धर्मनित्यता कैवल्यं च ॥" इति ।

रविशीतगू राजानौ । सूर्यः दिने राजा । चन्द्रः रात्रौ राज्ञी स्त्रीग्रहत्वात् । क्षितिसुतः कुजः नेता दण्डनायकः । बुधः कुमारः युवराजः । सूरिः गुरुः दानवपूजितश्च शुक्रश्च सचिवौ मन्त्रिणौ । तत्र गुरुः कार्यसचिवः शुक्रः नर्मसचिव 'इति विवेकः । सहस्रांशुजः शनिः प्रेष्यः किङ्करः ।

"वीर्ययुतग्रहतुल्यतनुर्वा" इति, जन्मकाले यो ग्रहो बलवान् तत्समानरूपो जातो भवति । वीर्यवद्भ्यां रविचन्द्राभ्यां राजलक्षणसंयुतत्व-मित्याद्यस्य प्रयोजनम् ।

'राजानौ रविशीतगू' इत्यनेन रवीन्द्वोः द्वादशराश्याधिपत्यं सूचितम् । सिद्धांशगणनप्रकारेण रविः सिंहादारभ्य क्रमात् षड्राश्यधि-

पतिः । तत्र चन्द्रः कटकादारभ्य प्रतिलोमेन षड्राश्यधिपः । कुमारनेतृसचिवादीनां ताभ्यां राश्याधिपत्यं दत्तम् । कुमारस्य बुधस्य रविणा स्वस्थानाद्धनस्थानं दत्तं, पराक्रमसचिवस्य शुक्रस्य पराक्रमस्थानं दत्तं, सेनापतेर्बन्धुस्थानं दत्तम् । बुद्धिसचिवस्य गुरोः बुद्धिस्थानम् । प्रेष्यस्य शनेः षष्ठं दत्तम् । एवं प्रतिलोमेन चन्द्रेण दत्तम् । उक्तं च सारावल्याम्—

> " द्वादशमण्डलभगणस्तस्यार्धे सिंहतो रविर्नाथः ।
> कर्कटकात्प्रतिलोमं शशभृदथान्येऽपि तद्दानात् ॥
> भानोरर्धे विहगैः शूरास्तेजस्विनश्च साहसिकाः ।
> शशिनो मृदवः सौम्याः सौभाग्ययुताः प्रजायन्ते ॥ "

इति । अत्र ग्रहाणामाधिपत्यमुक्तम् । 'कालात्मा' इति निर्देशात् शाखाधिपत्यं सूचितम् । सूर्यचन्द्रौ राजानौ, अतस्तयोः सर्वाधिपत्यम् । शनिस्तु प्रेष्यः । तस्य न शाखाधिपत्यम् । 'रविशीतगू क्षितिसुतो नेता कुमारो बुधः' इति चतुर्णामेकपादनिवेशात् तेषां चतुर्वेदाधिपत्यं व्यञ्जितम् । अतः ऋग्यजुःसामाथर्वणां सूर्यचन्द्रकुजबुधा अधिपा भवन्ति, 'राजानौ रविशीतगू' अतः तयोः स्थाने मन्त्रिणौ सूरिर्दानवपूजितश्च निवेशनीयौ । एवमृग्यजुःसामाथर्वणां यथाक्रमं गुरुशुक्रकुजबुधा अधिपा भवन्ति ।

अथवा ज्ञो वच इति बुधस्य चकारसूचितषडङ्गाधिपत्यं वकारसूचितचतुर्थवेदाधिपत्यं च स्यात् । सत्त्वमिति "वेदानां सामवेदोऽस्मि" "सामवेदो ब्राह्मणानां प्रसूतिः" इत्यादिना द्योतितसत्त्वगुणात्मकब्राह्मणत्वात् वेदसत्त्वभूतत्वात् सामवेदः । एवं कुजस्य सामवेदाधिपत्यं व्यञ्जितम् । 'ज्ञानसुखे' इति गुरोर्मन्त्रभागात्मकऋग्वेदाधिपत्यं, मदन इति "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिकाम्यकर्मद्योतकयजुर्वेदाधिपत्यं शुक्रस्य च व्यञ्जितम् । उक्तं च स्वल्पजातके—

" ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः । "

इति । अस्य प्रयोजनं बलवति शाखाधिपे तच्छाखापाठको भवति । शान्तिकर्मणि च तन्मन्त्रैः कर्तव्यत्वं सूचयति । चोरप्रश्ने बलवति शाखाधिपे तच्छाखापाठकस्य चोरत्वकथनम् ।

किंच रविचन्द्रौ राजानौ । अतस्तेषां सर्ववेदाधिपत्यम् । अत्र सूर्यद्वारकदेवयानप्रापकब्रह्मकाण्डस्य सूर्योऽधिपः चान्द्रज्योतिःप्रापकपितृयानमार्गहेतुककर्मकाण्डस्य चन्द्रोऽधिप इत्यप्यूह्यम् । अतः सूर्ये बलवति निवृत्तिधर्मपरत्वं चन्द्रे बलवति प्रवृत्तिधर्मपरत्वं च वाच्यम् ।

विंशत्यधिकशतमात्रावच्छार्दूलविक्रीडितं वृत्तम् । अतो विंशोत्तर्युडुदशाक्रमश्च सूचितः । रविशीतगू सूर्यः प्रथमः ततश्चन्द्रः । क्षितिसुतः अना इता इतिच्छेदः । क्षितिसुतः कुजः तृतीयः । अना ना नरः न भवतीति अना सर्पः अथवा अनेन वायुना अनिति श्वसिति जीवति इति अना (नान्तः) सर्पः राहुश्चतुर्थः । इता । इः इन्द्रः इता इन्द्रदेवताकगुरोरुपलक्षणम् । गुरुः पञ्चमः । कुमारः कुत्सितमदनविकाररूपः शनैश्चरः षष्ठः । बुधः सप्तमः । सूरिः गुरुतुल्यत्वात् केतुः । स चाष्टमः । केतोर्गुरुतुल्यत्वमुत्तरत्र निरूप्यते । दानवपूजितश्च शुक्रो नवमः । एवं सूर्यादयो नव उडुदशानाथा निरूपिताः ॥ १ ॥

सूर्यादीनां पर्यायशब्दानाह—

**हेलिः सूर्यश्चन्द्रमाः शीतरश्मिः**
**हेमा विद्ज्ञो बोधनश्चेन्दुपुत्रः ।**
**आरो वक्रः क्रूरदृक् चावनेयः**
**कोणो मन्दः सूर्यपुत्रोऽसितश्च ॥ २ ॥**

इति । सूर्यः हेलिः हेलिरिति यवनसंज्ञा सूर्यस्य । चन्द्रमाः शीतरश्मिः । इन्दुपुत्रः बुधः । हेमा विद् ज्ञो बोधनश्च भवति । एते चत्वारः शब्दास्तस्य पर्यायाः । आवनेयः कुजः आरः वक्रः क्रूरदृक् च भवति । सूर्यपुत्रः कोणः मन्दोऽसितश्च भवति ।

"पर्यायमन्यमुपलभ्य वदेच्च लोकात्" इति वक्ष्यमाणप्रकारेण केचित्पर्यायशब्दा एवोक्ताः । हेलिरिति सूर्यपर्यायशब्द आचार्येण न कुत्राप्यस्मिन् शास्त्रे प्रयुक्तः । कथमत्रास्य शब्दस्योपदेशः । हेलिरिति यवनसंज्ञा सूर्यस्य । अतोऽनेन श्लोकेनोपदिष्टग्रहाणामासुरत्वं, अथवा पापत्वं व्यञ्जितम् । "तेऽसुराः हेलयो हेलयो इति कुर्वन्तः पराबभूवुः" इत्यत्र दृष्टहेलयशब्दस्यानुकरणात् पापत्वव्यञ्जकं वा ।

वृत्तं शालिनी ।

"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः"

इति लक्षणात् । शालिनीति स्वभावस्योपलक्षणम् । अत्र पापस्वभाववत्वं दर्शितम् । "क्षीणेन्द्वर्कमहीसुतार्कतनयाः" इति क्रमो वक्ष्यते । निसर्गतः सत्त्वगुणयुक्तसूर्यचन्द्रयोरवरोहिपापत्वक्रमोऽत्र दर्शितः । एष क्रमः 'क्रियतावुरु' इति श्लोकव्याख्यानेऽनुसृतः । तत्राऽऽर्याणां सत्वगुणप्रधानानां सूर्यचन्द्रगुरूणां स क्रमोऽनेनोत्तरश्लोकेन चोपदिष्टक्रमेण लब्धः । आगन्तुकपापत्ववान् बुधः । तस्मात्पापतरः कुजः । पापतमः शनिः । अनेन रजस्तमोजुषामनार्याणां शुक्रबुधकुजशनय इति पूर्वमनुसृतक्रमो लब्धः ।

उडुदशावर्षाश्च पर्यायशब्देषु द्रष्टव्या इति पूर्वमेवोक्तम् । शालिनीवृत्तत्वादुडुदशास्वभावभूता वर्षाः सूचिताः । तत्र सूर्याचन्द्रमसोः पूर्वमेवोक्तत्वादत्र नोच्यन्ते । उत्तरश्लोके—"पर्यायमन्यमुपलभ्य वदेच्च लोकात्" इत्यस्य लोकात् इति लोकशब्दस्याऽक्षरसङ्ख्यासूचित-

तृतीयप्रथमपादाभ्यामिति व्याख्यया तदन्यौ द्वितीयचतुर्थावुपलभ्य संवत्सरान् वदेदिति लब्धम् । तांश्च लोकादन्यमुपलभ्य वदेत् शालिनीवृत्तस्य अब्धिलोकयतियुतत्वात् लोकादन्यः अब्धिः । अतो द्वितीयचतुर्थपादयोराद्यचतुरक्षरेषु संवत्सरा द्रष्टव्या इति भावः । एवं कृते बुधस्य हेमाविद्ज्ञ इति चतुरक्षरसूचिताष्टपञ्चचतुःशून्यानां सङ्कलनेन सप्तदशेति लब्धम् । अविवक्षितानि चेन्दुपुत्र इत्यन्त्यचतुरक्षराण्यपि सङ्कलनेन सप्तदशैव भवन्ति ।

चतुर्थपादस्था आद्यचतुरक्षराः कोणो मन्द इति । ते एकं पञ्च पञ्च अष्टौ च भवन्ति । सङ्कलनेन एकोनविंशतिर्भवन्ति । अतः शनेरेकोनविंशतिः संवत्सराः । अन्त्याक्षरत्रयेण 'सितश्च' इत्यनेन असितश्चेत्यक्षरचतुष्टयेन वा एकोनविंशतिरेव । सम्यग्दर्शयितुमेवं कृतवान् किलाऽऽचार्यः ॥ २ ॥

इतरेषां पर्यायनामान्याह—

**जीवोऽङ्गिराः सुरगुरुर्वचसां पतीज्यौ**
**शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च ।**
**राहुस्तमोऽगुरसुरश्च शिखीति केतुः**
**पर्यायमन्यमुपलभ्य वदेच्च लोकात् ॥ ३ ॥**

इति । जीवः गुरुः अङ्गिराः सुरगुरुः वचसां पतिः इज्यश्च भवति । शुक्रः भृगुः भृगुसुतः सितः आस्फुजिच्च भवति । राहुः तमः अगुः असुरश्च भवति । केतुः शिखीति कथ्यत इति शेषः । लोकात् लोकत अन्यं पर्यायं इतरपर्यायनामानि उपलभ्य वदेच्च । अनुक्तानां नाम्नामपि ग्रहणार्थं चतुर्थपादः ।

जीव इति जीवनप्रदत्वं व्यञ्जितम् । अङ्गिरा इत्याभिजात्यकारकत्वं व्यञ्जितम् । सुरगुरुरित्यग्न्याधानाद्यश्वमेधपर्यन्तक्रतूनामाचार्यत्वं कारकत्वं च । वचसां पतिरिति सर्वशास्त्रव्यवहारपाटवं सूचितम् ।

भृगुसुत इति शुक्रस्य भृगुसुतदेवताकत्वं भृगुसुतादैवत्यं च व्यञ्जिते । भृगुसुतः परशुरामः । भृगुसुता महालक्ष्मीः ।

तम इति राहोस्तमसाभिप्लुतत्वम् । अगुरिति किरणरहितत्वम् ।

शिखीति वह्निवाचकत्वात् केतोर्ज्ञानकारकत्वम् । केतुः शिखी इति । अत्र इतिशब्दः आदिपर्यायः । केतुः शिख्यादय इत्यर्थः । अनेनोपग्रहादयो धूमकेत्वादयश्चोपदिष्टाः । अनेन केतूनामसङ्ख्येयत्वमुक्तं च ।

पर्यायमन्यमुपलभ्य वदेच्च लोकात् । अन्यम् अन्य इत्यक्षरसङ्ख्यया दश । अतः अन्यं दशमग्रहमित्यर्थः । दशमग्रहश्च मान्दिः । पर्यायं परित ऐतीति पर्यायः । मान्देश्चारः सूर्यादीनां चाराद्भिन्नः । तत इतः प्लवन-रूपवत्वात् स पर्याय इत्युक्तम् । तं मान्दिं लोकाच्च लोके तत्र तत्र स्थितं क्रम-मनुसृत्य वदेदिति भावः । यथा "कालात्मा दिनकृत्" इति श्लोकव्याख्या-नोक्तयामनाथेषु शनियामनाथस्य गुलिकः, अथवा मान्दिरिति नाम दृश्यते । तत्र मान्द्युदयकालः शनियामान्त्यकाल एव । एष क्रमो द्रमिडदेशेष्वनुष्ठीयते । एष एव क्वचित्प्रान्तेषु राहुकाल इत्युच्यते । द्रमिडदेशीयराहुकालस्तु रविवारादिषु "हरिः समेतो वेगेन" इति वाक्यानुसारेणाह्नचष्टमद्वितीयसप्तमपञ्चमषष्ठचतुर्थतृतीययामेषु प्रवर्तते । अत्र प्रमाणं मृग्यम् । तथाऽपि कलादेशानुसारेणैतेऽप्यनुष्ठेया एवेत्याचार्यस्य मतम् ।

केरलीयपक्षे गुलिकोदयकालस्तु दिनरात्रिषु शनियामस्थोऽपि तद्या-मादौ न प्रोक्तः । एष गुलिकोदयो वराहमिहिरेण स्पष्टमुक्त इति "होरेत्य-होरात्र" इति श्लोकव्याख्याने रुद्रेण सम्यग्दर्शितम् । तदत्र प्रसङ्गा-दुद्ध्रियते ।

"एके इत्यहोरात्रविकल्पं वाञ्छन्तीत्यत्र विशब्देनाक्षरसङ्ख्यया चतुष्कमुच्यते । तस्य कल्पः क्षयः । एक इति एकशब्देन मुख्यवाचिना

सूर्यवार उच्यते । इतिशब्द आदिवचनः । "इति हेतिप्रकरणप्रकारादि-समाप्तिषु" इत्यमरः । सूर्यवाराद्यहोरात्रगतश्चतुष्कक्षयः एके इत्यहोरात्र-विकल्पः । अत्राक्षरसङ्ख्यया षष्टिवाचकादितिशब्दादनन्तरोक्ताहोरात्र-शब्देन अह्नो रात्रेश्च त्रिंशन्नाडिकात्मकत्वं द्योतितम् । तयोः सूर्यवारादि-चतुष्कक्षयः गुलिकवाक्यसंवादी । तथाहि—सूर्यवारे विकल्पः चतुष्कक्षयः षड्विंशतिर्नाडिकाः । सोमवारे ततो विकल्पः द्वाविंशतिः । भौमवारे ततोऽपि क्षयः अष्टादश । बुधवारे चतुर्दश । गुरुवारे दश । भृगुवारे षट् । मन्दवारे द्वावित्यहोरात्रविकल्पशब्देन व्यञ्जितं भवति । तस्मादहोरात्र-विकल्पो गुलिकः ।"

तथा चोक्तम्—

"चन्द्रो रुद्रो जयो विद्या नयः स्तेनः खनी रवेः ।
त्रिंशन्नाड्यह्निगुलिको दिनपञ्चमवन्निशि ॥"

इति । वस्तुतस्तु मान्दिगुलिकौ भिन्नावेव । अतः पक्षद्वयोक्तयोर्मन्द-सुतयोरेको मान्दिः, इतरो गुलिक इति विवेकः । तथा चोक्तमुत्तरकालामृते—

"अन्त्यांशो हि निरीश्वरस्तु गुलिकः शन्यंशकस्तन्निशो
वारेशादिह पञ्चमादित अयं खण्डान्तमेंऽशे भवेत् ।
स्यातां मन्दसुतावुभावतिखलावित्येवमूचे मुनि-
र्माण्डव्यः किल यत्र तौ निवसतां तत्रैव हानिप्रदौ ॥"

इति । एवं गुलिककालान्ते गुलिकः उदेति । मान्दिस्तु

"चारुः खारिजटावयोनटतनूरूनं द्युमानाहतं
खाङ्गाप्तं रविवासरादिघटिकास्तत्कालभे मन्दजः ।

रात्रेर्मानमहःप्रमाणमहिहृत्खण्डप्रमाणं भवे-
दर्काद्या शनिवासरान्तदिवसे वारेश्वरात्खण्डपाः ॥ ”

इत्युत्तरकालामृतवचनेन गुलिकोदयात्पूर्वमुदेति ।

पर्यायमन्यमुपलभ्य वदेच्च लोकात् । आत्मानं पर्यायं मन्यते इति पर्यायमन्यः । पर्यायो मान्दिः । स च दुःखप्रदत्त्वेन बाधकः । पर्यायमन्यः मान्दिभेशः । पर्यायमन्य इत्युक्तत्त्वात् तस्यापि बाधकत्त्वं व्यञ्जितम् । तथा चोक्तम् फलदीपिकायाम् —

“ रन्ध्रस्थरन्ध्रेक्षकरन्ध्रनाथरन्ध्रदृगाणाधिपमान्दिभेशाः ।
दुःखप्रदास्तेष्वपि दुर्बलो यः स नाशकारी स्वदशापहारे ॥ ”

इति । तं लोकात् लो इति त्रीणि क इत्येकं सङ्कलनेन चत्वारि । चतुष्टयादित्यर्थः । पुनः लोकाः त्रयः त्रिकोणाद् इत्यप्यर्थ इष्यते । लोक्यते सर्वैरिति लोकः स्वगृहं अथवा उन्नतस्थानं तुङ्गभवनमित्यर्थः । ताभ्यां वा । उपलभ्य प्राप्य । वदेत् । किं वदेत्? वृत्तं च सिंहोन्नता । सिंहासनप्राप्त्या उन्नतत्त्वं वदेत् । मान्दिभेशे केन्द्रे त्रिकोणे स्वगृहे तुङ्गे वा स्थिते सर्वसम्पत्प्रभुत्वं कल्पसूचकच्छन्दसा दीर्घायुरारोग्यं च प्राप्यते इति भावः । तथा च फलदीपिकायाम् —

“ गुलिकभवननादे केन्द्रगे वा त्रिकोणे
बलिनि निजगृहोच्चे मेदिनीमण्डलेन्द्रः ।
रथगजतुरगाणां नायको मारतुल्यो
महितपृथुयशाः स्यान्मण्डलान्तो महायुः ॥
गुलिकभवननाथे केन्द्रतुङ्गत्रिकोणे
सहयरथगजानां राजराजाधिपो वा ।

नृपवरकुलमुख्यो मेदिनीमण्डलेन्द्रः
पटुतरदृढबुद्धिर्धैर्यलक्ष्मीयुतः स्यात् ॥" इति ।

"जीवोऽङ्गिरास्सुरगुरुः" इत्यत्र जीवः अङ्गिरास्सुरगुरुरिति च्छेदः। अङ्गी रास्सुरगुरोः इति अङ्गिरास्सुरगुरुः। रास्सुरगुरुरित्यक्षरसङ्ख्यया द्वौ सप्त द्वौ त्रयः द्वौ च भवति। एतेषां सङ्कलनेन षोडश भवति। उडुदशाक्रमेऽङ्गिभूतगुरोरङ्गभूतसंवत्सरसङ्ख्या षोडशेत्यर्थः। अत उडुदशागणने गुरोः षोडश वर्षाः। अङ्गिशब्दस्य पूर्वनिपातः। अथवोडुदशायाः प्राधान्यकल्पने संवत्सरसङ्ख्याया अङ्गित्वं गुरोरङ्गत्वं च। तत्पक्षे अङ्गी रास्सुरगुरुः यस्य स इति बहुव्रीहिः।

शुक्रो भृगुः भृगुसुतः सित आस्फुजिच्च इत्यत्र पञ्च नामानि शुक्रस्य। नियमाभावान्मध्यमस्यैव ग्रहणं न्यायतो भवेत्। भृगुसुत इत्यक्षरसङ्ख्यया चत्वारि त्रीणि सप्त षट् च भवति। सङ्कलनेन विंशतिः। अतः शुक्रस्य उडुदशासंवत्सरा विंशतिः। भृगुः इत्यनेनैव सिद्धे भृगुसुतशब्दोपदेशः उडुदशावर्षकथनार्थमेव। अथवा वृत्तं वसन्ततिलकम्। विषुवं हि वसन्ततिलकम्। तच्च

"शरद्वसन्तयोर्मध्ये विषुवन्तु विभाव्यते।"

इति श्रीविष्णुपुराणवचनेन वसन्तमध्यं भवति। वसन्ताधिपश्च शुक्रः। अतः शुक्रस्य पर्यायनामसु मध्यस्थिताद्भृगुसुतशब्दात् तस्योडुदशावर्षा ज्ञेया इत्यत्र किं नाम प्रमाणमपेक्षते?

राहुकेत्वोरेकपादस्थित्या तयोः सङ्कलितवर्षसङ्ख्यैव दृश्यते। यथा राहुः शिखी च तमोगुरसुर इत्यन्वयेन राहुकेत्वोस्तमोगुरसुरसङ्कलितसङ्ख्याकवर्षाः स्युः। अक्षरसङ्ख्यया षट् पञ्च त्रीणि द्वे सप्त द्वे च

भवन्ति। सङ्कलनेन पञ्चविंशतिश्च भवन्ति। अतः राहुकेत्वोर्दशावर्षसङ्ख्या पञ्चविंशतिः। केतुः राहावन्तर्भूतो न तु राहुः केतौ। अतः केतुदशावर्षसंख्या केतुनामशब्द एवान्वेष्टव्या। शिखी पञ्च द्वौ च भवति। सङ्कलनेन सप्त भवति। केतुर्वा ग्राह्यः अक्षरसङ्ख्यया एकं षट् च भवति। सङ्कलनेन सप्तैव भवति। अतः केतोर्वर्षसङ्ख्या सप्तेति निःसन्दिग्धं सूचितम्। अनेन राहोरष्टादश वर्षा इत्यपि सिद्धम्।

श्लोकद्वयेन नवानां ग्रहाणां त्रयस्त्रिंशत्पर्यायनामान्युक्तानि। देवानां सङ्ख्या हि त्रयस्त्रिंशत्। तथा चोक्तं बृहदारण्यकोपनिषदि—

"स होवाच महिमान एवैषामेते त्रयस्त्रिँशत्त्वेव देवा इति कतमे ते त्रयस्त्रिँशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिँशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति।"

इति। अनेन सर्वदेवमया नवग्रहाः, अधिदेवताप्रत्यधिदेवतासहितनवग्रहपूजयैव समस्तशुभफलानि लब्धुं शक्यमिति च सूचितम् ॥ ३ ॥

अथ ग्रहवर्णानाह —

**रक्तश्यामो भास्करो गौर इन्दुः**
**नात्युच्चाङ्गो रक्तगौरश्च वक्रः।**
**दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः**
**श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ४ ॥**

इति। भास्करः रक्तश्यामः रक्तश्च श्यामश्च भवति। उच्चे रक्तः नीचे श्यामः। रक्तः श्यामे रक्तश्यामः। श्याम इति एकपञ्चाशत्। एकपञ्चाशदक्षरेषु रक्त इत्यर्थः। शब्दब्रह्मस्वरूप इति भावः। इन्दुः चन्द्रः

गौरः धवलः। वक्रः नात्युच्चाङ्गः नातिदीर्घाङ्गः रक्तगौरश्च, उच्चे रक्तः नीचे गौरः। ज्ञः बुधः दूर्वाश्यामः हरितः। गुरुः गौरगात्रः पीतवर्णः "गौरोऽरुणे सिते पीते" इत्यमरः। तत्र चन्द्रः सितः कुजः रक्तमिश्रधवलः गुरुः पीतः। शुक्रः श्यामः श्यामवर्णः। "श्यामा यौवनमध्यस्था" इति वचनमनुसृत्य स्त्रीग्रहत्वाद्यौवनमध्यस्थ इत्यप्यर्थः। भास्करिः शनैश्चरः कृष्णदेहः कृष्णवर्णः। चोरप्रश्नादौ वर्णज्ञाने प्रयोजनं द्रष्टव्यम्। "चन्द्रसमेतनवांशपवर्णः" इति जातस्यापि वर्ण उक्तः।

शालिनीवृत्तम्। "हेलिः सूर्यः" इति श्लोके तृतीयपादोपदिष्टत्वात् कुजस्य वर्षसङ्ख्या न लब्धा। तच्छ्लोकानुकरणार्थं शालिनीवृत्तं प्रयुयुजे आचार्येण। अत्र द्वितीयपादोपदेशेन चावशिष्टस्य कुजस्य दशावर्षा अत्र द्रष्टव्या इति सूचितम्। नात्युच्चाङ्गः। नात्युच्चः अङ्गः यस्य स इति बहुव्रीहिः। नात्युच्चस्य अङ्ग इति तत्पुरुषो वा भवतु। अनेन नात्युच्चशब्दतो दशासंवत्सरा ज्ञेयाः, नात्युच्च इत्यक्षरसङ्ख्यया शून्यमेकं षट् च। सङ्कलनेन सप्त भवति। अतः कुजस्य सप्त संवत्सराः। एतदर्थमेव नात्युच्चाङ्गशब्दस्य प्रयोगोऽस्मिन् श्लोके। इतरेषां ग्रहाणां वर्णा एवोक्ताः कथमस्य कुजस्यैव वर्णव्यतिरिक्तगुणोऽप्युक्त इति चेत्, उडुदशासंवत्सरसङ्ख्यासिद्ध्यर्थमित्येव वक्तव्यम्।

राहुकेतू अपि भास्करी एव। अतस्तावपि कृष्णदेहावेव। उक्तं च पराशरहोरायाम्—

"धूम्राकारो नीलतनुर्वनस्थोऽपि भयंकरः।
वातप्रकृतिको धीमान् स्वर्भानुप्रतिमः शिखी॥" इति॥ ४॥

अधुना ग्रहाणां वर्णनाथत्वं देवताः दिक्स्वाम्यं सौम्यपापविभाग-श्चोच्यन्ते—

**वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता**
**वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात् ।**
**प्रागाद्या रविशुक्रलोहिततमस्सौरेन्दुवित्सूरयः**
**क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ॥ ५ ॥**

इति । ताम्रसितातिरक्तहरितव्यापीतचित्रासिताः वर्णाः क्रमात् सूर्यादि-नाथाः सूर्यादयो नाथाः येषां ते इति बहुव्रीहिः । ताम्रवर्णस्य नाथः सूर्यः । सितस्य श्वेतवर्णस्य नाथश्चन्द्रः । अतिरक्तवर्णस्य कुजः । हरित-वर्णस्य बुधः । व्यापीतस्य हरिद्रावर्णस्य गुरुः । चित्रस्य नानावर्णस्य शुक्रः । असितस्य कृष्णवर्णस्य शनिश्च । नष्टादिद्रव्यवर्णज्ञानमस्य प्रयोजनम् । ग्रहाणां देहवर्णास्तु चोरज्ञानविषयका इति भेदः । बलवति ग्रहे उक्तवर्णद्रव्यलाभः । अन्यथा हानिश्च जन्मतः प्रश्नतो वा वक्तव्या । ग्रहपूजायां तद्वर्णवस्त्रकुसु-मानि दानादिषु तद्वर्णधान्यानि च व्यञ्जितानि । यथा सूर्यस्य गोधूमः, चन्द्रस्य तण्डुलानि, कुजस्य आढकः, बुधस्य श्यामसुद्गः, गुरोश्चणकः, शुक्रस्य निष्पावः, शनेस्तिलानि, परिशेषाद् राहोर्माषः, केतोः कुलुत्थश्च ।

तथा च फलदीपिकायाम्—

"गोधूमं तण्डुलं वै तिलचणककुलुत्थाढकश्याममुद्गा-
निष्पावा माषमर्केन्द्वसितगुरुशिखिक्रूरविद्भृग्वहीनाः ।"

इति । असितशब्दस्यावृत्त्या राहुकेत्वोर्वर्णावपि लब्धौ । असि इति असितस्यैकदेशः त इति ताम्रस्यानुकरणम् । अतः राहुः कृष्णवर्णस्य नाथः केतुस्ताम्रवर्णस्य च भवति ।

वर्णकथनेन ग्रहाणां पुष्पाण्यपि व्यञ्जितानि । सूर्यस्य रक्तपद्मम् । चन्द्रस्य सितपुष्पम् । कुजस्य रक्तपुष्पं चम्पको वा । बुधस्य पीताम्बरदैवत्यात् पीतपुष्पम् । गुरोः कनकपुष्पम् । शुक्रस्य श्वेतपद्मम् । शनेर्नीलपुष्पम् । राहोर्मन्दारः । केतोः रक्तपुष्पम् । सूर्यस्य तुलसीपद्मे, चन्द्रस्य जलजपुष्पाणि, कुजस्य कण्टकयुतरक्तपुष्पाणि, बुधस्य नीलोत्पलं वकुलं नीलशङ्खपुष्पं च, बृहस्पतेर्जातिचम्पकौ, शुक्रस्य केतकी, राहोः शनेश्च दुर्गन्धपुष्पाणि वन्यपुष्पाणि चेति पक्षान्तरम् । शान्तिकर्मणि तु

"भानुश्चाङ्गारको रक्तौ शुक्लौ शुक्रनिशाकरौ ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ।
कृष्णं शनैश्चरं विद्याद्राहुं चित्राश्च केतवः ॥"

इति वचनेन सूर्यकुजयोः रक्तवर्णस्य, गुरुबुधयोः पीतवर्णस्य, चन्द्रशुक्रयोः श्वेतवर्णस्य, शनिराह्वोः कृष्णवर्णस्य, केतोर्विचित्रवर्णस्य चोक्त्या सूर्यकुजयोः रक्तपुष्पं, गुरुबुधयोः पीतपुष्पं, शनिराह्वोः कृष्णपुष्पं, केतोर्विचित्रवर्णपुष्पाणि च ग्रहपूजायामुपयुज्यन्ते । बुधस्य पीतवर्णत्वं हेमा इति तस्य पर्यायनामोपदेशेनाचार्येण सूचितम् । केतोस्तु शिखीति केतुरित्यग्नेर्ध्वजस्य च नामभ्यां विचित्रवर्णत्वं सूचितम् ।

पुनर्ग्रहाणां वर्णकथनेन तेषां रत्नान्यपि सूचितानि । रक्तवर्णस्य सहस्रकिरणस्य माणिक्यम् । अतिरक्तस्य कुजस्य विद्रुमम् । शुद्धस्फटिकसङ्काशस्य चन्द्रस्य मौक्तिकम् । वज्रनिभस्य सितस्य वज्रम् । पुष्यदेवताया गुरोः पुष्यरागम् । हरितस्य बुधस्य गारुत्मतम् । नीलद्युतेः शनेरिन्द्रनीलम् । परिशेषाद्राहुकेत्वोर्गोमेधवैडूर्यके । तथा च फलदीपिकायां—

"माणिक्यं तरणेः सुधार्यममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतम् ।

देवेड्यस्य च पुष्यरागमसुराचार्यस्य वज्रं शने-
नीलं निर्मलमन्ययोश्च गदिते गोमेधवैडूर्यके ॥" इति ।

एवमितरेषां द्रव्याणां विषयेऽपि चिन्त्यम् । सूर्यादिनाथाः वर्णा इति सूर्यादीनां नाथत्वे विवक्षिते वर्णसंज्ञा । अत एव "होरेत्यहोरात्र" इति श्लोकव्याख्याने होरानाथत्वे विवक्षिते वर्णशब्दस्य ग्रह इति व्याख्यातम् ।

'वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः' वह्निः अम्बु अग्निजः केशवः इन्द्रः शची कश्च । सूर्यादिनाथाः सूर्यादीनां नाथा इति तत्पुरुषः । सूर्यस्य देवता अग्निः । चन्द्रस्य जलम् । कुजस्य स्कन्दः । बुधस्य विष्णुः । गुरोरिन्द्रः । शुक्रस्य शची । शनेर्ब्रह्मा । अत्र वह्निशब्देन अग्निश्च सूर्यश्च रुद्रश्च विवक्षिताः ।

"ब्रह्मेशानाच्युतेशाय रौद्राय वपुषे नमः ।"

इति ह्यादित्यहृदयम् । अग्निपूजा सूर्यनमस्कारः रुद्राभिषेकादयश्च सूर्यप्रीत्यर्थं कर्तव्याः । अम्बु इत्यनेनैकदेशविकृतत्वादम्बिकाऽपि गृह्यते । "चन्द्रेण गौर्याम्" इति जैमिनिः । अम्बुशब्देन धाराशङ्खाभिषेकादि च विवक्षितम् ।

"आपो नारायणाद्भूता आपो वै नरसूनवः ।"

इत्युक्तपुराणवचनेनाऽबाधारस्वाधिष्ठाननाथो विष्णुश्चाऽप्शब्देन गृह्यते । अतो युग्मर्क्षे चन्द्रे दुर्गा तत्पूजा च । ओजर्क्षेषु क्रूरराशौ रुद्रस्तत्पूजा च । शुभक्षेत्रे विष्णुस्तत्पूजा च । अग्निज इत्यग्निरपि गृह्यते । होमादयः षष्ठ्यादिपूजा च वक्तव्याः । केशव इति श्रवणपूजादिकम् । इन्द्रः 'इदि परमैश्वर्ये' इति धातोर्निष्पन्नत्वात् परमात्मवाचकः । इन्द्र इति कर्म-

काण्डोक्तपुष्टयादिकर्मोक्तम् । विप्रपूजादिकं च । इन्द्र उपेन्द्रश्च । अनेन नामत्रयहोमादि सूचितम् । दक्षिणामूर्तिरूपरुद्रोऽपि इन्द्रशब्देन विवक्षितः । शचीत्यनेन महायक्ष्यादयो बलहीनस्य शुक्रस्य । क इति ब्राह्मणानामपि ग्रहणम् । अत्र ग्रहेषु स्थिरराशिषु गृहे पूजादि कर्तव्यम् । चरेषु देवालयेषु कर्तव्यम् ।

क इति ब्रह्मवाचकत्वान्मूलाधारव्यञ्जकः । अतः कुण्डलिनीरूपसर्पः पञ्चभूतगणेशो विनायकश्च स्मारितौ । अनेन राहोः सर्पो देवता केतोर्गणपतिर्देवतेति च लब्धम् । अतः क इति गणहोमादिकं सूचितम् ।

"वह्न्यम्ब्वग्निज" इत्यत्रैवं विग्रहः । इन्द्रश्च शची च एतयोः समाहारः इन्द्रशचि । अन्यथा शचि इति ह्रस्वस्य न प्रसङ्गः । वह्निश्च अम्बु च अग्निजश्च केशवश्च इन्द्रशचि च कश्च वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः । अत्र इन्द्रशचि इत्येकवद्भावेन इन्द्रशब्दार्थानुसारेण शचीशब्दो व्याख्येय इति व्यञ्जितम् । इन्द्रशब्द उपेन्द्रपरश्चेत् शचीशब्दो महालक्ष्मीपरः । अतः शुक्रस्य महालक्ष्मीर्देवता । तथा च जैमिनिः—"शुक्रेण लक्ष्म्याम्" इति । इन्द्रः इति रुद्रग्रहणेन शचीशब्दो मायाद्योतकत्वाच्च दुर्गापरः । क्रूरक्षेत्रवशात्कालीपरश्च । इन्द्रस्य परमात्मवाचकत्वात् शचीशब्दो मूलप्रकृतिपरश्च भवति । एतेन गुरोः क्रूरस्य ओजराशौ स्थितिर्हरं हरपूजां च सूचयति । ओजे शुभक्षेत्रे गुरौ विष्णुर्विष्णुपूजा च । युग्मे शुभक्षेत्रे शुक्रे दुर्गा तत्पूजा च । युग्मे क्रूरक्षेत्रे काली तत्पूजा च । क इति कालस्य नामैकदेशो वा । अनेन मान्देः कालः देवतेत्यपि व्यञ्जितम् ।

शचिक अ इति वा छेदः । वह्न्याद्यात्मकविष्णुमूर्तय इत्यर्थः । मान्दियुक्तदशग्रहाणां दशावतारा देवता इति गम्यते । सूर्यस्य तद्वंशदीपो रामः । चन्द्रस्य यदुकुलाग्रणीः । कुजस्य अग्न्यात्मकनृसिंहः । बुधस्य बुद्धो बलभद्रो वा । गुरोरुपेन्द्रो वामनः । भार्गवस्य भार्गवरामः ।

मन्दस्य मन्दगामी कच्छपः । राहोः सूकरः । केतोर्मदनकेतुरूपधारी मत्स्यः । परिशेषात् कालरूपस्य मान्देः कल्की । उक्तं च पराशरेण—

"रामोऽवतारः सूर्यस्य चन्द्रस्य यदुनायकः ।
नृसिंहो भूमिपुत्रस्य बुद्धः सोमसुतस्य च ॥
वामनो विबुधेज्यस्य भार्गवो भार्गवस्य च ।
कच्छपः सूर्यपुत्रस्य सैंहिकेयस्य सूकरः ॥
केतोर्मीनावतारश्च ।"

इति । अत एवोक्तं श्रीमच्छंकरभगवत्पादैः—

"मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्की भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥"

इति । अत्र वृत्तं स्रग्धरा । अस्यां त्रिमुनियतियुतत्वात् सप्ताक्षराणां द्वादश सञ्जाता वर्तन्ते । अतः शार्दूलविक्रीडितवत् स्रग्धराऽपि द्वादशराशियुक्त-सप्तग्रहकज्योतिःशास्त्रवृत्तमेव । श्रीमच्छंकरभगवत्पादा अनेन श्लोकेन ग्रहाणां दशावतारदैवत्यं सूचयन्ति । श्रीमद्वेङ्कटनाथदेशिकश्च स्वकृतदशा-वतारस्तोत्रे शार्दूलविक्रीडितमेव प्रयुक्तवान् । एतन्मनसि निधायैवाचार्यै-रस्मत्तातपादैस्तदीयदशावतारमञ्जर्यां नवग्रहदोषशान्त्यर्थं कथमृणपीडितो भग-वद्भावभावनां कुर्यादिति दर्शितम् ।

"अभिवन्द्य विधृतवेषं दशधा सर्वऋणविमथने दक्षम् ।
चिन्ताव्याधिप्रशमं सिद्धौषधमनुभवानि हृदि सततम् ॥
दुर्जयऋणादिदैत्यप्रमुषितनिखिलार्थतत्त्वसिद्धिरहम् ।

मत्स्य इव सत्त्वमूर्तिश्चिन्ताब्धावूर्मिडोलिकां प्राप्तः ॥
दुर्वहकुटुम्बखिन्नः स्वसुखाद्विमुखः क्षमाभृतर्णेन ।
मथितेन भुग्नपृष्ठः पुराणकूर्म इव लब्धनिद्रोऽस्मि ॥
आत्तऋणाब्धिप्लवनां क्षितिं हिरण्याक्षपातितां बुद्ध्वा ।
दत्तहिरण्याक्षतनुस्सनातनोऽस्म्यद्य कोल इव ॥
प्रह्लाददत्तदृष्टिर्निराकरिष्यन् हिरण्यऋणनिचयम् ।
स्तम्भान्तरितमहौजाः स्वतन्त्रनरसिंहरूपोऽस्मि ॥
अपरिचितयाचनोऽहं विक्रम्य पदैस्त्रिभिर्बलिसकाशे ।
याच्ञातिह्रस्वगात्रः कपटमहावामनोऽस्मि तच्चित्रम् ॥
यदकारि परुषवचनं सुतीक्ष्णधारं गले विनिक्षिप्तम् ।
क्षात्रं तेन निरस्यन् भार्गवरामोऽस्मि संवृत्तः ॥
अवनेऽवनेरपि पुरा पित्रा दत्तानुशासनोऽप्यनिशम् ।
कृतऋणरक्षःसंहृतिसङ्कल्पो राघवोऽस्म्यद्य ॥
दुःशमऋणमदिराभिर्मदावलीढो विसृष्टहलसङ्गः ।
कृतनीलाम्बरपरिधिर्बलराम इव व्रजाम्नि मुसलधृतिम् ॥
मृदुबृन्दावनचारी दुर्विषऋणकालियेन सन्दष्टः ।
तत्कोटिलग्नपादो गोपवधूटीप्रियोऽस्मि कृष्ण इव ॥
अपि भाविनोऽतिदुर्दमऋणगणरूपान् खलान्निवर्तयितुम् ।
विरचितसमुद्यमोऽहं भविष्यदवतारकल्किरूप इव ॥
भगवन्दशावतार भावितभावस्त्वदीयकृपयैव ।
मुच्येय ऋणभयङ्करभोगीन्द्रमुखात्प्रसीदतु भवान्मे ॥" इति ।

चोरप्रश्ने चोरनामानयने यात्रायां देवतापूजाविषये, जातके उपास्य-देवतानिर्णयादिषु च प्रयोजनवत् । देवतास्थानादिषु द्वित्र्यादिग्रहवशा-

च्चोह्यम् । यथा चन्द्रबुधसम्बन्धे चन्द्रस्योक्ता अम्बिका विष्णुदेवताकबुधेन दुर्गा भवति । अतश्चन्द्रबुधसम्बन्धो दुर्गां सूचयति । एवमितरेषाम् । तत्तद्ग्रहदोषस्तत्तद्देवतापूजया शाम्यति ।

'प्रागाद्या रविशुक्रलोहिततमःसौरेन्दुवित्सूरयः' रविशुक्रादयो यथाक्रमं प्रागाद्यष्टदिशामीशा भवन्ति । प्राच्याः सूर्यो नाथः । आग्नेय्याः शुक्रः । दक्षिणस्याः कुजः । नैरृत्याः राहुः । प्रतीच्याः शनिः । वायव्याश्चन्द्रः । उदीच्याः बुधः । ऐशान्याः गुरुश्च । परिशेषाद् ध्वजरूपत्वादूर्ध्वस्य केतुः । मान्दिः पातालस्य चेति सिद्धम् । अनेनास्य प्रेतनाथत्वं सूचितम् । पुत्रभावादिषु प्रेतबाधादि मान्दितश्चिन्त्यमिति व्यज्यते ।

नैर्ऋती दिक् राहोः । अतः केतोरैशान्येव भवितुमर्हति । तत्र सूरिर्निर्दिष्टः । अतः केतुश्च सूरिशब्देन गृह्यते । केतोर्गुरुतुल्यत्वमेवं व्यञ्जितम् । अत एव सूरिशब्दो गुरुशब्दश्च बृहस्पतेः पर्यायनामत्वेन नोपदिष्टौ । तेनैव पूर्वमेव सूरिशब्देन गुरुशब्देन च केतुरपि गृहीतः । असुरत्वाद् आग्नेयत्वं च । एवं केतुः सूर्यतुल्योऽपि भवति । सूर्यो ह्याग्नेयः सत्त्वगुणवत्वात् गुरुश्च ।

'प्रागाद्या' इति दश दिशोऽपि गृह्यन्ताम् । सूरिशब्दश्चाऽऽवृत्तिद्वयेन युक्तः सूरिः सूरिः सूरिर्भवति । उदीच्याः सूरिर्गुरुः, ऊर्ध्वस्य सूरिः सूरजच्छाया केतुः । अधोदिशः सूरगोत्रजो मान्दिः ।

नष्टमुष्टिचोरप्रश्नादिषु चोरादीनां गमनदिगवबोधनार्थमयं श्लोकः । कृष्णीयशास्त्रानुसारेण प्रश्नादिषु पक्षान्तरं वा गृह्यताम् । तथा च कृष्णीयवचनम्—

"रविकुजसुरगुरुशशितनयभृगुजसौरेन्दुसैंहिकेयानाम् ।
प्रादक्षिण्येन दिशः प्रागाद्याः कल्पिताश्चान्यैः ॥"

इति । जातके त्वाचार्यमतमेव सर्वसंमतम् ।

क्षीणेन्द्वर्कमहीसुतार्कतनयाः तैर्युतो बुधश्च पापाः। क्षीणचन्द्रापेक्षया पापयुतबुधस्य पापत्वम्। अर्कस्य तेभ्योऽप्यधिकपापत्वम्। ततोऽपि पापतरः कुजः। पापतमः शनिः। अर्कस्य क्रूरत्वप्रयुक्तपापत्वमेव। केचित् सूर्यः क्रूरः, इतरौ पापाविति वदन्ति। तथा च यवनेश्वरः—

"क्रूरग्रहोऽर्कः कुजसूर्यजौ तु पापौ शुभाः शुक्रशशाङ्कजीवाः।"

इति। अत्र पापयुतबुधस्येन्दोरप्यधिकपापत्वम् "हेलिः सूर्य" इति श्लोकोक्तक्रमेण लब्धम्।

को ह्यत्र क्षीणेन्दुः। बहुलपक्षगत इति केचित्। अष्टम्योरुभयोर्योऽमावास्यायुक्तस्तत्कालगत इति परे। अमावास्याचतुर्दश्योरिति यवनाः। तथा च

"अष्टम्योरुभयोश्च मध्यमगतः शुक्लान्ययोर्व्यत्यये
पूर्णः क्षीण इति क्रमाच्छशधरः पूर्णः शुभो मङ्गले॥"

इति कालामृतवचनम्।

"अमावास्याचतुर्दश्योः क्षीणश्चन्द्रो न सर्वदा।"

इति यवनेश्वरः। बहुलपक्षगतस्य चन्द्रस्य क्षीणत्वं लोकवादात् सिद्धम्।

षोडशकलाधरो हि चन्द्रः। तत्रेश्वरकला शिवशिरसि दृश्यते। शिष्टपञ्चदशकलासु दश इन्द्रियकलाः, एकादशी मनः, द्वादशी बुद्धिः, त्रयोदशी अहङ्कारः, चतुर्दशी चित्तं, पञ्चदशी जीवः। एतच्चित्तमेव "मनस्तुहिनगुः" इत्यत्र मनःशब्देन प्राधान्येन विवक्षितम्। तस्यापि ह्रासश्चतुर्दश्यां प्रारभते। अतस्तस्य क्षीणत्वममावास्याचतुर्दश्योः। तुहिनशब्दोऽक्षरसङ्ख्यया षड् अष्टौ शून्यं च भवति। सङ्कलनेन चतुर्दश च। अत-

स्तुहिनगुशब्दस्य चतुर्दशः किरणः इत्यर्थः । तुहिना गौः यस्य सः तुहिनगुः इति विग्रहेण चतुर्दशतमकलावत्त्वं मनस्त्वे हेतुतया दर्शितम् । चन्द्रस्य चतुर्दशी कला मन इत्यर्थः । आयुर्दायगणने एतत्पक्षस्य प्रयोजनम् ।

"विपुलकरा युधि चोत्तरसंस्थाः" इति वक्ष्यति । 'रलयोरभेदः' इति न्यायेन विपुलकरा इति विपुलकला भवति । विपुल इत्यक्षरसङ्ख्यया चत्वारि, एकं, त्रीणि च भवति । सङ्कलनेनाऽष्टौ । अनेन चन्द्रस्याष्टकलाधरत्वं विपुलकरत्वलक्षणं भवति । तद्वदितरेषां ग्रहाणां चार्धाधिककिरणवत्त्वम् । अनेनापि पूर्णत्वक्षीणत्वविवेकः कर्तव्यः । एतच्चेष्टाबलनिर्णये प्रयोजनवत् ।

अबहुलपक्षगतक्षीणत्वं तु बलाबलविवेकार्थम् । अतोऽत्र बहुलपक्षगत एव विवक्षितः । पापत्वशुभत्वप्रयोजनं तु "क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः" इत्यादिवक्ष्यमाणादिषु द्रष्टव्यम् । शुभपापग्रहाणां बलाबलमवेक्ष्य फलभेदो ग्रन्थान्तरेषु च विस्तरतो निरूपितः । तथा च सारावल्याम्—

"आचारसत्त्वशुभशौचयुताः सुरूपा-
स्तेजस्विनः कृतविदो द्विजदेवभक्ताः ।
स्रग्गन्धवस्त्रजलभूषणसंप्रियाश्च
सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति ॥
लुब्धाः कुकर्मनिरता निजकार्यनिष्ठाः
साधुद्विषः सकलहाश्च तमोऽभिभूताः ।
क्रूराः सदा वधरता मलिनाः कृतघ्नाः
पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥"

इति ।

पुनः वह्निश्च अम्बु च अग्निजश्च केशवश्च अश्च इन्द्रश्च शश्च चिश्च कश्च वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः । वह्निः कालाग्निरुद्रः । सः सूर्यस्याधिदेवता । अम्बु आपः । ताश्चन्द्रस्याधिदेवताः । अग्निजः स्कन्दः । सः कुजस्याधिदेवता । केशवः विष्णुः । अक्षरत्रयप्रयोगसामर्थ्यात् पदत्रयेण लोकानाक्रान्तस्त्रिविक्रमः सूचितः । "इदं विष्णु"रिति मन्त्रेण स यष्टव्य इति भावः । अ इति प्रणवाद्यक्षरभूताकारवाच्यो ब्रह्मा सूचितः ।

"अकारस्तु महद्बीजं रजःस्रष्टा पितामहः ।
उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ।
मकारः पुरुषो बीजी तमःसंहारको हरः ॥"

इति हि श्रूयते । अथवा नारायणाष्टाक्षरस्थप्रणवावयवभूताकारवाच्यः

"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।"

इति श्वेताश्वतरोपनिषद्घोषितः प्रधानपुरुषेश्वरः परं ब्रह्म विष्णुः ।

"अकारेणोच्यते विष्णुः श्रीरुकारेण उच्यते ।
मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः ॥"

इति पद्मपुराणोक्तनिर्वचनम् । अतो ब्रह्मा ब्रह्म वा गुरोरधिदेवता । अत एव गुरोः परं ब्रह्म विष्णुं बुधस्यावतारविष्णुं केचिदिच्छन्ति । इन्द्रः शक्रः । स शुक्रस्याधिदेवता । शः शवराट् प्रेतभर्ता यमः । स शनेरधिदेवता । स एव मन्दपुत्रस्याऽपि देवता । शनेः पितृपतिः मान्देः प्रेतभर्ता इति विवेकः । अनेनैव सूचितं शनेरपि पितृदोषश्चिन्त्यः मान्देः प्रेतदोष इति । चिः चित्रगुप्तः । सः केतोरधिदेवता । कः कालः । स राहोरधिदेवता । श इति शनेः शास्ता वा ।

कथं ज्ञायते चि इति केतोः क इति राहोरिति ?

"अर्केन्द्वारबुधाचार्यशुक्रमन्दा हि केतवः ।"

इति हि सूर्यादिक्रमः । अतः चि इति राहोः क इति केतोरिति वाच्यम् । नेत्युच्यते, सूर्यादिनाथाः क्रमादित्युक्तत्वात् । किं तर्हि न सूर्य आदिः सूर्यादिः ? नेत्युच्यते सूरिः केतुः आदिः सूर्यादिः । एवं चेद्वह्न्यादयः केत्वादिनाथा इति वक्तव्यम् । नेत्युच्यते उभयथा विग्रहः, कार्यः, सूर्यः आदिः सूरिः आदिः इति । अर्कादिसप्तग्रहाणां सूर्यप्रथमत्त्वम् । राहु-केत्वोः सूरिप्रथमत्त्वम् । व्याख्यानतो विशेषप्रतिपत्तिर्वा ।

अथवा वृत्तं शार्दूलविक्रीडितम् । सूर्याश्वयतियुतम् । अतो वह्न्यादयः द्वादशाक्षरैरुक्ताः द्वादश देवताः । क्रमान्मेषादिराशिक्रमेण सूर्यादिनाथाः सूर्यादीनां नवग्रहाणां देवताः स्युः । यथा मेषाधिपकुजस्य वह्निः अग्निः । वृषाधिपशुक्रस्य अम्बु अम्बिका गौरी अम्बुजासना महालक्ष्मीर्वा । उक्तं च लक्ष्मीदैवत्यं भार्गवस्य फलदीपिकायाम् —

"रुद्राम्बागुहविष्णुधातृकमलाकालाह्यजा देवताः ।"

इति । मिथुनाधिपबुधस्य अक् इत्यकारवाच्यो विष्णुः अच्प्रत्याहार-सूचिता स्वररूपिणी विष्णुदैवत्या सरस्वती वा । अच् इत्यस्य 'चोः कुः' इति कुत्वेन कः । ततः 'झलां जशोन्ते' इति जश्त्वेन गः । उक्तं च बुधस्य सरस्वतीदैवत्यम् ।

"उपास्या शारदा सौम्ये विष्णुर्वा सात्त्विको गुरौ ।"

इति । कटकसिंहेशयोश्चन्द्रसूर्ययोः निज इति निजदैवत्यं सूचितम् । अनेन चन्द्रस्य चन्द्रदैवत्यपूर्णिमाव्रतपूजासोमवारव्रतादयः सूर्यस्य सूर्य-नमस्कारादयो व्यञ्जिताः । कन्याधिपबुधस्य के इति केशवः ।

"क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥"

इति स्कान्दवचनेन ब्रह्मेशपिता । अथवा कश्च अश्च ईशश्च केशा इति विग्रहेण

"सृष्टिस्थित्यन्तकरिणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥"

इत्युक्तः परमपुरुषः यस्त्रिमूर्तीनामप्यादिकारणं पुरुषसूक्तप्रतिपादितो विष्णुर्देवता । तुलाधराधिपस्य शुक्रस्य श इति शची देवता । वृश्चिकेशस्य कुजस्य वा इति वाहः स्कन्दः । धनुर्धराधिपस्य गुरोरिन्द्रः । मकराधिपस्य शनेः श इति शवराड् यमः । ततः केत्वादिक्रमेण मीनाधिपस्य केतोः चि इति चित्रगुप्तः । अनेनैव केतुश्चित्रवर्ण इत्यपि सूचितम् । ततः परिशेषात् कुम्भमूलत्रिकोणस्य राहोः क इति कालः । अथवा "सुरगुरुमन्दसौरिगुरवश्च" इत्यत्र सौरिशब्दः राहुपरश्चापि भवतु । तेन राहुरपि कुम्भेशो भवति । अत एव यस्य जन्मसमये राहुः कुम्भे स्थितस्तस्य सर्पभयं नास्तीति केषाञ्चिन्मतम् ।

अर्कादिक्रमाभावे कथं केत्वादिक्रमः? उच्यते । सूर्यादिनाथाः सूर्यादिसप्तग्रहाः क्रमान्मेषात्क्रमेण स्युरित्यनेन राहुकेतू मीनाद्व्युत्क्रमेण स्यातामिति सिद्धम् । 'वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिताः' इत्यत्र चित्रासितशब्दावृत्त्या ताम्रादिवर्णाः सूर्यादिनाथा अर्कादिनाथाः केत्वादिनाथाश्च भवन्तीति वा केतोश्चित्रवर्णत्वं लब्धम् ।

एवं नवग्रहपूजाविधावादित्यादिनवग्रहाणां रुद्राप्स्कन्दविष्णुब्रह्मेन्द्रयमकालचित्रगुप्ताः अधिदेवताः, अग्निगौरीभूमिनारायणेन्द्रशचीप्रजापतिसर्पब्रह्माणः प्रत्यधिदेवताश्चेति दर्शितम् ।

कथं भूमिरधिदेवता कुजस्य? अग्निजदेवत्वाद्भूसुतत्वाच्च ।

"आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति पृथिव्या अग्निजत्वं श्रूयते । अथवा अम्बुशब्दस्यावृत्त्या अम्ब्वग्निजा भूमिरेव ।

कं (परं ब्रह्म) एव अः (विष्णुः) काः इति विग्रहेण शनेः परब्रह्म-विष्णुदेवताकत्वमथवा श्रीवेङ्कटनायकश्रीनिवासदैवत्यमपि सिद्धम् ।

वह्न्यादयः रामाद्यवताराश्च ग्रहाणां देवता इत्युक्तम् । अनेन महान् संशयो जायते । शान्तिकर्मण्यधिदेवताप्रत्यधिदेवतासमेतग्रहपूजा कर्तव्या आहोस्विद् दशावतारपूजा कर्तव्येति । असन्दिग्धम् । वह्न्यादि-शरीरकहरिपूजाया एवात्र विहितत्वात् । कथम्?

"अष्टाङ्गयोगयुक्तानां हृद्यागनिरतात्मनाम् ।
योगिनामधिकारः स्यादेकस्मिन् हृदयेशये ॥"

इति वचनादयोगिनः केवलान्तर्यामिपूजायामधिकाराभावाद्वह्न्यादिपूजैव कर्तव्याऽन्तर्यामिभावेन । सा च त्रिवर्गापवर्गप्रसूतिर्भवति । अन्तर्यामि-भावनाभावे त्रिवर्गफलमेव प्राप्यते । अगीयत च स्वयं भगवता—

"अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥"

इति । योगिनस्तु योगेनैव समस्तपापं नाशयन्ति । एवं चेत् कानुद्दिश्यात्र दशावताराः कथिताः? एकान्तिन उद्दिश्येत्युच्यते । क एते एकान्तिनः? ये मोक्षार्थं भगवन्तं प्रपन्नाः मोक्षफलेन साकं भगवद्भागवतपूजार्थं फलान्त-राण्यपि भगवत एवेच्छन्ति न तु देवतान्तराद्, ये फलान्तरकामा अपि तृणीकृतत्रिवर्गास्त्रिवर्गफलसिद्ध्यर्थं नराधमान् न याचन्ते । अत एव

त्रैवर्गिकतृणीकरणं प्रपत्त्यनुष्ठानस्याव्यवहितपूर्वाङ्गत्वेन दर्शितं भगवता वेङ्कटनाथदेशिकेन। यथा सङ्कल्पसूर्योदये—

"सत्त्वस्थान्निभृतः प्रसादय सतां वृत्तिं व्यवस्थापय
त्रस्य ब्रह्मविदागसस्तृणमिव त्रैवर्गिकान् भावय।
नित्ये शेषिणि निक्षिपन्निजभरं सर्वंसहे श्रीसखे
धर्मं धारय चातकस्य कुशलिन्धाराधरैकान्तिनः॥"

इति। ये पुनर्न कदाऽपि न किञ्चिदपि भगवदनिवेदितं भुञ्जते। ये दम्भासूयाहङ्कारवञ्चनादिमुक्ता जितविषयगणाः सर्वभूतसुहृदः पक्षपातानभिज्ञाः। ये न्याय्यात्पथो न पदमपि प्रविचलन्ति त एवैकान्तिनः। फलान्तरेप्सैवैतेषां परमैकान्तिनां च भेदः। एकान्तिनां विषय एव दैवज्ञैर्दशावतारपूजा शान्तिकर्मणि विधातव्या। न तु देवतान्तरविद्वेषमेव वैष्णवलक्षणं मन्यमानानां भागवतम्मन्यानाम्।

"अब्रुवन्विब्रुवन्वाऽपि नरः किल्बिषमश्नुते।"

इति न्यायेनैकान्त्यनेकान्तिज्ञानाभावतः प्रायश्चित्तविधानेन दैवज्ञः पापमेवाश्नुते। अत एवाचार्येणोक्तं सूर्यादिनाथा इति। वह्न्यादिशरीरकस्य विष्णोरवतारमूर्तय एव सूर्यादिनाथाः। सूरयः आदयः येषां ते सूर्यादयः।

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।"

इत्युक्तसूरयोऽत्र सूरिशब्देन निर्दिष्टाः। ते नित्याः मुक्ताश्च। ते प्रपन्नाश्च सूर्यादयः। प्रपन्नास्तु कर्मयोगज्ञानयोगभक्तियोगेष्वधिकृता अनधिकृता वा आकिञ्चन्यं पुरस्कृत्य अकिञ्चनसुहृदं भगवन्तमेवोपायत्वेनापि मन्यमानास्तमेव शरणं प्राप्ताः। तेषां सूर्यादीनां नाथो भगवानेव। तत्र

नित्यानां मुक्तानां फलाभिसन्ध्यभावात् परमैकान्तिनां मोक्षेतरफलापेक्षाभावात् तेषामपीदं न विहितम् । अतः एकान्तिनामेव जातकगोचरादि सूचितदुष्टफलनिवृत्त्यर्थं दशावतारपूजा विहिता । तेषां कृत एव श्रीमद्वेदान्तदेशिकैर्दशावतारस्तोत्रं, श्रीमच्छङ्करभगवत्पादैर्विष्णुपादादिकेशान्तस्तुतिश्च रचिता । पूर्णप्रपत्तेर्मुखभेदाववोक्तिराचार्यनिष्ठा च । एतेऽधिकारभेदेनैव भिन्ना न तु वस्तुतः । अत एवोक्तमाचार्यैरस्मत्तातपादैर्निष्ठाविमर्शे—

" निष्ठा स्वार्था परार्था तदुभयघटिता च त्रिधैवं विभक्ता
तत्र द्वैविध्यमुक्तं विशदतदितरज्ञानयोगित्वभेदात् ।
वैशद्ये तु स्वनिष्ठाऽव्यवहृतिरितरत्रोक्तिनिष्ठापदं स्या-
दस्वार्थायां परो यः स खलु निजगदे देशिकैरार्यनिष्ठः ॥ " इति ।

वृत्तं शार्दूलविक्रीडितम् । श्लोकेऽस्मिन् ग्रहाणां दिशो देवताश्चोक्ताः । अतो ग्रहदेवतां संपूज्य तत्तद्दिशं गच्छन् शार्दूलविक्रीडितं करोतीति सूचितम् । जयश्रिया युतो भवतीति भावः । तथा च सारावल्याम्—

" पावकजलगुहकेशवशक्रशचीवेधसः कथिताः ।
पूर्वादिग्रहदेवांस्तन्मन्त्रैः समभिपूज्य तामाशाम् ।
धनकनकगजवाहनादीन् प्राप्नोति नृपोऽरितः शीघ्रम् ॥ "

इति ॥ ५ ॥

ग्रहाणां नपुंसकादिविभागं पृथिव्यादिभूतनाथत्वं च कथयति—

**बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नरस्तु शेषाः ।**
**शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण ॥ ६ ॥**

इति। बुधसूर्यसुतौ बुधः शनिश्च नपुंसकाख्यौ भवत इति शेषः। शशि-शुक्रौ युवती भवतः। शेषाः सूर्यकुजगुरवः नरः पुरुषाः। युवती नरः इति क्रममनुसृत्य बुधः स्त्रीनपुंसकः। शनिस्तु पुन्नपुंसकः। पुरुषेषु सूर्यः पितृ-कारकः गुरुः पुत्रकारकः कुजः भ्रातृकारकः। स्त्रीषु चन्द्रः मातृकारकः शुक्रः कलत्रकारकः।

बुधसूरी असुतौ इति वा पदच्छेदः। बुधश्च सूरिश्च बुधसूरी। अत्रापि सूरिशब्देन केतुर्ग्राह्यः। बुधसूरी असुतौ नपुंसकाख्यौ च। एतौ नपुंसकौ असुतौ पुत्रभावविषये असुतत्वमौरससुताभावं दर्शयतः। पुंग्रहविषये नर इति निर्देशात् सर्परूपत्वादनरो राहुः स्त्रीग्रह इत्यपि सूचितम्। सूर्यसुत इति मान्देरपि ग्रहणम्। स चापि नपुंसकः।

भूमिसुतादयः कुजादिताराग्रहाः क्रमेण शिखिभूखपयोमरुद्गणानां वशिनो भवन्ति। कुजस्य वह्निभूतम्। बुधस्य पृथिवी। गुरोराकाशः। शुक्रस्य जलम्। शनेर्वायुः। पूर्वश्लोके 'वह्न्यम्बु' इति देवताप्रकरणे उक्तत्वात् सूर्यस्य वह्निः चन्द्रस्य जलम्। तत्रायं नियमः। ताराग्रहाः पञ्चभूतानि। चन्द्रो जलमयं मनः। सूर्यो वह्निशब्दसूचितज्ञानवदात्मा। अथवा भूमिसुतादीनां सप्तानां शिख्यादयः। अनेन सूर्यस्यापि शिखी वह्निः। शिखिशब्दस्यावृत्त्या शिखिभूः जलं चन्द्रस्य। पुनर्मरुच्छब्द-स्यावृत्त्या वायू राहोः शिखी शिखिनः। भूः मान्देः अनेन मान्दित आभिचारयुक्तौषधप्रयोगश्चिन्त्य इति गम्यते।

गणशब्दः शिख्यादिभिः प्रत्येकं योजनीयः। अतः शिखिगणादीना-मपि वशित्वं भूमिसुतादीनाम्। तत्र शिखिगणस्तेजोरूपचक्षुःपादव्यानम-नोमयकोशाः। एतेषां वशित्वं भूमिसुतस्य। भूगणः पृथिवी गन्धघ्राणेन्द्रियोप-स्थप्राणान्नमयकोशाः। एतेषां वशित्वं बुधस्य। खगणः आकाशशब्द-

श्रोत्रवाक्समानानन्दमयकोशाः। एतेषां वशित्वं गुरोः। मरुद्गणस्तु वायुस्पर्शत्वक्पाण्युदानविज्ञानमयकोशाः। एतेषां वशित्वं शनेः। पयोगणोऽब्रसनापाय्वपानप्राणमयकोशाः। एतेषां वशित्वं शुक्रस्य।

वशिनो भूमिसुतादयः क्रमेण। केन क्रमेण? वासरक्रमेण आहोस्वित्कक्ष्याक्रमेण? अर्धसमवृत्तम्। युग्मपादयोर्जगतीच्छन्दः। अतो द्वादशराशिक्रमेण न वासरक्रमेण नापि कक्ष्याक्रमेणेति गम्यते। शिखीत्युक्त्या वृश्चिकराश्यादित्वं व्यञ्जितम्। वृश्चिकराशिर्हि शिखिनस्तुङ्गो भूमिसुतस्य क्षेत्रं च। अतो वृश्चिकेशस्य कुजस्य शिखी अग्निः। धनुर्धराधिपस्य गुरोः भूः पृथिवी। मकरेशस्य शनेः खं आकाशः। ततः कुम्भमीनमेषाधिपानामुक्तत्वाद् वृषाधिपस्य शुक्रस्य पयः जलम्। मिथुनाधिपस्य बुधस्य मरुद् वायुः। ओजपादयोः त्रिष्टुप्छन्दः। अनेनाऽऽदित्यस्य रुद्ररूपत्वं, अत एव जगतः पितृत्वं च व्यञ्जितम्। परिशेषाच्चन्द्रस्य गौरीरूपत्वं जगतो मातृत्वं च सिद्धम्। तथा चोक्तं ज्ञानप्रदीपिकायां जैमिनिना—

"चन्द्रो माता पिता भानुः सर्वेषां जगतामपि।
गुरुशुक्रारविन्मन्दाः पञ्चभूतस्वरूपिणः।
श्रोत्रत्वङ्नेत्ररसना घ्राणं पञ्चेन्द्रियाणि च।
शब्दस्पर्शरूपरसगन्धाश्च विषया अमी॥
ज्ञानं सौरादिपञ्चानां ग्रहाणां कथयेत्क्रमात्।
गुरोः पञ्च भृगोश्चाब्धिर्ज्ञस्य द्विस्त्रिः कुजस्य च॥
एकज्ञानं शनेरुक्तं शास्त्रे ज्ञानप्रदीपके॥"
"देहो जीवः सितो जिह्वा बुधो नासेक्षणं कुजः।
श्रोत्रं शनैश्चरश्चैव ग्रहावयवमीरितम्॥"

इति। अयं पक्ष एव कृष्णीयेऽप्यादृतः। तथा च तत्र—

"सौरबुधभौमभार्गवगुरवश्चैकेन्द्रियादयो जीवाः ।"

इति । अयं पक्षः प्रश्ने पूर्वोक्तो जातके इति विवेकः ।

गणानामिति प्रश्ने मन्दादिभिरेकादिज्ञानयुतानां चिन्ता कर्तव्येत्यपि सूचितम् । तथा च जैमिनिः—

"बुधवर्गा इमे प्रोक्ताः शङ्खशुक्तिवराटिकाः ॥
मत्कुणाः शिथिली यूका मक्षिकाश्च पिपीलिकाः ।
भौमवर्गा इमे प्रोक्ताः षट्पदा ये भृगोस्तथा ॥
दैवमानुष्यपशवो भुजङ्गा विहगा गुरोः ।
तथैकज्ञानिनो वृक्षाः शनिवर्गाः प्रकीर्तिताः ॥" इति ।

वृत्तं वसन्तमालिका ।

"विषमे ससजा गुरू समे स्यात् सभरायश्च वसन्तमालिकाख्या ।"

इति लक्षणात् । श्लोकं च पुत्रभावे प्रयोजनवत् । अतो वसन्ताधिपशुक्रस्य पुत्रभावस्थित्या शुभफलं वाच्यमिति सूचितम् । प्रयोजनं तु—

"छायां महाभूतकृतां च सर्वेऽभिव्यञ्जयन्ति स्वदशामवाप्य ।"

इति वक्ष्यति । जलवर्षादिप्रश्नादिषु च प्रयोजनं द्रष्टव्यम् ॥ ६ ॥

ग्रहाणां वर्णस्वाम्यं सत्त्वादिगुणस्वरूपत्वं चाह—

**विप्रादितः शुक्रगुरू कुजार्कौ**
**शशी बुधश्चेत्यसितोऽन्त्यजानाम् ।**
**चन्द्रार्कजीवा ज्ञसितौ कुजार्की**
**यथाक्रमं सत्त्वरजस्तमांसि ॥ ७ ॥**

इति । शुक्रगुरू कुजार्कौ शशी बुधश्च असितः विप्रादितः ब्राह्मणादि-त्रिवर्णानामन्त्यजानां चाधिपतय इति शेषः । शुक्रगुरू ब्राह्मणौ । तत्र शुक्रः मध्यमब्राह्मणः । गुरुरुत्तमब्राह्मणः । राशिग्रहसंबन्धवशाच्चापि वक्तव्यम् । कुजः सूर्यश्च क्षत्रियाधिपौ । तत्र पूर्ववत् कुजो माण्डलिकः । सूर्यः सार्वभौमः । शशी बुधश्च वैश्याधिपौ । तत्र शशी त्रिवर्णयुक्तवैश्यः । बुधः शूद्रयुक्तवैश्यः । असितः शनिः अन्त्यजानां शूद्राणामधिपतिः ।

अन्त्यजानामित्यनुलोमप्रतिलोमजानां चण्डालादीनां च ग्रहणम् । तेषामप्यधिपतिः शनिः । तस्योच्चादिबलवशाद्विप्रक्षत्रियसङ्करजक्षत्रियवैश्य-सङ्करजादीनां चण्डालादीनां च वक्तव्यम् ।

असित इत्यनेन राहुकेत्वोरपि ग्रहणम् । तावपि सङ्करजात्यादी-नामधिपौ । तथा चोक्तं पराशरहोरायाम्—

"गुरुशुक्रौ विप्रवर्णौ कुजार्कौ क्षत्रियौ द्विज ।
शशिसौम्यौ वैश्यवर्णौ शनिः शूद्रो द्विजोत्तम ।
राहुश्चण्डालजातिश्च केतुर्जात्यन्तरस्तथा ॥"

इति । केचित् शशी बुधश्चेत्यसितोऽन्तराणामिति पठित्वा शशी वैश्याधिपः, बुधः शूद्राधिपः, शनिरन्तराणामधिपतिरिति व्याकुर्वन्ति । तत्पक्षे सत्यवाक्यं प्रमाणम् । तथा च सत्यः—

"गुरुशुक्रौ रविभौमौ चन्द्रः सौम्यः शनैश्चरश्चेति ।
विप्रक्षत्रियविट्छूद्रसङ्कराणां प्रसूतिकराः ॥"

इति । अत्र ओजपादयोरिन्द्रवज्रावृत्तम् । युग्मपादयोरुपेन्द्रवज्रा । अत इदमाख्यातक्याख्यमुपजातिवृत्तम् । उपजातित्वाज्जातिप्रयुक्तधर्माद्याधिपत्य-स्यापि व्यञ्जकम् । अनेन विप्रत्वाच्छुक्रगुर्वोः सामाधिपत्यं कुजार्कयोर्दण्डाधि-

पत्यं शशिनो दानाधिपत्यं बुधशन्योर्भेदाधिपत्यं च व्यञ्जितानि। अत्र बुधः शनिना सह गृह्यते। इदमर्थमेव शशिबुधाविति न समस्तौ, किंतु शशी बुधश्चेति व्यस्तौ प्रोक्तौ। तथा चोक्तम्—

"साम्नौ भृग्वङ्गिरसौ दण्डाधीशौ दिवाकरोर्वीजौ।
दानाधिपः शशाङ्को भेदस्य बुधार्कपुत्रौ च॥"

इति। उपजातिवृत्तम्। अनेन द्विपदादिजातिविभागश्च सूचितः। द्विपात्प्रवरब्राह्मणवर्णाधिपत्येन गुरुशुक्रौ द्विपदौ। कुजार्कौ चतुष्पदौ। शशी सरीसृपः। बुधशनी पक्षिणौ च। तथा च कृष्णीये—

"सूर्यात्मजेन्दुपुत्रौ पक्षिसमानौ सरीसृपश्चन्द्रः।
द्विपदौ भृगुदेवगुरू चतुष्पदौ भूमिपुत्रार्कौ॥"

इति। जातकप्रश्नादिषु जात्यादिसूचकत्वं प्रयोजनम्।

'चन्द्रार्कजीवा ज्ञसितौ कुजार्की यथाक्रमं सत्त्वरजस्तमांसि' भवन्तीति शेषः। चन्द्रार्कजीवाः सत्त्वगुणाधिपाः। बुधशुक्रौ रजसोऽधिपती। कुजशनी तमसश्च। जातके बलवद्गुणस्वभावो वक्तव्यः। राहुकेतू भूच्छायात्वात् कुजावेव। सूर्यप्रभवत्वाद् आर्की एव। तथापि राहुर्भूच्छाया केतुश्चन्द्रच्छायेति व्यवहर्तुं शक्यम्। अतः कुजार्की इति राहुकेत्वोरपि ग्रहणम्। एवं राहुकेत्वोरपि तमोमयत्वमुक्तम्। कुजार्की राहुरिति पक्षे केतोर्गुरुतुल्यत्वाच्च सत्त्वमिश्रं तमो वक्तव्यम्। यवनपक्षे तु भौमः सात्त्विकः। तथा च तद्वाक्यम्—

"सत्त्वाधिका भास्करभौमजीवा भृग्वात्मजो राजसिकः शशी च।
शनैश्चरस्तामसिको बुधस्तु संयोगतोऽन्यान् लभते विशेषान्॥"

इति । आचार्यस्तु सत्यमतानुसारी । उक्तं च सत्याचार्येण—

"तामसिकौ कुजसौरौ राजसिको भार्गवः शशिसुतश्च ।
जीवशशिभास्कराः सात्त्विका ग्रहप्रकृतयो नृणाम् ॥"

इति । अतश्चन्द्रः रजःसत्त्वं ब्रह्मा । सूर्यस्तमःसत्त्वं शिवः । गुरुः सत्त्वसत्त्वं विष्णुः । कुजः रजस्तमः तमोरजो वा, बुधः सत्त्वरजः, शुक्रः रजोरजः, केतुः सत्त्वतमः, राहुः रजस्तमः, शनिस्तमस्तमः । एतत्क्रममनुसृत्यैव ग्रहमण्डलपूजायां ग्रहा निवेशिताः । सर्वमेतज्जातकप्रश्नशान्तिकर्मादिषु योज्यम् ।

आत्मा सूर्यः । स्त्रीजातकाध्याये स्वभावो लग्नत्रिंशांशेनैवोक्तः । स्त्री इति सकारतकाररेफयुक्त ईकारः । एते सत्त्वतमोरजःप्रकृतिपराः । अतोऽत्रापि सत्त्वादिगुणमात्मभूतसूर्यत्रिंशांशवशाज्ज्ञेयमित्यपि व्यज्यते । तथा च स्वल्पजातके—

"सत्त्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तस्य ।"

इति । सत्त्वादिलक्षणं त्वेवमुक्तम् ।

"सात्त्विकं शौचमास्तिक्यं शुभकर्मरतिर्मतिः ।
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ।
तामसं भयमज्ञानं निद्रालस्यं विषादिता ॥"

इति । सात्त्विकादिश्रद्धाहारादयोऽप्यनेन निरूपणीयाः । चन्द्रार्कजीवाः चन्द्रश्च अर्कश्च चन्द्रार्कौ । चन्द्रार्कौ जीवौ येषां ते चन्द्रार्कजीवाः दिनरात्र्यात्मकदिवसाः । यथाक्रमं यथेति क्रममनुसृत्य । य इत्यक्षरसङ्ख्यया एकं, था इति सप्त, प्रथमादिसप्तमवासरपर्यन्तक्रमेण सूर्यवारात् शनिवासर-

पर्यन्तमित्यर्थः । सत्त्वरजस्तमांस्येतानि गुणानि स्युः । सत्त्वरजस्तमोगुणविभक्ताः स्युरित्यर्थः । अनेन सात्त्विकराजसतामसवेलाः सूचिताः । उक्तं च जातकपारिजाते—

" तमःसत्त्वरजोवेलास्तमःसत्त्वरजस्तमः ।
भवन्त्यर्कदिनादीनामर्धयामैरनुक्रमात् ॥ "

इति । फलं चाप्युक्तं जातकपारिजाते—

" वाग्मी शिष्टाचारधर्मा तपस्वी नित्योत्साही निर्मलो दानशीलः ।
तेजोविद्यारूपवान् सत्यवादी वीतारातिः सत्त्ववेलाप्रजातः ॥
रजोवेलाजातः सुखधनयशोरूपबलवान्
जितारातिः कामातुरमतिरबन्धुः प्रियमनाः ।
तमोवेलाजातः परधनवधूको गतसुखः
शठः स्वामी बन्धुद्विजगुरुविरोधी चपलधीः ॥ "

इति । आचार्यस्तु सत्त्वादिविभागेनैव सिद्धत्वात् फलं नोक्तवान् ।

भद्रानाम्नी उपजातिर्वृत्तम् । अत्र त्रिगुणात्मकाः सप्त ग्रहा उक्ताः । अनेन रुचकभद्रहंसमालव्यशशमिश्रशुद्धाः सप्त पुरुषभेदाः सूचिताः । तथा च संहितायाम् —

" यः सात्त्विकस्तस्य दयास्थिरत्वं सत्त्वार्जवं ब्राह्मणदेवभक्तिः ।
रजोऽधिकः काव्यकलाक्रतुस्त्रीसंसक्तचित्तः पुरुषोऽतिधीरः ॥
तमोऽधिको वञ्चयिता परेषां मूर्खोऽलसः क्रोधपरोऽतिनिद्रः ।
मिश्रैर्गुणैः सत्त्वरजस्तमोभिर्मिश्राश्च ते सप्त सह प्रभेदैः ॥ "

इति ॥ ७ ॥

ग्रहस्वरूपमाह । तत्र प्रथमं सूर्यचन्द्रौ वर्ण्येते—

**मधुपिङ्गलदृक् चतुरश्रतनुः पित्तप्रकृतिः सविताल्पकचः ।**
**तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक् ॥८॥**

इति । सविता सूर्यः मधुपिङ्गलदृक् मधुवत् पिङ्गले दृशौ यस्य सः । चतुरश्रतनुः । पित्तप्रकृतिः पित्तमग्न्यात्मकं तीव्रतृष्णाबुभुक्षुत्वकारणं भवति । तत्प्रकृतिकः सविता । अल्पकचश्च भवति । भावफलाध्याये एतस्य प्रयोजनं द्रष्टव्यम् । तत्र राशिराशिनाथप्रकृतिवशात्फलमुच्यते । मधुपिङ्गलदृगिति सूर्यस्य लग्नस्थितिर्नयनविकलत्वं जनयतीति सिद्धम् । जातके व्याधिप्रश्ना दिष्वेतद्योज्यम् । बलवतः सूर्यस्य लग्नस्थितिर्नयनवैकल्यकरी । उक्तं च—

"मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः ।"

इति । एवमेवाल्पकचत्वं नष्टकचत्वं सूचयति ।

चतुरश्रतनुरित्यादिस्वरूपकथनं नष्टादिद्रव्यस्याकारज्ञानार्थम् । तथा च कृष्णीये—

"आदौ चतुरश्रकरास्त्र्यश्रं मध्ये ग्रहाः प्रकुर्वन्ति ।
राश्यवसाने वृत्तं स्वरूपतुल्या हि वा कार्याः ॥"

इति । पुनर्देशविशेषचिन्तायां मधुपिङ्गलवर्णत्वं चतुरश्राकारत्वं क्वचित्क्वचि-त्तृणादिमात्रयुतत्वं च सूर्याद्वाच्यम् । एवं सर्वग्रहाणां चिन्त्यम् ।

शशी तनुवृत्ततनुः ह्रस्ववृत्तशरीरवान् भवति । बहुवातकफः वात-कफमिश्रप्रकृतिः । पृथिवीवाय्वात्मको वातः, जलाकाशात्मकः कफः । प्राज्ञः । मृदुवाक् न रूक्षवचनः । शुभदृक् शोभननयनः । रविः पित्त-प्रकृतिः । तस्मात् पित्तप्रधानतृष्णाज्वरादयो वक्तव्याः । चन्द्रो वात-कफात्मकः । तस्माद् वातकफादिरोगा वक्तव्याः । राशिवशाद्ग्रह-सम्बन्धवशाच्चोह्यम् । एवमेव सूर्यचन्द्रवद्रोगादयः सर्वग्रहाणां चिन्तनीयाः ।

वृत्तं तोटकमोजपादयोः। "इह तोटकमम्बुधिसैः कथितम्" इति लक्षणाज्जगती छन्दः। अनेन द्वादशराशिषु सूर्यचन्द्रौ यद्राशिमाश्रितौ तदनुगुणलक्षणयुक्तो भवति जात इति सूचितम्। 'तुट कलहकर्मणि' इति धातोर्निष्पन्नः तोटकशब्दः। अनेन विबलाभ्यां सूर्यचन्द्राभ्यां जाताः सङ्कीर्णा भवन्तीति च सूचितम्।

तथा च संहितायाम्—

"सत्त्वमहीनं सूर्याच्छारीरं मानसं च चन्द्रबलात्।
यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमान्॥
तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यैः।
अबलरवीन्दुयुतैस्तैः सङ्कीर्णा लक्षणैः पुरुषाः॥" इति।

युग्मपादयोस्तोटकस्यादिलघ्वोः स्थाने गुरुरेको निवेशितः। अनेन चतुरश्ररूपस्य वृत्तसंयुतत्त्वमपि व्यञ्जितम्। यथा चतुरश्ररूपिणः सूर्यस्य वृत्तासनस्थितिः वृत्ताकारस्य चन्द्रस्य चतुरश्रपीठस्थितिः। अथवा तनु-वृत्ततनुरित्यत्र तनुवृत्तेत्यक्षरचतुष्टयसूचितचतुरश्रपीठत्वं स्यात्। सूर्यस्य तु वृत्तपीठोक्त्या चतुरश्रतनुरिति चतुरश्रपीठत्वस्याप्रसक्तिः। पुनरपि जगती-छन्दस्थतोटकं युग्मपादयोस्त्रिष्टुभीकुर्वन् त्रिष्टुप्छन्दोऽव्याहतिऋर्षिं काश्यपं स्मारयत्याचार्यः। अनेन सूर्यस्य कश्यपगोत्रजत्वं व्यञ्जितम्। जगती-च्छन्दसा जगत्याः सृष्टिस्थितिसंहारकर्तॄणां ब्रह्मविष्णुरुद्राणां स्मरणम्। अनेन चन्द्रस्य त्रिमूर्तीनां जनकस्य अत्रेर्गोत्रजत्वं व्यञ्जितम्। तथा च वसिष्ठः—

"वेदीमध्ये ललितकमले कर्णिकायामधःस्थः
सप्ताश्वोऽर्कोऽरुणरुचिवपुः सप्तरज्जुर्द्विबाहुः।

गोत्रे रम्ये बहुविधगुणे काश्यपाख्ये प्रसूतः
कालिङ्गाख्ये विषयजनितः प्राङ्मुखः पद्महस्तः ॥"
"आग्नेयभागे सरथो दशाश्वश्चात्रेयजो पावनदेशजश्च ।
प्रत्यङ्मुखस्थश्चतुरश्रपीठे गदावराङ्को हिमगुः सिताभः ॥"

इति । वृत्तं मात्रासमकं वा । अनेन सूर्यः समचतुरश्ररूप इति दर्शितम् ॥८॥

अधुना कुजबुधयोः स्वरूपमाह—

**क्रूरदृक्तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः ।**
**श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफ प्रकृतिश्च ॥ ९ ॥**

इति । क्रूरदृक् कुजः । क्रूरदृगिति गौणं नाम पर्यायकथनश्लोकोपदिष्टम् । तरुणमूर्तिः युवा । उदारः । पैत्तिकः पित्तात्मकः । सुचपलः । कृशमध्यः मध्ये कृशस्वरूप इत्यर्थः । ढक्काकार इति भावः । पैत्तिकः सुचपल इत्युन्मादरोगकारकत्वं व्यञ्जितम् । क्रूरदृगिति हिंसारुचित्वं सूचितम् ।

तरुणमूर्तिः इत्यत्र तरुणेत्यक्षरत्रयेण त्रिकोणपीठसंस्थितिर्वाच्या कुजस्य । उदार इति श्रीमद्रामायणप्रसिद्धं भरतसैन्यस्य कृतं भरद्वाजातिथ्यं स्मारितम् । अनेन भरद्वाजकुलप्रसूतत्वमपि व्यञ्जितम् । तथा च वसिष्ठः—

"याम्ये गतः शक्तिगदात्रिशूलो वरप्रदो याम्यमुखोऽतिरक्तः ।
कुजस्त्ववन्तीविषयस्त्रिकोणस्तस्मिन् भरद्वाजकुले प्रसूतः ॥"

इति ।

ज्ञः बुधः । श्लिष्टवाक् श्लेषवचनः । व्यङ्ग्यार्थप्रधानवचन इति भावः । सततहास्यरुचिः हास्यरसप्रियः हास्यरसोत्पादकवचनकुशलश्च । पित्तमारुतकफप्रकृतिश्च भूमितत्त्वस्वामित्वात् शब्दस्पर्शरूपरसगन्धात्मक-

त्वात् पञ्चभूतात्मकत्रिदोषस्वरूपः । सन्निपातप्रकृतिरित्यर्थः । अत एव योग-वाही भवति ।

सततहास्यरुचिः सततं हन्तीति सततहा बाणः । तस्य आस्यं मुखं सततहास्यम् । तदेव रुचिः कान्तिः मण्डलं यस्य सः । बाण-मण्डलस्थ इत्यर्थः । चन्द्रपुत्रत्वादात्रेयगोत्रत्वमपि सिद्धम् । उक्तं च वसिष्ठ-संहितायाम् —

"उदङ्मुखो मागधजो हरिस्थस्त्वात्रेयगोत्रः शरमण्डलस्थः ।
सखड्गचर्मोरुगदाधरो ज्ञस्त्वीशानभागे वरदः स पीतः ॥"

इति । पुनः सततहास्यरुचिरिति सततेत्यक्षरत्रयसूचितत्रिकोणरूपेण हास्य-रुचिर्भवतीति त्रिकोणरूपत्वं व्यञ्जितम् ।

वृत्तं स्वागता । "स्वागतेति रनभा गुरुयुग्मम्" इति लक्षणात् । स्वागतं तु महापुरुषाणामेव । अतः पञ्चमहापुरुषयोगजातानां तद्योग-कारकस्वभावादि वक्तव्यमिति व्यञ्जितम् ॥ ९ ॥

गुरुशुक्रयोः स्वरूपमाह—

**बृहत्तनुः पिङ्गलमूर्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः ।**
**भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्धजः ॥१०॥**

इति । बृहस्पतिः बृहत्तनुः स्थूलशरीरवान् । पिङ्गलमूर्धजेक्षणः पिङ्गलकेशः पिङ्गलनयनश्च भवति । श्रेष्ठमतिः श्रेष्ठा मतिर्यस्य स इति विग्रहः । श्रेष्ठा शास्त्राभ्यासादिभिः संस्कृता च । कुशाग्रबुद्धिः पण्डितश्चेत्यर्थः । कफात्मकः कफप्रधानः आकाशात्मकत्वात् ।

बृहत्तनुः बृहद्वृत्ततनुरित्यर्थः । कथं वृत्तत्वमिति चेदुच्यते । चन्द्रस्वरूपोपदेशे तनुवृत्ततनुरित्यत्र तनुरेव वृत्ततनुः तनुवृत्ततनुरिति व्याख्यया,

अत्र स्वरूपकथने यत्र यत्र तनुशब्दः प्रयुज्यते तत्र तत्र वृत्ततनुरिति बोध्यम्। अनेनैव बृहद्वृत्ततनुरिति बृहद्वृत्तशब्दस्थाक्षरचतुष्टयेन चतुरश्रपीठत्वमपि व्यञ्जितम्। पुनर्बृहत्तनुरिति स बृहद्रूपस्तनुरूपश्च भवति। दीर्घश्च ह्रस्वश्च भवति। दीर्घायतवृत्तरूपो दीर्घचतुरश्रमण्डलस्थश्च भवतीत्यर्थः। अङ्गिरा इति पूर्वमेव कथितत्वाद् अङ्गिरोगोत्रसमुद्भव इत्यपि सिद्धम्। तथा च वसिष्ठः—

> "सौम्ये सुदीर्घे चतुरश्रपीठे रथोऽङ्गिराः सौम्यमुखः सुपीतः।
> द्रुन्द्राक्षमालाजलपात्रधारी सिन्ध्वाख्यदेशे वरदश्च जीवः॥"

इति। कृष्णीये च—

> "चतुरश्रौ रविभौमावायतवृत्तो गुरुर्बुधस्त्र्यश्रः।
> आयतचतुरश्राङ्गौ भुजगेन्द्रशनैश्चरौ ज्ञेयौ॥
> इन्दुर्मण्डलगात्रो दैत्यामात्योर्धवृत्तचित्राङ्गः।
> दिव्याभरणोपस्करभोजननष्टादयो ग्राह्याः॥"

इति।

भृगुः शुक्रः सुखी भोगासक्तः। कान्तवपुः कमनीयशरीरः। सुलोचनः शोभनदृक्। कफानिलात्मा कफवातप्रकृतिः जलात्मकत्वात्। असितवक्रमूर्धजः कृष्णकुञ्चितकेशः। भृगुरिति भृगुगोत्रजत्वम्। कान्तवपुः कान्तस्य कमनीयस्य चन्द्रस्य वपुरिव वपुः यस्य सः। वृत्ताकृतिरित्यर्थः। किन्तु सितवक्रमूर्धजः। एवमपि पदच्छेदः। 'षो अन्तकर्मणि' इति धातोः क्तान्तः सितशब्दः। अन्तकर्मकरवक्रमूर्धज इत्यर्थः। वृत्तखण्डकृतपञ्चाश्रमूर्तिरिति भावः। तनुवृत्ततनुरिति चन्द्रस्य पञ्चपदैः स्वरूपमुक्तम्। इहापि सुखी कान्तवपुः सुलोचनः कफानिलात्मा असितवक्रमूर्धजः इति पञ्चपदैः स्वरूप-

मुक्तम् । अनेनायमर्थः सूचितः । पञ्चभिः परिधिखण्डैरुद्भूतपूर्णवृत्ततनुश्चन्द्रः, शुक्रस्तु पञ्चभिः परिधिखण्डैर्विपरीतस्थितैः, अत एव पञ्चभिर्वक्ररेखाभिरुद्भूतस्य पञ्चकोणस्य रूपं बिभर्ति । कान्तवपुरिति कमनीयवक्रपञ्चकोणपीठवानपि भवति । जैमिनीयज्ञानप्रदीपिकायां त्वष्टाश्रत्वं शुक्रस्योक्तम् । तथा च तत्र—

"चतुरश्रं च वृत्तं च कृशमध्यं त्रिकोणकम् ।
दीर्घवृत्तं तथाष्टाश्रं चतुरश्रायतं तथा ॥
दीर्घश्चेति क्रमादेते सूर्याद्याकृतयो मताः ॥"

इति । अष्टाश्ररूपत्वकल्पनेन पञ्चकोणमण्डलकल्पनेन च जातो मिथो विरोधः परिहार्यः । एतत्पक्षे ईकान्तवपुरिति पदच्छेदः कार्यः । ईः प्रकृतिः । उमा । तस्याः कान्तः अष्टमूर्तिः रुद्रः । तस्य वपुरिव वपुः (संख्यया) यस्य स इत्यष्टकोणत्वं सिद्धम् ।

कान्तवपुः कान्तस्य भर्तुः वपुः । शुक्राद् भर्तृशरीरचिन्ता कर्तव्या । मङ्गल्यकारकस्तु जीव एव । तथा च मन्त्रेश्वरः—

"ज्ञानं सद्गुणमात्मजं च सचिवं स्वाचारमाचार्यकं
माहात्म्यं श्रुतिशास्त्रधीस्मृतिमतिं सर्वोन्नतिं सद्गतिम् ।
देवब्राह्मणभक्तिमध्वरतपःश्रद्धाश्च कोशस्थलं
वैदुष्यं विजितेन्द्रियं धवसुखं संमानमीड्याद्दयाम् ॥" इति ।

वृत्तं वंशस्थम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् । उपेन्द्रवंशा वा । वंशस्थत्वाद् वंशवृद्धिसूचकम् । पञ्चमहापुरुषयोगेषु गुरुशुक्रकृतहंसकमालवयोर्योगयोर्वंशवृद्धिकरत्वं व्यञ्जितम् । हंसकमालवोद्भवाः पुत्रवन्तो भवन्तीत्यर्थः । पञ्चमहायोगा उत्तरत्र निरूपयिष्यन्ते ॥ १० ॥

शनिस्वरूपं धातुसाराधिपत्यं चाह—

मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः
स्थूलद्विजः परुषरोमकचोऽनिलात्मा ।
स्नाय्वास्थ्यसृक्त्वगथशुक्रवसे च मज्जा
मन्दार्कचन्द्रबुधशुक्रसुरेड्यभौमाः ॥ ११ ॥

इति । मन्दः अलसः उत्साहहीनः । कपिलदृक् विकृतनेत्रः । कृशदीर्घगात्रः कृशं च दीर्घं च गात्रं यस्य सः । अस्य गात्रं कृशं दीर्घं च भवति । स्थूलद्विजः स्थूलाः द्विजाः दन्ताः यस्य सः, विकारदन्तवानित्यर्थः । परुषरोमकचः परुषश्मश्रुकेशवान् तद्धारणशीलश्च भवति । अनिलात्मा वातप्रकृतिश्च भवति । श्मश्रुकचयोरन्तराभावसूचनार्थं रोमकच इत्युक्तम् ॥

पुनः कृशदीर्घगात्र इति चापासनस्थितिर्व्यञ्जिता । कृशदीर्घ इत्यक्षरचतुष्टयेन चतुरश्ररूपत्वं व्यञ्जितम् । बृहत्तनुरितिवत् कृशदीर्घशब्देन कृशत्वदीर्घत्वयुक्तत्वाद् दीर्घचतुरश्ररूप इति दर्शितम् । स्थूलद्विजः स्थूलः द्विजः पक्षी यस्य स इति गृध्रवाहनत्वं व्यञ्जितम् । सूर्यपुत्रत्वात् कश्यपगोत्रजत्वमपि सिद्धम् । उक्तं च वसिष्ठसंहितायाम्—

"चापासने गृध्ररथः सुनीलः प्रत्यङ्मुखः काश्यपजः प्रतीच्याम् ।
सशूलचापेषुवरप्रदश्च सौराष्ट्रदेशे प्रसवश्च सौरिः ॥"

इति । कृशदीर्घगात्र इति प्रजापतिदैवत्याच्च शिश्नकारकत्वं व्यञ्जितम् । शोणितात्मकस्य कुजस्य भगकारकत्वं स्पष्टम् । शुभयोगदृष्टिरहितस्य कामकारकस्य कामाधिपस्य च कुजशनियोगदृष्टिवशात्तत्त्चुम्बनं वाच्यम् ।

मन्दोऽलसः कपिलदृक्कृशदीर्घगात्र इति राहोः स्वरूपमप्युक्तम् । मन्द इति बुद्धिहीनत्वम् । अलस इति हिक्कत्वम् । कपिलदृगिति च रोग-

जातकपिलवर्णत्वम् । कुष्ठित्वमित्यर्थः । कृशदीर्घगात्र इति सर्परूपत्वम् । कपिलदृगिति सिंहवाहनत्वमपि व्यञ्जितम् । कृशदीर्घगात्र इति चतुरश्र-रूपत्वम् । तत्र मन्दः अलस इति दीर्घत्वात् कृशत्वं मन्दं प्राप्यत इति व्यज्यते । अनेन शूर्पासनस्थत्वमपि स्पष्टम् । तथा च फलदीपिकायाम्—

"नीलद्युतिर्दीर्घतनुः कुवर्णः पामी सपाषण्डमतः सहिक्कः ।
असत्यवादी कपटी च राहुः कुष्ठी परान्निन्दति बुद्धिहीनः ॥"

इति । वसिष्ठश्च—

"पैठीनसो बर्बरदेशजातः शूर्पासनः सिंहगतः सधूम्रः ।
याम्यायने नैर्ऋतगः कराले वरप्रदः शूलसचर्मखड्गः ॥"

इति । स्थूलद्विजः परुषरोमकचोऽनिलात्मा इति केतुस्वरूपमुक्तम् । स्थूल-द्विज इति क्रूरदन्तयुतवृकासनत्वम् । स्थूलद्विज इति वेषमात्रेण द्विजो न तु शीलेन इति पतितत्वम् । परुषरोमकच इति वमद्विषरोमादित्वम् । तथा च

"वृकासनो जैमिनिगोत्रजोऽन्तर्वेदीसुदेशः सुविचित्रवर्णः ।
याम्यायने वायुदिशि प्रखड्गचर्मा शिखी चाष्टशतोऽथ चैकः ॥"

इति वसिष्ठः । फलदीपिकायां च—

"रक्तोग्रदृष्टिर्विषवागुदग्रदेहः सशस्त्रः पतितश्च केतुः ।
धूम्रद्युतिर्धूमप एव नित्यं व्रणाङ्किताङ्गश्च कृशो नृशंसः ॥"

इति । केतुरित्यन्वर्थसंज्ञया केतुरूपत्वं केतोः शनितुल्यत्वाद्राहोरायत-चतुरश्रत्वं च सिद्धम् ।

"मधुपिङ्गलदृग्" इत्यादिभिर्देशविशेषस्वरूपं व्यञ्जितमिति पूर्व-मेवोक्तम् । तदत्र स्पष्टं निरूपयामः । यथा भूमिप्रश्ने सूर्यस्तत्कालारूढाधिपश्चे-न्मधुपिङ्गलदृगिति मधुवर्णमृद्युतत्वं, चतुरश्रतनुरिति समचतुराकारत्वं, पित्त-

प्रकृतिरित्युष्णाधिक्ययुतत्वं, अल्पकच इति वृक्षराहित्यं च वाच्यम् । चन्द्रः आरूढाधिपश्चेत्, तनुवृत्ततनुरिति वृत्ताकृतित्वम् अविस्तृतत्वं च, बहुवातकफ इति वायुजलपूरितत्वं, प्राज्ञ इति पण्डितबाहुल्ययुतत्वं, शुभदृगिति फलपुष्टियुतत्वं च वाच्यम् । कुजः आरूढाधिपश्चेत् क्रूरदृगित्यश्मसंयुतत्वं, तरुणमूर्तिरिति वासयोग्यत्वं, उदार इति व्ययकर्तृत्वं, पैत्तिक इत्युष्णाधिक्यजनितोन्मादरोगियुतत्वं, सुचपल इत्यनिश्चितफलपुष्टिवत्त्वं, कृशमध्य इति विस्तृतोभयपक्षवत्त्वं च वाच्यम् । बुधः आरूढाधिपश्चेत्, श्लिष्टवागित्यान्तरच्छिद्रयुतजनयुतत्वं, सततहास्यरुचिरिति हास्यप्रियजनयुतत्वं, पित्तमारुतकफप्रकृतिश्चेत्युष्णाधिक्यातिवृष्टिचण्डवातजनितदोषयुतत्वं च वाच्यम् । गुरुरारूढाधिपश्चेद् बृहत्तनुरित्यतिविस्तृतत्वं, पिङ्गलमूर्धजेक्षण इति पिङ्गलवर्णमृद्युतत्वं, श्रेष्ठमतिरिति सन्मार्गानुगामियुतत्वं, कफात्मक इति जलाधिक्ययुतत्वं च वाच्यम् । शुक्रः आरूढाधिपश्चेत् सुखी इत्यारोग्ययुतजनयुतत्वं, कान्तवपुरिति कमनीयशरीरमृदुवाग्जनयुतत्वं, सुलोचन इति सुगन्धमृद्युतत्वं, कफानिलात्मा इति कदाचिच्चण्डवातातिवृष्टिजनितदोषयुतत्वं, असितवक्रमूर्धज इति लताकृतकृत्रिममण्डपयुतत्वं च वाच्यम् । शनिरारूढाधिपश्चेत्, अलस इति रोगकर्तृत्वं, कपिलदृगिति ताम्रवर्णमृद्युतत्वं, कृशदीर्घगात्र इति तदाकारत्वं, स्थूलद्विज इति बृहत्पाषाणयुतत्वं, परुषरोमकचोऽनिलात्मा इत्यस्निग्धवृक्षयुतत्वं च वाच्यम् ।

वृत्तं वसन्ततिलका । अनेन शनिर्बलयुक्तः पञ्चमहायोगान्तर्गतशशकयोगकर्ता अथवा इतरशुभयोगकर्ता भवति चेज्जातमेवं न कुरुते । किंतु वसन्ताधिपशुक्रवत् कान्तवपुषं कुरुत इति सूचितम् । "गुरुस्वर्क्षोच्चस्थे नृपतिसदृशो ग्रामपुरपः सुविद्वांश्चार्वङ्गः" इत्याचार्यो वक्ष्यति ।

'मन्दार्कचन्द्रबुधशुक्रसुरेड्यभौमाः' यथाक्रमं स्नायुः अस्थि असृक् त्वक् शुक्लवसे मज्जा च भवन्तीति शेषः। "अथशब्दः कार्त्स्न्ये। यथोक्तानां कार्त्स्न्येनाधिपतयः पृथक् पृथगात्मीयधातुसारदेहा इत्यर्थः" इति विवरणकर्ता रुद्रः। मन्दः स्नायुसारः। स्नायुः ग्रथितसिरासङ्घः। अर्कः अस्थिसारः। चन्द्रः रुधिरसारः। मांसमपि गृह्यते रुधिरशब्देन। मृतावस्थायां रुधिरस्याभावान्मांसविषयकज्ञानं चन्द्रादिति बोध्यम्। बुधस्त्वक्सारः। पच्यमानाद् असृजः सप्त त्वचो जायन्ते। अतस्त्वक्शब्देन रसधातोरेव ग्रहणम्। शुक्रः शुक्लसारः। गुरुः वसासारः। मेदःसार इत्यर्थः। भौमो मज्जासारः। अस्थ्नामन्तर्वर्तमानतदवष्टम्भकरधातोर्मज्जा इति संज्ञा। प्रयोजनं जन्मनि बलवद्ग्रहधातुसारत्वं वक्तव्यम्। विपरीते व्याधिना पीडा च। लग्नवांशकस्वामिवशाद् व्याधिप्रश्ने तत्तद्धात्वनुगुणरोगादिपीडा वक्तव्या।

अत्र अथशब्दः राहुकेतुमान्दिद्योतकः। बुधो योगवाहीति पूर्वमेवोक्तम्। शुक्रशुद्धचैव योगवाहित्वं भवति। अतो बुधशुक्रयोर्मध्ये तेषां निवेशनम्। राहुकेतू एव मूलाधारगतसर्परूपकुण्डलिनीशक्तिरूपौ। राहुर्मुखं केतुस्तस्य सर्पस्य पुच्छम्। तत्पुच्छेनैव सुषुम्नानाडीशुद्धिः कर्तव्या। अत एव केतोर्ज्ञानकारकत्वमुभयोः पुण्यतीर्थस्नानकारकत्वं च शास्त्रेषूक्तम्। अथशब्दप्रयोगेन शुक्लवसे च मज्जा प्रधानधातव इत्यपि सूचितम्। रोगप्रश्न एते धातवस्त्रिदोषव्याप्ताश्चेद्रोगः प्रयत्नसाध्य इति वाच्यम्। अन्यत्र तु साध्य इति वाच्यम्। शुक्रसुरेड्यभौमवासराश्चिकित्सारम्भस्य शुभा इत्यप्यथशब्देन सूचितम्। अथशब्द एव सूर्यव्यञ्जको भवितुमर्हति। अनेन आदित्यवासरोऽपि शुभो भवति। शुक्लवसे इति समासेन गुरुशुक्रयोरतीवशुभदत्वं दर्शितम्।

वृत्तं वसन्ततिलकम् । अनेन वसन्ताधिपशुक्रस्य धातोः शुक्रस्य प्राधान्यं सूचितम् । शुक्रशुद्धिर्हि वंशवृद्धेरारोग्यस्य च प्रधानकारणं भवति । उक्तं च संहितायाम्—

"कुसुमसमगन्धशुक्रा विज्ञातव्या महीपालाः ।
मधुगन्धे बहुवित्तो मत्स्यगन्धे बहून्यपत्यानि ॥
तनुशुक्रः स्त्रीजनको मांसगन्धो महाभोगी ।
मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः ॥
शीघ्रं मैथुनगामी दीर्घायुरतोऽन्यथाऽल्पायुः ॥"

इति । शुक्रशुद्धिः शोणितशुद्धेरप्युपलक्षणम् । शोणितशुद्धिश्चाचार्येण संहितायामुक्ता—

"शशशोणितसङ्काशं लाक्षारससंनिकाशमथवा यत् ।
प्रक्षालितं विरज्यति यच्चासृक् तद्भवेच्छुद्धम् ॥
यच्छन्दवेदनावर्जितं त्र्यहात्सन्निवर्तते रक्तम् ।
तत्पुरुषसंप्रयोगादविचारं गर्भतां याति ॥"

इति ॥ ११ ॥

अथ ग्रहाणां स्थानद्रव्यर्तुस्वाम्यमाह—

**देवाम्ब्वग्निविहारकोशशयनक्षित्युत्कराः स्युः क्रमा-**
**द्वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं पाटितम् ।**
**ताम्रं स्यान्मणिहेमशुक्तिरजतान्यर्काच्च मुक्तायसी**
**द्रेक्काणैः शिशिरादयः शशिरुचज्ञग्वादिषूद्यत्सु वा ॥१२॥**

इति । अर्कात् अर्कादारभ्य । ल्यब्लोपे पञ्चमी । देवाम्ब्वग्निविहारकोश-शयनक्षित्युत्कराः स्थानानि भवन्तीति शेषः । अर्कस्य देवालयः । अनेन सूर्यस्य सर्वदेवतादैवत्यं व्यञ्जितम् । चन्द्रस्य जलाशयः । समुद्रनदीवापीकूपतटाककुल्यादयः अम्बुशब्देन गृह्यन्ते । अत्र निष्कर्षश्चन्द्रबलवशाद्राशिवशाच्च भवति । भौमस्य अग्निः । तस्य बलवशात् शुभाशुभदृष्टिवशाद्राशिवशाच्च वैदिकाग्निः पाकाग्निः श्मशानाग्निर्वेति कल्पनीयः । बुधस्य विहारः उद्यानादिक्रीडास्थानानि । कुमारो हि सः । गुरोः कोशः । कोशगृहम् । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयानां पञ्चकोशानां चाधिपत्यं सूचितम् । कोशशब्देन गुरोर्धनाधिपत्यं च सूचितम् । शुक्रस्य शयनगृहम् । शनेः क्षित्युत्करः उच्छिष्टक्षेपणस्थानम् । हृतनष्टचोरप्रश्नादिषु बलवद्ग्रहोक्तस्थानं वक्तव्यम् । प्रसवज्ञानं चैवमेव कर्तव्यम् । क्षित्युत्कर इति शनेः क्षितेः उद्धतकरः क्षित्युत्करः । वल्मीका औन्नत्येन क्षितेरुद्धत-इव दृश्यन्ते । अतः राहोर्वल्मीकं स्थानमिति व्यञ्जितम् । केतोश्च वल्मीकमेव । मन्दस्यापि वा । तथा च पराशरः—

"शिखिस्वर्भानुमन्दानां वल्मीकं स्थानमुच्यते ।"

इति । पुनरप्यर्कादारभ्य । अर्कस्य स्थूलं स्थूलसूत्रनिर्मितं वस्त्रम् । चन्द्रस्य अभुक्तं नूतनं वस्त्रम् । कुजबुधयोरग्निकहतम् । कुजस्याग्निदग्धैकदेशं वस्त्रम् । बुधस्य जलक्लिन्नच्छिन्नं मलिनं वस्त्रम् । गुरोर्मध्यं नातिनवं नातिजीर्णम् । बलवशात् पीतपट्टवस्त्राद्यपि वक्तव्यम् । शुक्रस्य दृढं वस्त्रम् । सितपट्टवस्त्रमपि वक्तव्यम् । शनेः पाटितं छिन्नभिन्नजीर्णवस्त्रम् । बलव-शात्कृष्णवर्णपट्टवस्त्रादि । सूतिकालवस्त्रज्ञानं हृतनष्टचोरप्रश्नादिषु च वस्त्र-ज्ञानं प्रयोजनम् । पराशरस्त्वेवमाह—

“गुरोः पीताम्बरं विप्र भृगोः क्षौमं तथैव च ।
रक्तक्षौमं भास्करस्य इन्दोः क्षौमे सिते द्विज ॥
बुधस्य कृष्णक्षौमं तु रक्तचित्रं कुजस्य च ।
वस्त्रं चित्रं शनेर्विप्र पट्टवस्त्रं तथैव च ॥”

राहोरपि पाटितमेव । दृढशब्दपरतः प्रयोगाददृढमित्यर्थः । राहोरदृढं वस्त्रम् । तथा च कृष्णीये—

“मलिनच्छिन्नदृढादृढदग्धस्थूलाम्बुधौतजीर्णानि ।
सौम्येन्द्वार्यभुजङ्गमकुजरविभृगुसौरजानां स्युः ॥”

इति ।

अथ ग्रहाणां द्रव्याण्याह । अर्कादारभ्य । अर्कस्य ताम्रम् । चन्द्रस्य मणयः रत्नानि । कुजस्य हेम स्वर्णम् । बुधस्य शुक्तिः । गुरोः रजतं रूप्यम् । रजतानीति विरमति परतस्त्वर्कशब्दः । अतो गुरोः बलवत्त्वे स्वर्णमिति व्यज्यते । तथा च बादरायणः—

“जीवस्य रूप्यं स्वगृहे स्थितस्य तस्यैव हेमं भृगुजस्य मुक्ता ।”

इति । शुक्रस्य मुक्ता मौक्तिकम् । शनेः अयः कृष्णलोहः । मुक्तायसी इति सीकारेण शनेः सीसमपि वक्तव्यम् । तथा चोक्तं बादरायणेन—

“तीक्ष्णांशुदेहप्रभवस्य सीसं कृष्णायसं च प्रवदन्ति तज्ज्ञाः ।”

इति सीकारः राह्वर्थम् । राहोः सीसं द्रव्यमिति गम्यते । उक्तं च पराशरेण—

“सीसं राहोर्नीलमणिः केतोर्ज्ञेयो द्विजोत्तम ।”

इति । बलवद्ग्रहवशात् सूतिकागृहद्रव्यनिरूपणं हृतनष्टप्रश्नादिषु द्रव्याप्तिनाशज्ञानं च प्रयोजनम् ।

अधुना ग्रहाणां ऋतव उच्यन्ते । शशुरुचज्ञग्वादिषु । शशुरुचेति ग्रहाः आद्यक्षरैर्निर्दिश्यन्ते । श शनिः । शु शुक्रः । रु रुधिरः । च चन्द्रः । ज्ञ ज्ञः । गु गुरुः । आदिषु शशुरुचज्ञगव आदयः येषां ते शशुरुचज्ञग्वादयः । एतेषु उद्यत्सु द्रेक्काणैर्वा । एतेषां लग्ने द्रेक्काणे वा शिशिरादयः ऋतवो वक्तव्याः । एवं शनिलग्ने द्रेक्काणे वा शिशिरः । शुक्रलग्ने द्रेक्काणे वा वसन्तः । कुजलग्ने द्रेक्काणे वा ग्रीष्मः । चन्द्रलग्ने द्रेक्काणे वा वर्षः । बुधलग्ने द्रेक्काणे वा शरत् । गुरुलग्ने द्रेक्काणे वा हेमन्तः । रु इत्यनेन रविरपि व्यञ्जितः । उकार उच्चारणार्थं स्यात् । तदा रेफः रविरुधिरावुभावपि गृह्णीयात् । तेन रवेरपि ग्रीष्मऋतुरेव वक्तव्यः । स्पष्टतरमुच्यते नष्टजातकाध्याये—'ग्रीष्मोऽर्कलग्न' इति । गु इति केतोः दि इति राहोः । गु इत्यक्षरसङ्ख्यया त्रीणि दि इत्यक्षरसङ्ख्या अष्टौ । अतोऽष्टौ मासाः राहोस्त्रयो मासाः केतोरिति चावगन्तव्यम् ।

तथा च पराशरः—

"भृगोः खलु वसन्तश्च कुजभान्वोश्च ग्रीष्मकम् ।
चन्द्रस्य वर्षा विज्ञेया शरच्चैव तथा विदः ॥
हेमन्तोऽपि गुरोर्ज्ञेयः शनेस्तु शिशिरो द्विज ।
अष्टौ मासाश्च स्वर्भान्वोः केतोर्मासत्रयं द्विज ॥"

इति । प्रयोजनं नष्टजातके हृतनष्टादिचिन्तायां च ऋतुनिर्देशऋतुप्रयुक्तफलकुसुमादिधारणवृक्षादिनिर्देशश्च ।

पुनस्ताम्रमणिहेमशुक्तिरजतमुक्तायांसि अर्काद्धातवः स्युरिति वक्तव्ये ताम्रं स्यादिति पृथङ्निर्देशः किमर्थं क्रियते । ताम्रमण्यादयो धातवः, ताम्ररजतादीनि लोहानीति सूचयितुं पृथङ्निर्देशः कृतः । कानि

ताम्ररजतानि? उच्यते। अर्कस्य ताम्रम्। सिताभस्य चन्द्रस्य रजतम्। भौमस्य स्वर्णम्। "हेमा विद्ज्ञः" इति निर्देशाद् बुधस्यापि स्वर्णम्। गुरोः स्वर्णं रजतं वा। शुक्रस्य रजतम्। शनेः अयः। एवं ग्रहाणां लोहकारकत्वम्। शान्तिकर्मणि प्रतिमादानविषये त्वायसी मूर्तिर्नेष्यते। कथं ज्ञायत एतत्। अर्कात्तु मुक्तायसीति निर्देशात्। तु मूर्तिविषये तु अर्कात् सूर्यात् मुक्तायसी आयसीतरा स्यादित्यर्थः। अत एव हेमाद्रिः—

"शनिराहुकेतूनामपि स्वर्णप्रतिमा एव" इति।

एवं स्वर्णचिन्ता गुरुबुधकुजानां वर्गैः कर्तव्येति सूचितम्। तथा च कृष्णीये—

"गुरुभौमांशकयुक्ता यमला जलजा निरीक्षितास्ताभ्याम्।<br>
कुर्युस्सुवर्णचिन्तां वियोनिधातूद्भवो दृष्टः॥<br>
लग्नेषु भौमभागेषूर्वीतनयश्च भवति केन्द्रस्थः।<br>
देवगुरुर्वा केन्द्रे सुवर्णचिन्तां विजानीयात्॥"<br>
"गुरुवर्गे लग्नगते देवाचार्यश्च केन्द्रमुपयातः<br>
दृष्टश्चारबुधाभ्यां सुवर्णमिति चिन्तितं ब्रूयात्॥<br>
लग्नेष्विन्दुजभागेष्विन्द्राचार्यः समाश्रितः केन्द्रे।<br>
सौम्ये वा कुजयुक्तः करोति केन्द्रे सुवर्णाख्यम्॥<br>
लग्नस्थमवनिजस्य द्रेक्काणं दिनकरेण सन्दृष्टे।<br>
केन्द्रे चेन्द्राचार्यः सुवर्णचिन्ता विनिर्देश्या॥"

इति। सूर्यभौमवर्गाद्धातोर्धाम्यत्वं सौम्यजलचरवर्गाद् अधाम्यत्वं चाप्यूह्यम्। एवं ग्रहाणामुक्तगुणादिभिर्ग्रहाणां स्वाश्रितराश्यादिगुणवशाच्च धातुकारकत्वमूह्यम्। अनेन

"ताम्रेष्टकाकपालप्रवालमृद्धूलयो धराजस्य ।
शशिकान्तलवणशङ्खस्फाटिककांस्यत्रपूणीन्दोः ॥
रक्तमणिः सौवर्णं मनश्शिलाकाचतालमिन्द्रगुरोः
वैकारिकमणिमरतकमृत्स्नाः काचं बुधस्योक्ताः ॥
रजतस्फाटिकमुक्तावैदूर्यं चापि दैत्यपूज्यस्य ।
सौरस्याञ्जनलोहं नीलं सीसं तथैव राहोश्च ॥
पाषाणसूर्यकान्तारकूटवैदूर्यसीसकानि रवेः ।
क्रूरग्रहेक्षितेन धाम्याः सौम्यग्रहवीक्षणेऽधाम्याः ॥"

इति कृष्णीयशास्त्रोक्तकारकत्वमप्यत्र व्यञ्जितम् । एवमनेन कृत्स्नाऽपि धातुचिन्ता व्याख्याता ॥ १२ ॥

अथ ग्रहदृष्टिमाह—

**त्रिदशत्रिकोणचतुरश्रसप्तमा-**
**नवलोकयन्ति चरणाभिवृद्धितः ।**
**रविजामरेड्यरुधिराः परे च ये**
**क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ १३ ॥**

इति । रविजामरेड्यरुधिराः शनिः गुरुः कुजः परे च ये ते सूर्यशुक्रबुधचन्द्राश्च चरणाभिवृद्धितः त्रिदशत्रिकोणचतुरश्रसप्तमान् अवलोकयन्ति ईक्षन्ते । सर्वे ग्रहाः त्रिदश तृतीयदशमभावौ पाददृष्ट्या ईक्षन्ते । त्रिकोणं पञ्चमनवमावर्धदृष्ट्या पश्यन्ति । चतुरश्रं चतुर्थाष्टमभावौ पादोनदृष्ट्या पश्यन्ति । सप्तमं सप्तमभावं पूर्णदृष्ट्या वीक्षन्ते । अनेन सर्वेषां ग्रहाणां चतुर्विधदृष्टिर्दर्शिता । अत एव सारावल्याम्—

"वृषे शशी लग्नगतः सुपूर्णः
सितेन दृष्टो वणिजि स्थितेन ।
बुधोऽपि पातालगतो यदि स्यात्
तदान्त्यजातो भवति क्षितीशः ॥"

इति वृषस्थचन्द्रस्य तुलाधरस्थशुक्रेण दृष्टिः प्रोक्ता ।

रविजामरेड्यरुधिरपरेषामेते भावाः क्रमशो यथाक्रमं वीक्षणे विशेषदृष्टावधिकाः भवन्ति किल । किलशब्देन ग्रहदृष्टेरनित्यत्वं सूचितम् । रविजस्य तृतीयदशमभावयोर्विशेषदृष्टिः । अमरेड्यस्य त्रिकोणयोर्विशेषदृष्टिः । रुधिरस्य चतुरश्रयोर्विशेषदृष्टिः । परेषां सप्तमे विशेषदृष्टिः । तथा च जातकपारिजाते—

"शनिरतिबलशाली पाददृग्वीर्ययोगे
सुरकुलपतिमन्त्री कोणदृष्टौ शुभः स्यात् ।
त्रितयचरणदृष्टचा भूकुमारः समर्थः
सकलगगनचाराः सप्तमे दृग्बलाढ्याः ॥"

इति । त्रिकोणस्यार्धदृष्टिरुक्ता । त्रिकोणशब्देन लग्नमपि गृह्यताम् । स्वस्थाने ग्रहा अर्धं पश्यन्ति । एतन्न्याय्यमेव । ग्रहः पुरतःस्थितभागं पश्यति । इतरभागं न पश्यति । अतोऽर्धदृष्टिः । अत एव स्वस्थाने दृष्टिः कृष्णीये उक्तम् । यथा—

"षष्ठं द्वितीयभवनं द्वादशमेकादशं न पश्यन्ति ।
स्वस्थानादीक्षन्ते ग्रहास्तथाऽन्यानि भवनानि ॥"

इति । अनेन स्वस्थाने अर्धभागे दृष्टिः न त्वर्धदृष्टिः । अर्धभागे पूर्णदृष्टिः । अत एवोक्तं यवनेश्वरेण—

"पादार्धं च तदर्धं च पूर्णमाये व्यये तनौ ।"

इति । गुरुस्तु त्रिकोणं पूर्णं पश्यति । अनेन स्वस्थानमपि पूर्वं वीक्षते । अतो गुरोरुभयतो दृष्टिरनेन व्यञ्जितम् । उभयदृष्टिमान् गुरुरिति भावः । उभयदृष्टिवत्त्वमुभयोदयत्वव्यञ्जकम् ।

त्रिदश रणाभिवृद्धितः रविजामरेड्यरुधिराः अवलोकयन्ति चेति वा अन्वयः । त्रिदश त्रिंशद्भागात्मकं स्वस्थानं च रणे युद्धेऽभिवृद्धितः अभिवृद्ध्या । य आदौ राश्यन्तं गच्छति स युद्धे जयी भवति । अतः रणाभिवृद्धिशब्देन राश्यन्तस्थितिरुच्यते । रविजः शनिः अमरेड्यः गुरुः रुधिः रुधिरः कुजः रः रविः सूर्यः शनिगुरुकुजसूर्या अवलोकयन्ति । राश्यन्तस्थितशनिगुरुकुजसूर्यास्त्रिदशभागात्मकस्वस्थानं पूर्णतः पश्यन्तीत्यर्थः । राश्यन्तस्थित्या पूर्णभागदर्शनं पृष्ठदृश एव साध्यम् । तत्र गुरोरुभयतोदृक्त्वं पूर्वमेवोक्तम् । अतः शनिकुजरवयः पृष्ठदृशः अथवा पृष्ठोदयग्रहा इति लब्धम् । ये वीक्षणे दर्शने अधिका भवन्ति नेदिष्ठा भवन्ति ते क्रमशः अवलोकयन्ति पुरतोदृशः अथवा शीर्षोदया इत्यर्थः । उक्तं चैष विभागः जातकपारिजाते—

"रव्याराराहुमन्दाश्च पृष्ठेनोद्यन्ति सर्वदा ।
शिरसा भृगुचन्द्रज्ञा जीवस्तूभयतो व्रजेत् ॥"

इति । इहापि पृष्ठोदयत्वं पृष्ठोदयानन्तरपूर्णोदयत्वपरम् । अतः पापाः पूर्वराश्यभिमुखाः शुभा उत्तरराश्यभिमुखाः । गुरुस्तूभयाभिमुखः । अतो गुरुः स्वाश्रितराशिं पूर्णदृष्ट्या पूर्णमवलोकयति । पापाः गतभागानवलोकयन्ति । इतरशुभाः गन्तव्यभागानवलोकयन्ति ।

त्रिकोणचतुरश्रवत् त्रिदशेति तृतीयदशमयोः संज्ञा न कृता । अनेन तृतीये पादार्धदृष्टिः, दशमे पाददृष्टिश्च भवतीति सूचितम् । ततः रविज-

शब्देन रविकृतच्छायात्मकस्य राहोर्ग्रहणात् प्रतिलोमगतेः राहोः प्रतिलोम-गत्या तृतीयभूतस्य ग्रहणाद् एकादशेऽपि पादार्धदृष्टिः, राहोः पादार्धदृष्टौ बलशालित्वं च व्यञ्जितम् । तथा च ज्ञानप्रदीपिकायाम्—

"एकादशे तृतीये च पादार्धं वीक्षणं भवेत् ।"

इति ।

परे चेति शुक्रबुधचन्द्रान् सूचयति । तत्र चेति चन्द्रस्य । परे इति शुक्रबुधयोश्च द्योतकम् । रविजादिचन्द्रान्तं कक्ष्याक्रमोऽनेन सूचितः ।

मञ्जुभाषिणीवृत्तम् । मञ्जुभाषी मृदुवाक् स च चन्द्रः । वीक्षणश्लोकः । त्रिदश इति देववाचकशब्देनारब्धः । अतो दिव्यांशराज-योगः सूचितः । सकलग्रहदृष्टश्चन्द्रः राजयोगद इति व्यज्यते । तथा चोक्तं जातकपारिजाते—

"इन्दुः सर्वकलाधरो यदि बली सर्वत्र सन्धिं विना
सर्वव्योमचरेक्षितस्तु कुरुते भूपालयोगं नृणाम् ।"

इति । त्रिदश इति देववाचकत्वाद्वृत्तत्वम् । त्रिदशत्रिकोणचतुरश्र इत्यनेन हृतनष्टप्रश्नादौ द्रव्यस्वरूपं कथितव्यमिति व्यञ्जितम् । त्रिदश इति दशभागात्मकत्रयं भवति । एतद्द्रेक्काणस्योपलक्षणम् । त्रि इत्यारम्भेण तृतीयादिति लब्धम् । अतस्तृतीयद्वितीयप्रथमद्रेक्काणैर्वृत्तत्रिकोणचतुरश्रस्वरूपं द्रव्यस्य वक्तव्यमिति भावः । तथा च कृष्णीये—

"आदौ चतुरश्रकरास्त्र्यश्रं मध्ये ग्रहाः प्रकुर्वन्ति ।
राश्यवसाने वृत्तं स्वरूपतुल्या हि वा कार्याः ॥"

इति ।

अत्र वीक्षणेऽधिका इत्युक्त्या वीक्षणस्य विशेषेण ईक्षते इति व्युत्पत्त्या च अधिकदृष्टय एव वीक्षणानि भवन्तीति द्योत्यते । अवलोकन-दृष्टीक्षणादीतरशब्दाः सर्वदृष्टिग्राहका भवन्ति । एषाऽऽचार्यशास्त्रमर्यादा ।

वीक्षणेऽधिकाः किलेति किलशब्देन दृष्टेरनित्यत्वं दर्शितम् । अतो विशेषदृष्टिर्जातकशास्त्र एव न तु प्रश्नादिष्वित्यूह्यम् । अत एव कृष्णीय-शास्त्रे विशेषदृष्टयो नोक्ताः ।

मञ्जुभाषिणीवृत्तत्वाच्चन्द्रः, त्रिदशेत्यारम्भेण त्रिदशगुरुश्च समदृष्टि-मन्तौ भवतः । मध्ये बलयुतत्वात् कुजरवी ऊर्ध्वदृष्टियुक्तौ । प्रेष्यतया शनिस्तत्तुल्यराहुश्चाधोदृष्टिमन्तौ । परिशेषात्सौम्यत्वाच्च शुक्रबुधौ कटाक्षेण वीक्षेते इत्यपि सिद्धम् । अत एव कृष्णीये—

"वीक्षेते रविभौमावूर्ध्वं शुक्रेन्दुजौ कटाक्षेण ।
इन्दुगुरू समदृष्ट्या राहुः सौरो ह्यधोदृष्ट्या ॥"

इति ।

त्रिदशेत्यारम्भसामर्थ्याद् ग्रहाणामुक्तस्थानस्थित्या पापपुण्यलाभा-लाभादिफलमपि वक्तव्यमिति सिद्धम् । तथा च कृष्णीये—

"दर्शनफलमपि दद्युस्त्रिकोणसप्तमचतुर्थदशमगताः ।
अर्धफलं संपूर्णं पादोनं पादमन्यत्र ॥"

इति ।

ग्रहदृष्टयः रश्म्यनुसारिण्यः । अतस्त्रिदशादिस्थितिवशाद् रश्मीनां पादादिभागेन चोरापहृतसङ्ख्या हृतनष्टादिप्रश्नेषु वक्तव्या । रश्मयस्तु राशीनां स्वामिनो वशादिति कालचक्रसंवत्सररश्मय एव । तथैवोक्तं कृष्णीये—

"चतुरेकविंशषोडशनवसङ्ख्याः पञ्च सप्त दश किरणाः ।
मन्दगतिचन्द्रभार्गवशशिसुतरविभौमजीवानाम् ॥"

इति ।

त्रिदश इति निर्देशात् त्रिंशद्भागात्मकभावः सूचितः। अनेन दृष्ट्यानयनप्रकारो व्यञ्जितः। यथा ग्रहः स्वाधिष्ठितभागं पूर्णं पश्यति। ततः क्रमह्रासेन त्रिंशद्भागान्ते न पश्यति। एवं द्वितीयभावादौ न दृष्टिः। ततः क्रमवृद्ध्या तृतीयभावादौ दृष्टिः पादं भवति। ततः क्रमवृद्ध्या चतुर्थभावादौ पादोनं भवति। ततः क्रमह्रासात्पञ्चमभावादावर्धं भवति। ततः क्रमह्रासात्षष्ठभावादौ शून्यं भवति। ततः क्रमवृद्ध्या सप्तमभावादौ पूर्णं भवति। ततः क्रमह्रासादष्टमभावादौ पादोनं, नवमभावादावर्धं, दशमभावादौ पादं, तदन्ते शून्यं च भवति। शनिगुरुकुजानां तु तेषां विशेषदृष्टिस्थानेषु पूर्णदृष्टिं कल्पयित्वैवं दृष्टिरानेया। स्वाधिष्ठित-राशिं ग्रहा न पश्यन्तीति पक्षः श्रीपतिना आदृतः। तथा च जातकपद्धतौ—

"दृश्यो द्रष्ट्रा विरहिततनुः षड्गृहेभ्योऽधिकश्चे-
दिग्भ्यः शोध्यो विहितकलिकः खाभ्रपक्षाद्रिभक्तः।
दृष्टिः सा स्याद्यदि शरगृहेभ्योऽधिकः पञ्चहीनो
लिप्तीभूतो धृतिशतहृतः स्याच्चतुर्थाधिकश्चेत्॥
त्यक्त्वेषुभ्यः खखरसगुणैर्वह्निभेभ्योऽधिकश्चेत्
शोध्योऽब्धिभ्यो विरचितकलः षष्टिकृत्या समेतः।
भक्तो द्व्यश्वैः शतविनिहते राशियुग्माधिकोऽपि
द्वाभ्यामूनो नवशतयुतो व्योमखाङ्गाग्निभक्तः॥
एकोनितश्चैकगृहाधिकश्चेत् कलीकृतो द्व्यश्वशतैर्विभक्तः।
एवं स्फुटाः खेचरदृष्टयः स्युर्दिग्भ्योऽधिकं पश्यति नो ग्रहेन्द्रः॥
द्वित्र्येकपादाः क्रमशो निधेयाः शनैश्चराचार्यमहीसुतानाम्।
त्रिकर्मणोर्धीशुभयोश्च रन्ध्रबन्ध्वोः स्थितानामिह पूर्वदृक्षु॥

स्वस्वक्षेपाः पृथक् स्थाप्याः प्रोक्तादूनाधिकैर्लवैः ।
गुणिताः स्वगुणैर्भक्ता लब्धोनास्ते परिस्फुटाः ॥ ''

इति । स्वाधिष्ठितराशौ दृष्टिकल्पने गुरोः पूर्णराशौ शीर्षोदयानां गन्तव्यभागे, पृष्ठोदयानां गतभागे च दृष्टिर्वाच्या । तत्र दृष्ट्यानयनं तु स्वाधिष्ठितभागे पूर्णदृष्टिः राश्यन्ते राश्यादावुभयत्र वा (शीर्षोदयपृष्ठोदयोभयोदयग्रहत्वशात्) शून्यदृष्टिः, मध्ये तु त्रैराशिकवशान्नेया ॥ १३ ॥

ग्रहाणां कालनिर्देशरसविशेषांश्चाह—

**अयनक्षणवासरर्तवो मासोऽर्धं च समा च भास्करात् ।**
**कटुकलवणतिक्तमिश्रता मधुराम्लौ च कषाय इत्यपि ॥ १४ ॥**

इति । भास्करात् सूर्यादारभ्य । ल्यब्लोपे पञ्चमी । अयनक्षणवासरर्तवो मासः अर्धं च समा च कालांशकाः भवन्ति । तत्र भास्करस्य अयनं मासषट्कम् । चन्द्रस्य क्षणः मुहूर्तः, तद्द्वादशो भागो वा । कुजस्य वासरः दिनम् । बुधस्य ऋतुः मासद्वयम् । गुरोः मासः । शुक्रस्य अर्धं अर्धमासः पक्ष इत्यर्थः । शनैश्चरस्य समा संवत्सरः । अस्य प्रयोजनं सङ्ग्रामविजयादिकार्यसिद्धिकालनिर्णयः । लग्नाधिपो लग्ननवांशाधिपो लग्नस्थितो वा यावतो नवांशकान् भुक्तवान् तावद्भिस्तत्तदुक्तग्रहकालांशकैः कार्यसिद्धिर्वाच्या । तथा च कृष्णीये—

" क्षणदिवसपक्षमासर्त्वयनाब्दानां नवांशकैर्वाच्याः ।
शशिभौमशुक्रसुरगुरुबुधरविसौरैः क्रमाद्भुक्तैः ॥ ''

इति । मणित्थश्च—

" वक्तव्यो रिपुविजये गर्भाधाने च कार्यसंयोगे ।
लग्नांशकपतितुल्यः कालो लग्नांशसमसङ्ख्यः ॥ ''

इति । आ च भास्करात् इत्यपि पदच्छेदः । अर्कसमीपस्था ग्रहाः शीघ्रफलप्रदाः, इतरे चिरेण फलप्रदा इत्यर्थः । भास्करात् भास्करदैवत्याद्राशेः इत्यर्थः । द्वादशादित्यदैवत्याद् द्वादशराशय एव भास्कराः । राशेश्चरस्थिरोभयत्ववशात् फलकालं वाच्यमिति भावः । तथा च कृष्णीये—

"अर्कस्यादूरगताः क्षिप्रं फलदा ग्रहास्तु बलवन्तः ।
दूरस्थाश्चिरकालाद्दीर्घादिगृहप्रमाणवशात् ॥"

इति । अथवा भास्करात् कार्यसाध्यकारकगृहग्रहयोर्दिशि भास्करो ज्योतिश्चक्रे यदाऽऽयाति स कार्यसिद्धिकाल इति वक्तव्यम् । तथा च कृष्णीये—

"ग्रहगृहयोर्दिशमर्को ज्योतिश्चक्रे भ्रमन्यदायाति ।
दिवसनिशोः सा वेला निर्देश्या सर्वकार्येषु ॥"

इति । अयनक्षणवासरर्तवो मासः अर्धं समा च इत्येकचकारेणैव समुच्चये सिद्धे द्वितीयचकारः किमर्थं प्रयुज्यते ? उच्यते । अनेन

"लग्नार्कचन्द्रार्कभुक्तैर्होराभागांशकैर्यथासङ्ख्यम् ।
वर्षं मासं दिवसं गृहगत्या वा वदेत्कालम् ॥"

इत्याद्यपि सूचितम् ।

भास्करात् कटुकलवणतिक्तमिश्रताः मधुराम्लौ च कषायश्चेत्यपि । भास्करस्य रसः कटुकः । चन्द्रस्य लवणः । कुजस्य तिक्तः । बुधस्य मिश्रः । गुरोर्मधुरः । शुक्रस्य अम्लः । शनेः कषायः । प्रयोजनमाधानकालबलवद्ग्रहोक्तदोहदत्वं गर्भिण्या वक्तव्यम् । जन्मकाले केन्द्रगग्रहरसाभिरुचित्वम् । भोजनप्रश्ने उदयादारूढाद्वा केन्द्रगैर्ग्रहैः षष्ठस्थानेन वा रसा

वक्तव्याः। ओजयुग्मराशिवशाद् रूक्षसौम्यत्वमन्नस्य। जलराशौ जलग्रहदृष्टियोगवशादार्द्रत्वं वक्तव्यम्। आविकानामाधिपत्याद् भौमेन माहिषदध्यादि वाच्यम्। चन्द्रसंबन्धादिक्षुक्षीरविकारादि च वाच्यम्। आश्रयराशिवशाद् गुरुबुधाभ्यामार्द्रत्वं भवतीत्याद्यूह्यम्। तथा च कृष्णीये—

"सौम्यग्रहस्य लग्ने सौम्यर्क्षे वाशितं भवति मृष्टम्।
ओजेऽतिरूक्षमन्नं द्रवं तु युग्मे जलचरे वा॥
भुक्तं सुशुष्कमुष्णं रविकुजयोरजलराशिसंयोगे।
सजले व्यञ्जनवत्तत्तदेव शीतं यमासुरयोः॥
सुद्रवमनुष्णमुशनः शशिनोरुदकात्मकेन संपाते।
युक्तव्यञ्जनमजले गुरुबुधयोराश्रयेण स्यात्॥"

इत्यादि। कटुकेत्यादि चतुर्णां समासेन बुधस्य कटुकलवणतिक्तानां मिश्रत्वं व्यञ्जितम्।

इत्यपिशब्देन पक्षान्तरं सूचितम्। तथा च कृष्णीये—

"शुक्रो मधुरः स्निग्धश्चन्द्रः शीतोऽङ्गिरोबुधौ रूक्षौ।
लवणकषायः सूर्यः सौरः कटुकः कुजस्तिक्तः॥
मधुरस्तीक्ष्णसमेतास्तिक्तकषायाम्लकटुकलवणानि।
गुरुसूर्यसौरबुधभृगुभौमेन्दूनां परे ब्रुवते॥"

इति। भोक्तुरासनगृहादयश्च राशिग्रहप्लवत्वादिगुणादितश्चिन्त्याः। बुद्ध्या युक्त्याऽऽलोच्य वक्तव्यम्।

वैतालीयं छन्दः।

"षड्विषमेऽष्टौ समे कलाः षट् च समे स्युर्नो निरन्तराः।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥"

इति लक्षणात्। वेतालसम्बन्धि वैतालीयं प्रेतादि। अनेन भोजनप्रश्ने श्राद्धभोजनाद्यपि तत्तद्ग्रहवशाच्चिन्त्यमिति सूचितम्। यथा सूर्येण चतुष्पाच्छालायां भोजनं, चन्द्रेण दुहित्रा भोजनं दत्तं, कुजेन तस्करसन्निधौ भोजनं, बुधेन विवादसहितं भोजनं, गुरुणा दक्षिणासहितं भोजनं, शुक्रेण भार्यया भोजनं दत्तं, शनिना श्राद्धभोजनं च प्रश्नलग्नस्थेन द्रष्ट्रा वा ग्रहेण युक्त्या विचिन्त्य वक्तव्यम्। तथा च कृष्णीये—

"प्रेतार्थवादतस्करयुवतिचतुष्पाददुहितृचिन्तायाम्।
सौरबृहस्पतिसौम्याङ्गारकभृगुसूर्यशीतकराः॥"

इति॥ १४॥

अथ ग्रहशत्रुमित्रत्वाद्याह—

**जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभौमाः क्रमा-**
**द्वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषांचिदेवं मतम्।**
**सत्योक्ते सुहृदस्त्रिकोणभवनात्स्वस्वान्त्यधीधर्मपाः**
**स्वोच्चायुःसुखपाः स्वलक्षणविधेर्नान्ये विरोधादिति॥ १५॥**

इति। जीवो जीवबुधौ सितेन्दुतनयौ व्यर्काः विभौमाः वीन्द्वर्काः विकुजेन्द्विनाश्च। क्रमात् सूर्यादीनां सुहृदः मित्राणीति केषांचिन्मतम्। सूर्यस्य गुरुः मित्रम्। चन्द्रस्य गुरुबुधौ। कुजस्य शुक्रबुधौ। बुधस्य अर्कः शत्रुः, इतरे मित्राणि। गुरोः भौमः शत्रुः, इतरे मित्राणि। शुक्रस्य चन्द्रसूर्यौ शत्रू, इतरे मित्राणि। शनेः कुजचन्द्रसूर्याः शत्रवः, इतरे मित्राणि। केषांचिन्मतमुपन्यस्य स्वाभिप्रायं सत्याचार्यमतमाह। सत्योक्ते सत्याचार्यमते। त्रिकोणभवनात् स्वमूलत्रिकोणगृहात् स्वस्वान्त्यधीधर्मपाः स्वोच्चायुःसुखपाश्च द्वितीयद्वादशपञ्चमनवम-

स्वोच्चराश्यष्टमचतुर्थराशीनामधिपाः सुहृदः मित्राणि। अन्ये इतरे लक्षणविधेर्वि-रोधात् लक्षणविधेरनवकाशत्वात् न सुहृदः। उक्तानुक्तस्थानानामधिपा उदा-सीना इत्यपि सिद्धम्। ग्रहाणां शत्रुमित्रसमाश्च परिगणिताः श्लोकद्वयेन—

"शत्रू मन्दसितौ समः शशिसुतो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे॥
सूरेः सौम्यसितावरी रविसुतो मध्यः परे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः सुहृदस्त्रिकोणभवनात्तेऽमी मया कीर्तिताः॥"

इति।

केषांचिन्मतं यवनेश्वरादीनां मतम्। केचिद् यवनमतेन निसर्गमैत्री-मङ्गीकृत्य सत्योक्तस्थानस्थित्या तत्कालमित्रत्वं परिकल्प्य प्रश्नजातकादिफलं निरूपयन्ति। तथा च कृष्णीये—

"मूलत्रिकोणभवनाच्चतुर्थपञ्चमधनव्ययाष्टमगाः।
स्वोच्चे धर्मे च गता ग्रहास्तु तात्कालिकाः सुहृदः॥"

इति। वृत्तं शार्दूलविक्रीडितम्। अनेन राहुकेत्वोरपि स्मरणम्। अतस्त-योरपि शत्रुमित्राण्यत्रोक्तानीति सूचितम्। सत्योक्ते असुहृद् अस्त्रि इत्यपि पदच्छेदः। अस्त्रि स्त्रीग्रहभिन्नः ग्रहः असुहृद् शत्रुर्भवति। अस्त्रि इति नपुंसकलिङ्गप्रयोगसामर्थ्यान्नपुंसकग्रहस्य केतोरिति गम्यते। केतोः स्त्रीग्रहौ चन्द्रशुक्रौ सुहृदौ, इतरे शत्रव इति भावः। राहोस्तु त्रिकोणभवनात् कुम्भात् स्वस्वान्त्यधीधर्मपाः स्वस्वं स्वात्स्वं तृतीयभवनं,

तदीशः अन्त्यधीधर्मपाश्च । स्वोच्चायुस्सुखपाः द्वितीयोच्चाष्टमतुरीयाधिपाश्च सुहृदः । राशिद्वयाधिपत्येऽपि तयोरन्यतराधिपत्येन मित्रत्वम् । एवं राहोः स्वस्वान्त्यधीधर्मपाः स्वोच्चायुस्सुखपाश्च आदित्यचन्द्रवर्जे सर्वे ग्रहाः सुहृदो भवन्ति । आदित्यचन्द्रौ तु शत्रू भवतः । द्व्येकानुक्तभपान् सुहृत्समरिपूनित्यस्यात्र न प्रवृत्तिः । तथा च कृष्णीये—

"रविशशिरहिता राहोः सुहृदः केतोस्तु चन्द्रशुक्रौ च ।
ये नोक्तास्ते रिपवो होराचार्या वदन्त्यन्ये ॥"

इति । सर्वार्थचिन्तामणौ तु—

"राहोस्तु मित्राणि कवीज्यमन्दाः
केतोस्तथैवात्र वदन्ति तज्ज्ञाः ॥"

इति पक्षान्तरं दृश्यते ।

वृत्तं शार्दूलविक्रीडितम् । द्वादश भावा अपि सप्तग्रहवन्मित्रादिभावेन चिन्त्या इति सूचितम् । यद्भावेशो लग्नाधिपस्य मित्रं भवति तद्भावोऽपि तस्य मित्रं भवति । शत्रुश्चेच्छत्रुर्भवति । एवं लग्नेशरन्ध्रेशयोर्मैत्र्यादिभावे आयुर्दैर्घ्यादिभावो वाच्यः । एवमेव द्वादश भावाः सप्तकारकेभ्योऽपि चिन्त्याः । एवं लग्नसूर्ययोर्मैत्र्यादिभावे दीर्घायुस्त्वादि वक्तव्यम् । तथा च मन्त्रेश्वरः—

"जन्मेशाष्टमनाथयोरुदयपच्छिद्रेशयोर्मैत्रतो
भास्वल्लग्नपयोश्चिरायुरहितोऽल्पायुः समे मध्यमः ॥"

इति ॥ १५ ॥

अथ ग्रहाणां तत्कालमित्रादीनाह—

**अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-**
**स्तत्काले सुहृदः स्वतुङ्गभवनेऽप्येकेऽरयस्त्वन्यथा ।**
**द्व्येकानुक्तभपान् सुहृत्समरिपून् सञ्चिन्त्य नैसर्गिकां-**
**स्तत्कालेन पुनस्तु तानतिसुहृन्मित्रादिभिः कल्पयेत् ॥ १६ ॥**

इति । अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिताः ग्रहस्थितराशेर्द्वितीयतृतीयचतुर्थदशमैकादशद्वादशस्थानेषु स्थिताः, तत्काले सुहृदः तत्कालमित्राणि, भवन्तीति शेषः । एके केचित्, स्वतुङ्गभवनेऽपि स्वोच्चराशिस्थितोऽपि, सुहृद्भवतीति वदन्ति ।

तथा च यवनेश्वरः—

"मूलत्रिकोणाद्धनधर्मबन्धुपुत्रव्ययस्थानगता ग्रहेन्द्याः ।
तत्कालमेते सुहृदो भवन्ति स्वोच्चे च यो यस्य विकृष्टवीर्यात् ॥"

इति ।

अन्यथा अरयः शत्रवो भवन्ति । नैसर्गिकान् द्व्येकानुक्तभपान् द्विस्थानाधिपतित्वेन द्वयोः क्षेत्रयोरपि सुहृत्स्थानत्वं भवेत् । एकस्मिन् सुहृत्त्वं, इतरस्मिन् शत्रुत्वं, द्वयोरपि वा शत्रुत्वं भवेत् । द्वयोरपि बन्धुत्वे बन्धुः स्यात् । एकस्यैव बन्धुत्वे समः स्यात् । द्वयोरपि शत्रुत्वे शत्रुः स्यात् । एवं नैसर्गिकान् सुहृत्समरिपून् । सञ्चिन्त्य आलोच्य । पुनस्तत्कालेन तत्कालमित्रशत्रुभ्यां मेलयित्वा तानतिसुहृन्मित्रादिभिरतिमित्रं मित्रं समः शत्रुरतिशत्रुरिति पञ्चप्रकारेण कल्पयेत् । एवं नैसर्गिकमित्रं तत्कालमित्रं चेदतिमित्रं भवति । तत्कालशत्रुश्चेत्समो भवति । नैसर्गिकसमस्तत्कालमित्रं चेन्मित्रं भवति । शत्रुश्चेच्छत्रुर्भवति । नैसर्गिकशत्रुस्तत्का-

लमित्रं चेत्समो भवति । शत्रुश्चेदतिशत्रुर्भवेत् । स्वोच्चत्रिकोणस्वक्षेत्रातिमित्र-क्षेत्रमित्रक्षेत्रसमक्षेत्रशत्रुक्षेत्रातिशत्रुक्षेत्रनीचक्षेत्रेषु ग्रहाणां बलं परिगणितं श्रीपतिना—

"स्वोच्चे रूपं चरणरहितं स्वत्रिकोणे स्वभेऽर्धं
नागांशानां त्रयमतिसुहृन्मित्रभे पादमेव ।
अंशोऽष्टानां समगृहगते भूपभागोऽरिगेहे
दन्तांशः स्यादतिरिपुगृहे नीचभे शून्यमेव ॥"

इति ।

वृत्तं शार्दूलविक्रीडितम् । सप्त ग्रहाः द्वादश भावाश्च मित्रत्वादि-भिश्चिन्त्या इति गम्यते । लग्नेशाद्धनव्ययादिस्थानेषु यद्भावाधिपः स्थितस्तद्भावस्य समृद्धिर्वक्तव्या लग्नेशतद्भावेशयोर्मित्रत्वात् । सूर्यादयः पित्रादिकारकाः शुभदृष्टलग्नेशादेतत्स्थानस्थिताश्चेत्पित्रादयस्तस्यातिमित्रादयो भवन्ति ॥ १६ ॥

अथ ग्रहाणां बलमाह । तत्रादौ स्थानबलं दिग्बलं च निरूपयति—

**स्वोच्चसुहृत्स्वदृगाणनवांशैः स्थानबलं स्वगृहोपगतैश्च ।**
**दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च ॥ १७ ॥**

इति ।

स्वोच्चसुहृत्स्वदृगाणनवांशैः स्वोच्चमित्रक्षेत्रस्वद्रेक्काणस्वनवांशैः स्वगृहो-पगतैश्च स्वक्षेत्रस्थितैश्च स्वक्षेत्रस्थित्या च । ग्रहाणां स्थानबलं वक्तव्यमित्यर्थः ।

स्वोच्चेति तुङ्गजं बलं सूचितम् । तच्च परमोच्चे पूर्णम् अतिनीचे शून्यं च भवति । तथा च श्रीपतिः—

"नीचोनो द्युचरोऽधिको यदि भवेत् षड्भात्तथा प्रच्युत-
श्चक्रात्कूलप्तकलः खखाष्टखकुभिर्भक्तो बलं तुङ्गजम् ।"

इति। स्थान इत्यक्षरसङ्ख्यया सप्त। अतः स्थानबलमित्यनेन क्षेत्रहोराद्रेक्काणसप्तांशनवांशद्वादशांशत्रिंशांशात्मकसप्तवर्गजबलं सूचितम्। एवं चेत् स्वदृगाणनवांशैरिति दृगाणनवांशकयोः प्रत्येकनिर्देशः किमर्थमिति चेदुच्यते राश्यादिमध्यावसानात्मकद्रेक्काणस्य युग्मायुग्मनवांशकस्य च ग्रहणार्थमिति। सप्तवर्गजबलं तु

> "स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
> शुभं संपूर्णपादोनदलपादाल्पनिष्फलम्॥"

इत्याचार्येण वक्ष्यते। श्रीपतिश्चाह—

> "पादोनं तु बलं त्रिकोणगृहगं स्वर्क्षे दलं च त्रयो
> वस्वंशा ह्यधिमित्रभेऽथ चरणो मित्रे समर्क्षेऽष्टमः॥
> शत्रुभे भवति षोडशांशकश्चाधिशत्रुभवने रदांशकः।
> एवमेव खलु सप्तवर्गजं स्याद्बलं निजपतेर्वशादिह॥"

इति। सुहृत्स्वदृगाणनवांशैरिति निर्देशाद् अंशकेषु मूलत्रिकोणसंज्ञा नास्तीति व्यञ्जितम्। स्वतुङ्गबलस्य प्रत्येकगणनात् सप्तवर्गजबलानयने उच्चराश्यंशकस्थितिप्रयुक्तबलमपि नेष्यते।

स्वगृहोपगतैः स्वसदृशगृहैः स्त्रीपुरुषत्ववशादात्मसदृशस्त्रीपुरुषराशिगतैश्च स्थानबलं प्राप्यते। स्त्रीग्रहा युग्मराशिषु बलिष्ठाः पुरुषग्रहा ओजराशिषु बलिष्ठा इति भावः।

पुन्नपुंसकत्वाच्छनिरप्योजराशौ बलवान्। उत्तरार्धे सितशीतकरौ इति समस्तपदप्रयोगाद् बुधस्य अङ्गिरस्साहचर्याच्च सितशीतकरावेव युग्मराशौ बलवन्तौ बुधस्तु गुरुवदोज एव बलीति सूचितम्। चक्रं विलिख्य ग्रहाणां क्षेत्रस्थितिं तत्तद्राशौ प्रदर्श्य नवांशकस्थितिस्तत्तद्ग्रहस्य समीपे

चक्राद्बहिः प्रदर्श्येते कैश्चित्पण्डितैः । तत्संप्रदायरीत्योपगतशब्दो नवांशकपरो भवतु । एवं चेद्युग्मायुग्मबलं नवांशवशादपि वाच्यमिति सिद्धम् । गृहशब्देन चतुर्थभागः स्मारितः । अतो ग्रहाणां युग्मायुग्मबलं पादं भवतीत्यपि गम्यते । उक्तं च केशवपद्धतौ—

"शुक्रेन्दू समभांशके हि विषमेऽन्ये दद्युरङ्घ्रिं बलम् ।"

इति ।

स्वगृहोपगतैश्च स्वगृहगतत्वं मध्यद्रेक्काणस्थत्वम् । उपगतत्वं तत्समीपवर्तित्वमाद्ये, अन्त्ये वा द्रेक्काणे स्थितिः । अनेन च स्थानबलं वक्तव्यम् । आदिमध्यान्तद्रेक्काणवशात् स्थानबलं वक्तव्यम् । आदिद्रेक्काणे स्त्रीग्रहस्य, मध्यद्रेक्काणे नपुंसकग्रहस्य, अन्त्यद्रेक्काणे पुंग्रहस्य च बलं वक्तव्यमिति सूचितम् । गृहशब्दस्य भार्याद्योतकत्वात् स्त्र्यादित्वं लब्धम् ।

तथा च सारावल्याम्—

"स्त्रीपुंनपुंसकाख्याः क्षेत्रेष्वाद्यन्तमध्यसंप्राप्ताः ।"

इति । स्वगृहोपगते चेति पाठो नादरणीयः । स्वगृहोपगतैश्चेति बहुवचनेन चारणगीतवृत्तेन च स्थानबलयुक्तस्त्र्यादिभिर्ग्रहैः राजयोगो वाच्य इत्यपि सूचितम् । तथा च सारावल्याम्—

"दिक्स्थानकालादिबलैरुपेताः शुभाः पुनः केन्द्रमुपागताश्च ।
कुर्वन्ति पापैरपि मिश्रचाराः पृथ्वीपतिं त्रिप्रभृतिग्रहेन्द्राः ॥"

इति । अथवा स्वगृहोपगतैरित्यस्य स्वगृहान्तिकस्थितैरिति व्याख्यया बहुवचनेन चारणगीतवृत्तेन च तत्तद्गृहाद्व्ययस्थानस्थितैस्त्र्यादिभिर्ग्रहैः राजयोगो वाच्य इत्यपि व्यञ्जितम् ।

"अभिलषद्भिरुदयर्क्षमसद्भिः ।"

इत्याचार्योक्त्या

"उच्चाभिलाषी सविता त्रिकोणे ।"

इति सारावलीवचनाच्च राश्यभिलाषित्वस्य राशिस्थित्या साम्यमिष्यत इति सिद्धमेव ।

पुनः स्वगृहोपगतैश्च स्व इत्यक्षरसङ्ख्यया चत्वारि । अनेन चतुष्टयोपगतैश्च स्थानबलं भवतीति सूचितम् । चतुष्टये बलं रूपं, पणफरे तदर्धं, आपोक्लिमे पादं च भवति । तथा च पराशरः—

"केन्द्रादिषु स्थिता लग्नात् षष्टिस्त्रिंशत्तिथिः क्रमात् ॥"

इति। एवमुच्चबलसप्तवर्गजबलयुग्मायुग्मबलकेन्द्रादिबलद्रेक्काणबलानामैक्यं स्थानबलमिति बोध्यम् ।

पुनः स्वगृहोपगतैश्चेत्यत्र उपगमनं दृष्टिपरो भवतु । बहुवचनेन चारणगीतवृत्तेन च स्वगृहावलोकिनः त्र्यादयो ग्रहाः राजयोगकरा इति सूचितम् । अत्र प्रमाणं कापिलेयरेखानाडीग्रन्थे दृश्यते ।

दिक्षु प्राच्यादिदिक्षु प्राचीमध्यप्रतीचीपातालदिक्षु । उदयदशमसप्तमचतुर्थराशिष्वित्यर्थः । क्रमेण बुधाङ्गिरसौ बुधगुरू । रविभौमौ सूर्यकुजौ । सूर्यपुत्रः शनिः । सितशीतकरौ च शुक्रचन्द्रौ च बलवन्त इति शेषः । बुधगुर्वोर्लग्ने दिग्बलम् । सूर्यकुजयोर्दशमे दिग्बलम् । शनेः सप्तमे दिग्बलम् । शुक्रचन्द्रयोश्चतुर्थभावे च दिग्बलमित्यर्थः । अत्र जलग्रहयोः शुक्रचन्द्रयोर्जलराशौ दिग्बलमुक्तम् । जलचराणामधोभागे जलस्थित्या बलम् । ऊर्ध्वे जलाभावाद्विबलत्वं च । अनेन शुक्रचन्द्रावपि दशमे विबलौ भवत इत्यपि सिद्ध्यति । मध्ये तदनुपातत इत्यप्यूह्यम् ।

एवमितरेषामपि ग्रहाणां च वक्तव्यम् । यथा बुधगुरू लग्ने बलवन्तौ सप्तमे विबलौ । मध्येऽनुपातेन बलं चिन्त्यम् । तथा च पराशरः—

" अर्कात्कुजात्सुखं जीवाज्ज्ञाच्चास्तं लग्नमार्कितः ।
मध्यलग्नं भृगोश्चन्द्राद्धित्वा षड्भाधिके सति ॥
चक्राद्विशोध्य रामाप्तं भागीकृत्य च तद्बलम् ॥ "

इति । अनेन दिग्बलानयनं व्याख्यातम् ।

पुनः, दिक्षु प्राच्यूर्ध्वप्रतीच्यधोदिक्षु लग्नदशमसप्तमचतुर्थात्मकदिक्षु च बुधाङ्गिरसौ प्राच्यां बुधः लग्ने गुरुश्च रविभौमौ ऊर्ध्वे रविः दशमे भौमश्च सूर्यसुतः प्रतीच्यां सप्तमे च शनिः सितशीतकरौ च अधः शुक्रः चतुर्थे चन्द्रश्च बलवन्तो भवन्ति । चारणगीतवृत्तेन चारणाचरिते पथि सूर्ये प्राच्यादिदिक्षु स्थिते बुधरविशनिशुक्रा बलवन्तः स्युरिति व्यज्यते । एतदर्धस्थपदषट्केन दिनस्य षड्भागाधिपत्यमत्र विवक्षितमिति स्पष्टम् । यथा सूर्योदयाद्दिनस्य प्रथमषष्ठांशस्याधिपो बुधः, द्वितीयस्य सूर्यः, तृतीयस्य शनिः, पञ्चमांशस्य शुक्रश्चाधिपो भवति । निशाद्यंशस्थराकाचन्द्रस्य विशेषशोभनत्वं सर्वाह्लादजनकत्वं च सुप्रसिद्धमेव । अतश्चन्द्रस्य दिनतुरीयषष्ठांशाधिपत्यस्य किं नाम प्रमाणमपेक्षते ? 'निशि शशि कुजसौराः' इति रात्रिबलयुक्तस्य कुजस्य निशान्त्याधिपत्यमेव शिष्यते । परिशेषात् कालपुरुषस्य जीवरूपस्य जीवस्याहोरात्राधिपत्यं सिद्धमेव । जीवबुधौ जीवग्रहौ । अतो दिनस्य भागद्वयस्याऽपि बुधोऽधिपः । दिनस्य भागषट्कस्याऽपि जीवोऽधिपः । उक्तं च पराशरेण—

" हित्वान्येषामहोरात्रिं त्रिभागीकृत्य यत्र तु ।
जन्मलग्नतदंशाधिपतेः षष्टिबलं भवेत् ॥

आधाने चित्प्रवेशे तु त्रिशङ्कूतार्णवा बलम् ।
ज्ञार्कमन्देन्दुशुक्रारा: पतयः सर्वदा गुरुः ॥ ”

इति । अनेन कालबलान्तर्गतदिनरात्रित्रिभागबलानयनं व्याख्यातम् ।

सूर्यसुतशब्देन राहोरपि वा ग्रहणम् । अनेन राहोर्दिग्बलं सप्तमस्थानं भवति । एष न्याय्य एव । राहुः सरीसृपः । कीटराशिश्च सप्तमे बलवान् । अतः राहुः सप्तमे बलवान् । शनिवद्राहुरिति क्रममनुसृत्य वा राहोः सप्तमे दिग्बलं भवति । अतः केतोर्दिग्बलं लग्ने इति सिद्धम् । केतोर्गुरुतुल्यत्वं पूर्वमेवोक्तम् ।

वृत्तं चारणगीतम् । अनेन “ कण्टककेन्द्र ” इति श्लोकः स्मारितः । तत्राकाशस्थित्या दशमकेन्द्रो ज्योतिषिकः । कण्टकत्वात् सप्तमः । व्यन्तरः । जलराशिश्चतुर्थः वनवासी । उदयस्तु देवगणः । अनेन क्रमेण तत्र बलवन्तो ग्रहा अपि तत्तद्गणाधिपाः । अतो गुरुबुधौ देवगणाधिपौ । अर्ककुजौ ज्योतिषिकगणाधिपौ । शनिराहू व्यन्तरगणाधिपौ । चन्द्रशुक्रौ वनवासिगणाधिपौ । अतो देवगणो द्विपाद्राशिबुधगुरुभिश्चिन्त्य इत्यादि च व्यञ्जितमनेन श्लोकेन ।

ग्राम्यादिविभागश्चात्र व्यञ्जितः । बुधाङ्गिरसौ रविभौमराहुशनयः शुक्रचन्द्रौ च यथाक्रमं ग्राम्यवनचरजलचराश्चेति सूचिताः । जलरूपत्वात् जले दिग्बलवत्वाच्च शुक्रचन्द्रौ जलचरौ भवतः । उदयबलत्वाद्गुरुबुधौ ग्रामचरौ । रविभौमराहुशनयः क्रूरत्वाद्वनचराः । ज्योतिषिकादिविभागे तु वनचराः व्यन्तराश्च प्रत्येकं ग्राह्याः । इह तूभावपि वनचरगणान्तर्भूतौ ।

उक्तं च कृष्णीये—

“ गुरुसौम्यौ ग्रामचरौ रविकुजसौरोरगा वसन्ति वने ।
जलनिलयौ शशिशुक्रौ भोजननष्टादिषु ग्राह्यम् ॥ ”

इति । अनेनैतद्भोजननष्टादिषु प्रश्नेषु योज्यमिति स्पष्टम् ।

नरत्वाल्लग्नमाश्रयस्वभाववत् । जलत्वाच्चतुर्थभावः आर्द्रो भवति । इतरौ केन्द्रौ शुष्कौ । अनेनैतेषु दिग्बलवतां ग्रहाणामप्येष स्वभाव एव । अतो रविकुजशनयः राहुश्च शुष्काः । शुक्रचन्द्रावार्द्रौ । गुरुबुधावाश्रयगाविति व्यज्यते । तथा च कृष्णीये—

"शुष्का रविकुजसौरा भृगुचन्द्रमसौ जलात्मकौ ज्ञेयौ ।
आश्रयगौ गुरुसौम्यौ बलिनावित्युक्तमाचार्यैः ॥"

इति ।

चारणगीतं वृत्तम् । स्वोच्चादिस्थानबलं दिग्बलदायककेन्द्राश्चोक्ताः । अनेन केन्द्रेषूच्चादिस्थानबलेन कृतानां पञ्चमहायोगानां चारणगीतत्वम्, अथवा महापुरुषत्वं सूचितम् । ते च योगा दिग्बलकेन्द्रे विशेषशुभदायका इत्यपि सूचितम् ।

पुनश्चारणगीतवृत्तेन केन्द्रस्थैः स्वभोच्चस्थैर्ग्रहै राजयोगः सूचितः । तथा च मन्त्रेश्वरः—

"त्र्याद्यैः केन्द्रगतैः स्वभोच्चसहितैर्भूपोद्भवाः पार्थिवा
मर्त्यास्त्वन्यकुलोद्भवाः क्षितिपतेस्तुल्याः कदाचिन्नृपाः ॥"

इति । बुधाङ्गिरसौ रविभौमौ सितशीतकरौ इति द्विवचनान्तद्वन्द्वेन द्व्यादिभिर्दिग्बलयुक्तग्रहै राजयोगो भवतीति व्यञ्जितम् । अर्धद्वयेऽपि लघोरपि चकारस्य पादान्तस्थित्या

"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥"

इति श्रुतबोधवचनाद्गुरुत्वसिद्ध्या पूर्वार्धस्थपदचतुष्टयेनोत्तरार्धस्थेन दिक्शब्दवर्जं पदपञ्चकेन चान्यान्वयजोऽपि चतुर्भिः पञ्चभिर्वा दिग्बलयुक्तग्रहै राजा भवतीति सूचितम् । द्वितीयार्धे षट्पदप्रयोगसामर्थ्यादत्र

षड्ग्रहा एव योगकरा इत्यपि व्यञ्जितम् । प्रेष्यकारकतया पृथङ्निर्दिष्टत्वाच्च मन्दस्यैवात्रानवकाशः । अतो मन्दवर्जं चतुरादिभिर्ग्रहैर्दिग्बलयुक्तै राजयोगो वाच्य इति भावः । उक्तं च फलदीपिकायाम्—

"द्वौ वा त्र्याद्या दिग्बलयुक्ता यदि जातः
क्ष्माभृद्वंशे भूमिपतिः स्याज्जयशीलः ।
हित्वा मन्दं पञ्चखगा दिग्बलयुक्ता-
श्चत्वारो वा भूपतिरन्यान्वयजोऽपि ॥"

इति ॥ १७ ॥

अथ चेष्टाबलमाह—

**उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः ।**
**विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः ॥ १८ ॥**

इति । रविशीतमयूखौ सूर्यचन्द्रौ । उदगयने उत्तरायणे । परिशेषाः इतरे ताराग्रहाः । वक्रसमागमगाः वक्रः प्रतिलोमगतिः समागमः चन्द्रेण योगः, एताभ्यां युक्ताः । विपुलकराः प्रकाशपूर्णाः आदित्याद्दूरतः स्थिता इत्यर्थः । युधि युद्धे । ताराग्रहाणां मिथो योगः युद्धम् । तत्र उत्तरदिक्स्थितिर्युद्धजयत्वेन परिगणिता । उत्तरदिक्स्थत्वं तु उत्तरराश्यभिलाषित्वम्, अथवा राश्यन्त्यभागस्थितिरिति पक्षोऽत्र युद्धबलानयने न विवक्षितः । अन्योन्याभिमुखौ ग्रहावेव युद्धकाङ्क्षिणौ भवतः । अतस्तयोरेकरेखागतयोरेव युद्धं सम्भवति । क्रान्तिसाम्ये स्फुटसाम्ये वा युद्धं भवति । पश्चिमारम्भदक्षिणारम्भन्यायेन क्रान्तिसाम्ये पूर्वदिक्स्थस्य स्फुटसाम्ये उत्तरदिक्स्थस्य च जयित्वं सिद्धम् । प्रथमः पक्षः "त्रिदशत्रिकोण" इति श्लोकव्याख्यानावसर आदृतः । अत्र युद्धबलानयने तु

"उत्तरसंस्थ" इत्युक्तत्वात् स्फुटसाम्यं (सदृशकलत्वं) उत्तरदिक्स्थत्वं च विवक्षितम् । तत्र जयिनः पराजितस्य बलस्यैकदेशस्यावकाशोऽस्ति । यावदुत्तरदिक्स्थत्वं तावज्जितबलांशहारित्वमपि भवति । एवं ग्रहक्रान्त्यन्तरहृतं ग्रहबलान्तरं जयिनो बलपिण्डेन योज्यम् । पराजितस्य बलपिण्डाद्वर्ज्यमित्यपि सिद्धम् । तथा च श्रीपतिः—

"वीर्यैकत्वं सदृशकलयोः खेटयोः प्राग्विधाय ॥
याम्योदक्स्थद्युचरबलयोर्हानिवृद्धी विधेये
युद्धे चेष्वोर्विवरविहृता खेटवीर्यान्तरेण ॥" इति ।

उत्तरसंस्थाश्च युद्धजयिनश्च चेष्टितवीर्ययुताश्चेष्टाबलवन्तः परिकल्प्याः ।

उक्तं चाचार्येण विष्णुचन्द्रेण—

"दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम् ।
भौमादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानाम् ॥"

इति ।

युधि विपुलकराश्चेष्टितवीर्ययुताः । उत्तरदिक्स्थाश्च तथा भवेयुरिति चकारेण चेष्टाबलचिन्तायां रश्मिबाहुल्यस्यैव प्राधान्यं सूचितम् । रश्मिहीनस्योत्तरसंस्थत्वेन न बलं वक्तव्यम् । प्रकाशपूर्णस्य दक्षिणदिक्स्थितिरपि युद्धजयकारिणीति च गम्यते । एतत् क्वचित् शुक्रस्यैव सम्भवति । अत एवोक्तम्—

"कदाचिद्दक्षिणस्थोऽपि जयी शुक्रः प्रकीर्त्यते ।
वर्णरश्मिप्रभायोगादूह्यं चैतत्स्वया धिया ॥"

इति । रविशीतमयूखौ परिशेषाश्च विपुलकराः उत्तरसंस्थाश्चैव बलवन्तः । रविशशिनोर्विपुलकरत्वं परिवेषग्रहणादिनिवृत्त्यर्थमुक्तम् । चन्द्रस्य विपुल-

करत्वं शुक्लपक्षे। रवेरुत्तरसंस्थितिरुदगयने इत्युक्तोत्तरायणगतत्वमेव। अनेन सूर्यस्यायनबलप्राधान्यं चन्द्रस्य पक्षबलप्राधान्यं च सूचिते।

तथा चोक्तं कृष्णीये—

"शुक्ले चन्द्रे बलवानुदगयने दिनकरो बलोपेतः॥"

इति। प्रथमतृतीयपादयोरेकच्छन्दस्त्वाद् उदगयनस्यैव चन्द्रपक्षे विपुलकरत्वं सूर्यपक्षे उत्तरदिगभिमुखत्वं च व्याख्याय वेष्टसम्पत्तिः।

'उदगयने रविशीतमयूखौ' इत्यनेन ग्रहाणामयनबलानयनं सूचितम्। सर्वेषां ग्रहाणामयनपक्षबलयोः सिद्धयोर्विशेषतः रविचन्द्रयोरुदगयनपक्ष-बलकथनाद् बलानयने सूर्यस्यायनबलं चन्द्रस्य पक्षबलं च द्विगुणं कार्यमिति व्यञ्जितम्। उश्च दक् च एतयोः समाहारः उदक्। उरित्युत्तरायणं दगिति दक्षिणायनं च निर्दिश्यते। उदगयने उत्तरदक्षिणायनयोः क्रमेण रविशीत-मयूखौ सूर्यचन्द्रौ। वक्रसमागमगाः वक्रः कुजः समागः समां वर्षं गच्छति इति समागः वर्षेणैकेन राशिं भुञ्जानः गुरुः। आगमं गच्छतीत्यागमगः यजुषामधिपः शुक्रः। एते कुजगुरुशुक्राः परिशेषाश्च चेष्टितवीर्ययुताः परिकल्प्याः। उत्तरायणे सूर्यकुजगुरुशुक्रा बलिनः चन्द्रशनी दक्षिणायने बलिनावित्यर्थः। सर्वदा ज्ञ इत्यत्रापि योज्यम्। अनेन बुधः अयनद्वयेऽपि बलवान्। अनेन क्रान्त्यभावे रूपार्धं बलम्। उक्तं च श्रीपतिना—

"क्रान्तिः सौम्या स्वमिहपरमापक्रमे दक्षिणर्णं
शुक्रादित्यक्षितिसुतमरुत्पूजितानां विधेया।
व्यस्ताशीतद्युतिरविजयोर्ज्ञस्य नित्यं विधेया
रामाभ्यस्ता तदनु परमापक्रमेणोद्धरेत्ताम्॥

ग्राह्यं राशिप्रभृति च फलं लिप्तिकीभूतमेत-
द्व्योमाकाशद्विरदखकुभिर्भाजयेदायनं स्यात् ।
द्विघ्नं भानोरयनजबलं पक्षवीर्यं तथेन्दोः ॥"

इति । एतदयनबलं च चेष्टाबलेन योज्यम् ।

चेष्टितवीर्ययुताः परिकल्प्या इति सर्वेषां चेष्टाबलानयनं व्यञ्जितम् । तच्चोक्तं श्रीपतिना—

"मध्यस्पष्टद्युचरविवरार्धेन युक्ताचलोच्चा-
न्मध्ये स्पष्टादधिकवपुषि न्यूनके वर्जिताच्च ।
जह्यान्मध्यग्रहमिति भवेत्तच्च चेष्टाख्यकेन्द्रं
षड्राशिभ्योऽधिकमपनयेन्मण्डलाच्छेषकस्य ॥
कृत्वा लिप्ताः शतहृतगजाशाभिराप्तं फलं य-
च्चेष्टावीर्यं तदिह कथितं हौरिकैर्बुद्धिवृद्धैः ॥" इति ।

शीतमयूखशब्देन चन्द्रो निर्दिष्टः । शीत इत्यक्षरसङ्ख्यया पञ्च षट् च भवति । सङ्कलनेनैकादश च भवति । अतः शीतमयूखशब्देनैकादशमयूखत्वं व्यञ्जितम् । एतच्चन्द्रस्य बलकारणं भवति । एकादशेति दशाधिकस्योपलक्षणम् । दशाधिकमयूखश्चन्द्रः उत्कृष्टबलवानित्यर्थः । अत्र मयूखशब्दः कलापरः । अतो दशाधिककलायुतश्चन्द्रो बलिष्ठो भवति । शुक्लपक्षैकादशीप्रभृति कृष्णपक्षपञ्चम्यवसानपर्यन्तं चन्द्रो बलिष्ठ इति भावः । सितपक्षत्वात् शुक्लपक्षगताद्यदशतिथयश्चन्द्रस्य मध्यबलं ददतीत्यपि स्पष्टम् । कृष्णपक्षगतत्वाद् दशोनकलावत्वाच्चेतरतिथिषु चन्द्रो हीनबलो भवति । उक्तं च जातकपारिजाते—

"शुक्लादिकादिदशकेऽहनि मध्यवीर्य-
शाली द्वितीयदशकेऽतिशुभप्रदोऽसौ ।

चन्द्रस्तृतीयदशके बलवर्जितस्तु
सौम्येक्षणादिसहितो यदि शोभनः स्यात् ॥ ''

इति ।

वक्रसमागमाः । सम आगमः समागमः । वक्रानन्तरं पूर्वस्थिति-प्रापकः अनुवक्र इत्यर्थः । वक्रानुवक्रं विचार्य बलं वक्तव्यमित्यर्थः । उक्तं च कृष्णीये—

" वक्रानुवक्रकालेष्वन्ये स्निग्धाः प्रदक्षिणगाः । ''

इति । अनेन सप्तविधगतयस्तद्बलं चापि चिन्त्यमिति सूचितम् । तथा च पराशरः—

" षष्टिर्वक्रगतेर्वीर्यमनुवक्रगते दलम् ।
पादं विकलभुक्तेः स्याद्दलमेव समागमे ॥
पादं मन्दगतेस्तस्य दलं मन्दतरस्य च ।
शीघ्रभुक्तेस्तु पादोनं दलं शीघ्रतरस्य तु ॥ ''

इति । वृत्तं तामरसदोधकसंयुक्तोपजातिः । ललितपदचारणगीतसंयुक्तोप-जातिर्वा । अनेन समागमशब्देन न केवलं चन्द्रसमागमो विवक्षितः । किन्तु ग्रहाणां परस्परसमागमश्चापि विवक्षितः । ललितपदचारणगीतसंयोगो ग्रहाणां समागमजनितान्योन्यप्रीतिव्यञ्जकः । समागमशब्देन समलिप्तिका-वर्तित्वं सूचितम् । तदैव युद्धं समागमो वा जायते । तथा च संहिता-याम्—

" वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम् ।
अतिदूराद् दृग्विषये समतामिव संप्रयातानाम् ॥ ''

इति । "विपुलकरा युधि चोत्तरसंस्थाः '' इत्यत्रस्थैश्चतुर्भिर्गणैर्युद्धं चतुर्धा भवतीति सूचितम् ।

तथा च सूर्यसिद्धान्ते—

" उल्लेखं तारकास्पर्शाद्भेदाभेदः प्रकीर्त्यते ।
युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ॥ "
अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः ॥ "

इति । संहितायामाचार्यश्च—

" आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनापसव्यैः ।
युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥ "

इति ।

तत्र यो विपुलस्निग्धकरः स जयी । उभयोरपि विपुलस्निग्धकरत्वे नैतद्युद्धम् । किन्तु समागमः शुभकरः । तथा च संहितायाम्—

" दक्षिणदिक्स्थः पुरुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः ।
अतिगूढो विकृतो निष्प्रभो विवर्णश्च यस्स जितः ॥
उक्तविपरीतलक्षणसंपन्नो जयगतो विनिर्दिष्टः ।
विपुलस्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः ॥
द्वावपि मयूखपृक्तौ विपुलौ स्निग्धौ समागमे भवतः ।
तत्रान्योन्यप्रीतिर्विपरीतावात्मपक्षघ्नौ ॥ "

इति । उक्तलक्षणैर्गणितेन युद्धं वा समागमो वा भवतीत्यनेनैवोह्यम् । उक्तं च संहितायाम्—

" युद्धं समागमो वा यद्यद्व्यक्तौ तु लक्षणैर्भवतः ।
भुवि भूभृतामपि तथा फलमव्यग्रं तथा विनिर्देश्यम् ॥ "

इति । समागमः समाशब्दः वर्षपर्यायत्वात् षष्टिः । एवं चन्द्रसमागमः षष्टिविलिप्तान्तर एव भवतीति सूचितम् । तथा च सूर्यसिद्धान्ते—

" समागमोंऽशादधिके भवतश्चेद्बलान्वितौ । "

इति । काश्यपश्च—

" ततो योगो भवेदेषामेकांशकसमापनात् । "

इति । उत्तरसंस्था इति निर्देशेन तामरसवृत्तेन च चन्द्रः उत्तरेण प्रदक्षिण-मार्गेण सञ्चरन्नेव समागमे शुभप्रदो भवतीत्यपि सूचितम् ।

तथा च संहितायाम्—

" भानां यथासंभवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः ।
प्रदक्षिणं तच्छुभकृन्नराणां याम्येन यातो न शिवः प्रदिष्टः ॥ "

इति । तामरसवृत्तलक्षणं तु—

" इति वद तामरसं नजजा यः " इति ।

" ललितपदं द्युदितं नजजा यः "

इति वा । चारणगीतलक्षणं तूक्तम् । अनेन विचित्रेणार्धसमवृत्तेन चेष्टावीर्य-युतस्य ग्रहस्य विचित्रफलदत्वं सूचितम् । तथा च सारावल्याम्—

" क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः ।
करोति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥ "

इति ॥ १८ ॥

अथ कालबलं निसर्गबलं चाह—

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।**
**द्व्ययनदिवसहोरामासपैः कालवीर्यं**
**शकुबुगुशुचराद्या वृद्धितो वीर्यवन्तः ॥ १९ ॥**

इति । शशिकुजसौराः चन्द्रकुजशनयः निशि रात्रौ बलिन इति शेषः । ज्ञः बुधः सर्वदा बली । अन्ये च सूर्यशुक्रगुरवः अह्नि दिवा बलिनः ।

निशि शशिकुजसौरा बलवन्तः। अतस्तेषां दिनमध्ये बलं शून्यम्। अर्धरात्रे बलं पूर्णम्। सर्वदा ज्ञः। बुधस्य सदा पूर्णबलवत्त्वम्। अह्नि चान्ये। इतरेषां दिनमध्ये पूर्णबलम्। निशीथे बलं शून्यम्। अन्तराले सर्वेषां बलमनुपातत आनेयम्। आमध्याह्नादर्धरात्रान्तं दिवा इति पक्षे शशिकुजसौराणां रात्र्यादौ बलं शून्यं रात्र्यन्ते पूर्णं च भवति। तथा च रविगुरुशुक्राणां दिनादौ बलं शून्यं दिनान्ते सूर्ये व्योममध्यं गते बलं पूर्णं भवति। उक्तं च पराशरेण—

" आमध्याह्नादर्धरात्राद्दिवारात्रिरिति क्रमात्।
अर्कभार्गवसूरीणां द्विघ्ना नाड्यो गता दिवा॥
भौमचन्द्रशनीनां तु षष्टिभ्यो वर्जयेदिमाः।
दिवाबलमिति प्रोक्तं बलं नैशं ततोऽन्यथा॥ "

इति। अनेन नतोन्नतबलं व्याख्यातम्। एतत्कालबलेन योज्यम्।

क्रूरसौम्याः पापाः शुभाश्च क्रमेण यथाक्रमं बहुलसितगताः कृष्णशुक्लपक्षगताः स्युः बलिनः स्युः। पापानां कृष्णपक्षे बलम्। शुभानां शुक्लपक्षे बलम्। द्व्ययनदिवसहोरामासपैः संवत्सरदिनहोरामासाधिपैः तत्तत्संवत्सरदिवसहोरामासेषु कालवीर्यं प्राप्तं भवेदिति शेषः। शकुबुगुशुचराद्याः शकुबुगुशुचराः अक्षरा आद्या येषां ते। शाद्यः शनिः। काद्यः कुजः। ब्वाद्यः बुधः। ग्वाद्यः गुरुः। श्वाद्यः शुक्रः। चाद्यः चन्द्रः। राद्यः रविः। एते शनिकुजबुधगुरुशुक्रचन्द्ररवयो यथाक्रमम्। वृद्धितो वीर्यवन्त उत्तरोत्तरं नैसर्गिकवीर्याधिका भवन्ति।

शकुबुगु इत्यत्र शनिकुजबुधगुरवो निर्दिष्टाः। एते पादपादोनपूर्णार्धदृष्टिमन्तः। अनेनायमर्थः सूचितः। द्व्ययनदिवसहोरामासपैः कालवीर्यं शनिकुजगुरुबुधानां दृष्टिस्वभावमनुसृत्य प्राप्यत इति। अनेन संवत्सरस्य

इति । काश्यपश्च—

"ततो योगो भवेदेषामेकांशकसमापनात् ।"

इति । उत्तरसंस्था इति निर्देशेन तामरसवृत्तेन च चन्द्रः उत्तरेण प्रदक्षिण-मार्गेण सञ्चरन्नेव समागमे शुभप्रदो भवतीत्यपि सूचितम् ।

तथा च संहितायाम्—

"भानां यथासंभवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः ।
प्रदक्षिणं तच्छुभकृन्नराणां याम्येन यातो न शिवः प्रदिष्टः ॥"

इति । तामरसवृत्तलक्षणं तु—

"इति वद तामरसं नजजा यः" इति ।
"ललितपदं ब्रुदितं नजजा यः"

इति वा । चारणगीतलक्षणं तूक्तम् । अनेन विचित्रेणार्धसमवृत्तेन चेष्टावीर्य-युतस्य ग्रहस्य विचित्रफलदत्वं सूचितम् । तथा च सारावल्याम्—

"क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः ।
करोति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥"

इति ॥ १८ ॥

अथ कालबलं निसर्गबलं चाह—

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।**
**द्व्ययनदिवसहोरामासपैः कालवीर्यं**
**शकुबुगुशुचराद्या वृद्धितो वीर्यवन्तः ॥ १९ ॥**

इति । शशिकुजसौराः चन्द्रकुजशनयः निशि रात्रौ बलिन इति शेषः । ज्ञः बुधः सर्वदा बली । अन्ये च सूर्यशुक्रगुरवः अह्नि दिवा बलिनः ।

निशि शशिकुजसौरा बलवन्तः । अतस्तेषां दिनमध्ये बलं शून्यम् । अर्धरात्रे बलं पूर्णम् । सर्वदा ज्ञः । बुधस्य सदा पूर्णबलवत्त्वम् । अह्नि चान्ये । इतरेषां दिनमध्ये पूर्णबलम् । निशीथे बलं शून्यम् । अन्तराले सर्वेषां बलमनुपातत आनेयम् । आमध्याह्नादर्धरात्रान्तं दिवा इति पक्षे शशिकुजसौराणां रात्र्यादौ बलं शून्यं रात्र्यन्ते पूर्णं च भवति । तथा च रविगुरुशुक्राणां दिनादौ बलं शून्यं दिनान्ते सूर्ये व्योममध्यं गते बलं पूर्णं भवति । उक्तं च पराशरेण—

"आमध्याह्नादर्धरात्राद्दिवारात्रिरिति क्रमात् ।
अर्कभार्गवसूरीणां द्विघ्ना नाड्यो गता दिवा ॥
भौमचन्द्रशनीनां तु षष्टिभ्यो वर्जयेदिमाः ।
दिवाबलमिति प्रोक्तं बलं नैशं ततोऽन्यथा ॥"

इति । अनेन नतोन्नतबलं व्याख्यातम् । एतत्कालबलेन योज्यम् ।

क्रूरसौम्याः पापाः शुभाश्च क्रमेण यथाक्रमं बहुलसितगताः कृष्णशुक्लपक्षगताः स्युः बलिनः स्युः । पापानां कृष्णपक्षे बलम् । शुभानां शुक्लपक्षे बलम् । द्व्ययनदिवसहोरामासपैः संवत्सरदिनहोरामासाधिपैः तत्तत्संवत्सरदिवसहोरामासेषु कालवीर्यं प्राप्तं भवेदिति शेषः । शकुबुगुशुचराद्याः शकुबुगुशुचराः अक्षरा आद्या येषां ते । शाद्यः शनिः । काद्यः कुजः । ब्वाद्यः बुधः । ग्वाद्यः गुरुः । श्वाद्यः शुक्रः । चाद्यः चन्द्रः । राद्यः रविः । एते शनिकुजबुधगुरुशुक्रचन्द्ररवयो यथाक्रमम् । वृद्धितो वीर्यवन्त उत्तरोत्तरं नैसर्गिकवीर्याधिका भवन्ति ।

शकुबुगु इत्यत्र शनिकुजबुधगुरवो निर्दिष्टाः । एते पादपादोनपूर्णार्धदृष्टिमन्तः । अनेनायमर्थः सूचितः । द्व्ययनदिवसहोरामासपैः कालवीर्यं शनिकुजगुरुबुधानां दृष्टिस्वभावमनुसृत्य प्राप्यत इति । अनेन संवत्सरस्य

पादं बलम् । दिवसस्य पादोनबलम् । होरायाः पूर्णबलम् । मासस्यार्धबलं च भवति । तथा चोक्तं श्रीपतिना—

"पादं स्ववर्षेऽथ दलं स्वमासे दिने स्वकीये चरणोनरूपम् ।
रूपं स्वहोरास्विति कालवीर्यमुक्तं हि होरानिपुणैः पुराणैः ॥"

इति । केचित् "स्वदिवससमहोरा" इति पठन्ति । तदसत् । 'स्वल्पं वृत्तविचित्रमर्थबहुलम्' इत्यारब्धग्रन्थस्य तन्न युक्तम् । तत्र संवत्सरादीनां 'शकुबुगु' इति क्रमेण बलं वक्तुमशक्यत्वात् । "स्वदिवससमहोरा" इति पराशरहोरायां दृश्यते । प्रायेण शब्दप्रयोगेऽपि पराशरमेवानुसरत्याचार्यः । तथाऽपि तत्र तत्रार्थबाहुल्यार्थमेवमादिभेदान् करोति । कालक्रमेण प्रमादाज्जना ईदृशपाठभेदानजनयन् । किञ्च "क्रियतावुरुजितुम" इत्यादिश्लोकोऽपि पराशरहोरान्तर्गत एव । तत्र मीनस्य 'अर्थसिः' इति संज्ञा दृश्यते । कालचक्रदशाक्रमसूचनार्थमेतत्त्यक्त्वा "अन्त्यभं" इत्युक्तवानाचार्यः । अनेन कीदृशमर्थबाहुल्यमिति तच्छ्लोकव्याख्यानादवगन्तव्यम् । मुद्रितरुद्रविवरणेऽपि 'अर्थसिः' इति पाठ एव दृश्यते । "अर्थसिः" इति यवनसंज्ञा । "अन्त्यभं" इत्यनेनार्थस्वारस्यम् । अर्थस्वारस्याय आर्यसंज्ञां पठितवानाचार्यो यवनसंज्ञाश्लोके ।

"शकुबुगुशुचराद्या" इत्यस्यापि पाठान्तरमस्ति "शरुबुगुशुचसाद्याः" इति । एतदयुक्तम् । प्रसिद्धनामान्येवात्र विवक्षितानि । कुजवासर इत्येव जना वदन्ति । न तु रुधिरवासर इति । शशुरुचज्ञग्वादिष्वित्यत्र रुकारप्रयोगः रवेरपि ग्रहणार्थम् । पूर्वं तच्छ्लोकव्याख्यानोक्तप्रकारेणोकार उच्चारणार्थः स्यात् । अथ पाणिनीयव्याकरणशास्त्रमनुसृत्य इद्वा स्यात् । ततः "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रेणात्र उदिद्रेफनिर्दिष्टरुधिरः क्षत्रियत्वाज्जातितः, रक्तवर्णत्वाद्वर्णतश्च एवमुभयप्रकारेण

सवर्णमादित्यं गृह्णीयात् । सवितृशब्दोऽपि रविशब्दवन्न प्रसिद्धः । किंचाद्यश्लोक एव सूर्यः रविशब्देन निर्दिष्टः "त्रैलोक्यदीपो रविः" इति । त्रैलोक्यदीप इति रविशब्दस्य प्रसिद्धिसूचकः । अग्निबीजात्मकरेफामृतबीजात्मकवकारयुक्तो हि रविशब्दः । अतः रविशब्द एव सूर्यं याथातथ्येन वर्णयति ।

शकुबुगुशुचराद्याः प्रथमाध्याये विंशतिश्लोकैः राशिस्वरूपमुक्तम् । अधुना द्वितीयाध्याय एकोनविंशतिश्लोकैर्ग्रहस्वरूपमुक्तम् । राशिग्रहसंयोगो हि ज्योतिःशास्त्रम् । अत एकोनविंशतिश्लोकानां विंशत्या, अथवा अशीत्यधिकत्रिशतश्लोकैः पञ्चविंशतिभिरध्यायैः शास्त्रं करोति । तत्र राशिस्वरूपग्रहस्वरूपनिरूपणानन्तरं जातकलेखनं सूचयति । तत्र ग्रहाणामाद्यक्षरा एव प्रायेण लिख्यन्ते । तानक्षरान् सूचयति शकुबुगुशुचरा इति । जातं शिशुमुद्दिश्य मालिनीवृत्तं मङ्गलार्थं प्रयुङ्क्ते । राकारोऽपि श्रूयते "शुचराद्या" इत्यत्र । राकारः जातकलेख्यराहुव्यञ्जकः । शश्च कुश्च बुश्च गुश्च शुश्च चश्च रश्च राद्यौ च आद्यश्च शकुबुगुशुचराद्याः । एकशेषेणेतरे लुप्यन्ते । राद्यौ राहुः आद्यः ययोरिति विग्रहेण राद्यौ राहुकेतू । अतः केतुरपि व्यञ्जितः । सः "शिखीति केतुः" इत्युपदिष्टः । तत्र प्रधानं नाम केतुः । अतः केतुः के इत्यक्षरेण सूचितो जातके । "शिखी केतुः" इति पक्षे "शि" इत्यनेन वा । अथवा राश्च आद्यश्च राद्यौ । आद्यशब्देन केतुर्गृह्यते । ध्वज एव ह्यौन्नत्यादादौ दृष्टिगोचरो भवति । रश्च आद्यश्च आद्यश्च राद्याः । द्वितीय आद्यशब्दो मान्दिसूचकः । "ज्ञेयोऽत्र प्रथमं हि जन्मसमयः" इत्याद्यज्ञेयकालरूपो हि सः । अथवा गु इत्येव गुलिकं तत्सदृशं च मान्दिं सूचयेत् । मान्दिदोषहारी हि गुरुः । अतस्तेन सह निवेशनमस्मिन् जातकर्मसमये तद्दोषशान्त्यर्थम् । अनेनैव व्यञ्जितं गुरुदृष्टिर्मान्दिदोषं हन्यादिति । 'शकुबुगु'

इति क्रमस्य "द्व्ययनदिवसहोरामासपैः" इत्यनया दृष्ट्या बद्धत्वाद् गुरुदृष्टिरित्युक्तम्। न तु गुरुयुतिरिति।

शकुबुगुशुचराद्याः वृद्धितो वीर्यवन्तः। "कुजरविज" इति श्लोकव्याख्यानावसर एव शनिकुजबुधगुरुशुक्राणां रश्मय उक्ताः। सूर्यस्य तु "नैककिरण" इत्यनेनैव दशकिरणत्वं व्यञ्जितमिति प्रथमश्लोकव्याख्यान उक्तम्। चन्द्रस्य तु शकुबुगुशुचरादिक्रमेण शुक्रस्याष्टरश्मिवत्वात् सूर्यस्य दशरश्मिवत्वाद् नव रश्मय इत्यूह्यम्। सूर्यस्य चन्द्रादुष्णकिरण एवाधिकः।

पुनः शकुबुगुशुचराद्याः वृद्धितः एकद्वित्रिचतुःपञ्चषट्सप्तांशबन्धेन वीर्यवन्तो भवन्ति। सूर्यस्य षष्टिर्विरूपाणि नैसर्गिकं बलम्। शनेस्तस्य सप्तमांशः। कुजबुधगुरुशुक्रचन्द्राणां द्वित्रिचतुःपञ्चषड्गुणितशनिबलानि नैसर्गिकबलानि स्युः। तथा च पराशरः—

"षष्टिरेकेषवः सप्तदश षड्विंशतिस्ततः।
चतुस्त्रिंशत्त्रिवेदाङ्काः सूर्यादीनां निसर्गतः॥"

इति। श्रीपतिश्चाह—

"मन्दावनीसूनुशशाङ्कपुत्रवागीशशुक्रेन्दुदिवाकराणाम्।
एकोत्तरं रूपमगैर्विभक्तं नैसर्गिकं वीर्यमुदाहरन्ति॥"

इति।

शकुबुगुशुचराद्याः—अस्मिन् श्लोके ग्रहाणां स्थानबलदिग्बलचेष्टाबलदृग्बलकालजबलनैसर्गिकबलात्मकषड्बलान्युक्तानि। श्रीपतिपद्धत्यादिरीत्या तेषां बलपिण्डानयनं कार्यम्। तथाकृते षडधिकवत्वं बलवत्त्वमित्यनेन श्लोकेन दर्शयति। यथा शकुबुगुशुचर इति सप्ताक्षराः। अत्र र आद्य इति सन्धिना रा इति रेफ-आकारयोर्ग्राहको भवति। अतः शकुबुगुशुचर इति

सार्धषडक्षरा एव । शकुबुगुशुचराद्या इत्यस्य सार्धषडादिबलपिण्डयुता इत्यर्थः । वृद्धितः "ऋति सवर्णे ऋ वा" इति वार्तिकेन वृ ऋद्धित इति पदच्छेदः । वृ इत्यक्षरसङ्ख्यया चत्वारि । अतः चतुःपिण्डात्परत ऋद्धितः वृद्धितः वीर्यवन्तः ग्रहाः बलिष्ठा भवन्ति । एतदेव व्यञ्जित-मुत्तरश्लोके 'सुबलिभिः' 'विबलैः' इति पदाभ्याम् ।

"मूर्तित्वे परिकल्पित" इत्यादावुपदिष्टलग्नमप्यत्र सूचितम् । "ज्ञेयोऽत्र प्रथमं हि जन्मसमयः" इति लग्नं ह्येतेषु प्रधानतमं भवति । रलयोरभेद इति वचनेन लकारो रेफ एव वर्तते । लग्नं लकारेण सूचित-व्यमिति गम्यते । अतः शश्च कुश्च बुश्च गुश्च शुश्च चश्च रश्च लश्च राश्च आद्यश्च आद्यश्च शकुबुगुशुचराद्या इति विग्रहः कार्यः ।

"द्व्ययनदिवसहोरा" इत्यत्र द्व्ययनशब्दः सौरचान्द्रमानाभ्यां द्विधा स्थितं संवत्सरं सूचयति । तत्र चान्द्रसंवत्सरारम्भदिवसनाथः राजा । सौरसंवत्सरारम्भदिवसनाथो मन्त्री । उभयोरपि बलं वक्तव्यं तत्संवत्सर इति गम्यते ।

वृत्तं मालिनी । "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् । अस्यैकैकस्य पादस्य पञ्चदशाक्षराः । अनेन शुक्लकृष्णपक्षौ सूचितौ । अनेनैव चन्द्रस्य विशेषतः किञ्चिद्वक्तव्यमिति च लब्धम् । तच्च पक्षावलम्बि भवेत् । अतः "बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण" इत्यत्र चन्द्रस्य बहुलसितगताः कलाः क्रूरसौम्याः स्युरिति व्याख्येयम् । अनेन चन्द्रस्य कृष्णपक्षे पापत्वं शुक्लपक्षे शुभत्वं च भवतः । अतः "क्षीणेन्द्वर्के" इत्यत्र क्षीणेन्दुः कृष्णपक्षचन्द्र एव । तच्छ्लोक-व्याख्याने च बहवः पक्षा दर्शिताः । एतेषामेवं विवेकः कर्तव्यः । बहुलपक्षगतश्चन्द्रः क्षीणः पापश्च । शुक्लपक्षगतस्तु शुभः । एवं चेच्छुभत्वाच्चन्द्रस्य शुक्लपक्षे बलम् । पापत्वात्कृष्णपक्षे बलं स्यात् ।

तन्निषेधार्थं चन्द्रस्य बलनिर्णयार्थमेवेतरे पक्षा उक्ताः। चेष्टाबलनिर्णय उक्तप्रकारेण चन्द्रस्य शुक्लपक्षादौ दिनदशके मध्यमबलम्। ततो दशदिनेषु पूर्णबलम्। कृष्णपञ्चम्याः परतः अधमबलम्। तत्रापि विभागः क्रियते कालामृतकृता—

"कृष्णादौ दिनपञ्चकं शुभकरं तन्मध्यमं मध्यमं
तस्यान्त्यं त्वधमाभिधं शशिवशाच्छुक्ले तु तद्व्यत्ययम्।"

इति।

मालिनीवृत्तस्य षष्ट्यक्षरैः षष्टिनाडीयुक्तनक्षत्रवशादुडुदशानयनमपि जातके कार्यमिति व्यञ्जितम्।

वृत्तं मालिनी। अत्रस्थषष्ट्यक्षरैर्दिनस्य षष्टिर्घटिकाः सूचिताः। अतः शकुबुगुशुचराद्याः शन्यादिरव्यन्तवासरेषु स्थिताः। राद्याः रविः आदिः कूटस्थः यस्य स मान्दिसंज्ञकगुलिकः यस्य कालविशेषाः उदयसमयाः राद्याः नाडिकाद्वयाद्याः वृ ऋद्धितः वृ इत्यक्षरसङ्ख्यासूचितचतसृभिर्घटिकाभिः ऋद्धिता भवन्ति। ते वीर्यवन्तश्च भवन्ति। प्राधान्येन चिन्त्या इत्यर्थः। एवं शनिवारे सूर्योदयाद्घटिकाद्वयात्परतो गुलिकोदयः। शुक्रवारे चतुर्वृद्ध्या षड्घटिकाभ्यः परतो गुलिकोदयः। गुरुवारे दशघटिकाभ्यः, बुधवारे चतुर्दशघटिकाभ्यः, कुजवारे अष्टादशघटिकाभ्यः, चन्द्रवारे द्वाविंशति-घटिकाभ्यः, रविवारे षड्विंशतिघटिकाभ्यश्च गुलिकोदयो भवतीति सूचितम्। मालिनीवृत्तस्य पञ्चदशाक्षरपादैस्त्रिंशदक्षरयुक्तार्धाभ्यां षष्ट्य-क्षरयुक्तश्लोकेन च तिथिकरणदिनरात्रिवारवर्षनक्षत्राणि च सूचितानि। षष्ट्यक्षरैरुडुदशा च सूचिता। श्लोकेऽस्मिन् संवत्सरायनमासदिनरात्रि-होरापक्षाश्चोक्ताः। क्रूरसौम्या इत्युक्त्या राजसतामससात्त्विकवेलाश्च सूचिताः। एवं जातकलेखने प्रभवादिवर्षर्तुमासपक्षतिथिवारयोगकरणनाडि-

कादिकालबलान्युडुदशाशिष्टसहितानि लेख्यानीति सूचितम्। जातक-कुण्डल्यां नवग्रहाः वृ ऋद्धित इत्युदयकालानुसारेण गुलिकश्च लेख्या इति शकुबुगुशुचराद्या वृद्धितो वीर्यवन्त इत्यनेन सूचितम्। एवं लिखितजातक-कुण्डलिनीफलं तृतीयाध्यायादारभ्य निर्दिशत्याचार्यः ॥ १९ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
ग्रहयोनिभेदो नाम द्वितीयाध्यायः ॥

---

# वियोनिजन्माध्यायः ॥ ३ ॥

धर्मजादय उपेत्य यत्प्लवाः कौरवाब्धिमतरन् सुदुस्तरम् ।
भीष्ममुख्यरथिभिस्तिमिङ्गिलैः पूरितं स भगवान् हि मे गतिः ॥

अथ वियोनिजाः परामृश्यन्ते । विविधाः योनयः वियोनयः । योगशास्त्रोक्तचतुरशीतिसहस्राणि वियोनिजन्मानोऽत्र विवक्षिताः । प्रायेणास्य शास्त्रस्य मनुष्यविषयकत्वान्मनुष्यजातकं विस्तरतो निरूप्यते । अतोऽत्रैकोनचतुरशीतिसहस्रवियोनिजन्मज्ञानं विषयो भवति । हृतनष्टादिचिन्तायां धातुमूलजीवनिर्णयार्थं पूर्वाध्याये "वर्णास्ताम्रसितातिरक्त" इत्यादिश्लोकैर्धातुचिन्ताविधिं प्रदर्शयन्नत्र मूलजीवद्रव्याणि निरूपयति । तत्रादौ जीवद्रव्यमिति निर्णयानन्तरं मनुष्येतरजीवद्रव्येषु जातिभेदज्ञानार्थमाह—

**क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः**
**क्लीबे चतुष्टयगते तदवेक्षणाद्वा ।**
**चन्द्रोपगद्विरसभागसमानरूपं**
**सत्त्वं वदेद्यदि भवेत्स वियोनिसंज्ञः ॥ १ ॥**

इति । सुबलिभिः बलवद्भिः, क्रूरग्रहैः पापैः, विबलैश्च बलहीनैः, सौम्यैश्च शुभैः, क्लीबे नपुंसकग्रहे, चतुष्टयगते केन्द्रमाश्रिते । तदवेक्षणाद्वा क्लीबग्रहेण दृष्टे वा । चन्द्रोपगद्विरसभागसमानरूपं चन्द्राश्रितद्वादशांशसमानरूपं सत्त्वं

जन्तुविशेषं स वियोनिसंज्ञः भवेद् यदि वदेत्। पापानां बलवत्त्वं पापफलाधिक्यसूचकम्। शुभानां बलहीनत्वं पुण्यफलाल्पत्वसूचकम्। अत एव वियोनित्वम्। पुण्यबाहुल्याद् देवत्वम्। पुण्यपापमिश्रत्वं मनुष्यजन्मकारणम्। पापबाहुल्यं वियोनिजन्मत्वे कारणमिति श्रुतिस्मृतिप्रसिद्धम्। अत एव क्रूरग्रहैरित्याद्युक्तम्।

सुबलिभिः सु इत्यक्षरसङ्ख्यानिर्दिष्टसप्तबलयुतैरित्यर्थः। विबलैः वि इत्यक्षरसङ्ख्यासूचितचतुर्बलयुतैरित्यर्थः। अतो बलपिण्डानयनप्रकारेण षडधिकस्यातिबलत्वं तन्न्यूनस्य विबलत्वं च सूचिते। 'क्लीबे चतुष्टयगते' इति केन्द्रगस्य बलाधिक्यं व्यञ्जितम्। अनेन पणपरस्थानां मध्यबलं, आपोक्लिमस्थानामल्पबलवत्त्वं च सिद्धम्। "चन्द्रोपगद्विरसभाग" इत्युक्त्या चन्द्रस्य शरीरलक्षणव्यञ्जकं व्यञ्जितम्। तस्मात्सर्वत्र चन्द्रेणैव शरीरलक्षणकथनं कार्यम्। 'चन्द्रोपगद्विरसभागसमानरूपम्' इत्यत्र चन्द्रोपग इति चन्द्रादयो ग्रहाः। द्विरसभागसमानरूपमित्यनेन द्रेक्काणोऽपि विवक्षितः। रसभागः रसांशः पञ्चभागात्मकः, द्विरसभागः दशभागात्मकः द्रेक्काण इत्यर्थः। अतः सर्वेऽपि धातुमूलजीवाः ग्रहतो द्रेक्काणतो वा चिन्त्या इति सूचितम्। तथा च कृष्णीये—

> " द्विपदचतुष्पदविपदाः सङ्कुलपादाश्च चिन्तिता ज्ञेयाः।
> द्रेक्काणसदृशरूपा ग्रहरूपा वा बलं ज्ञात्वा ॥"

इति।

क्रूरग्रहैः सुबलिभिरित्यनेन पापाधिक्यसूचनात् सौम्यग्रहाणां बलवत्त्वं पुण्याधिक्यसूचकम्। अनेन सौम्यग्रहाणामतिबले देवचिन्ता कार्या। सौम्यग्रहेषु बलवत्सु मनुष्यचिन्ता कर्तव्या। एवमेव विबलैः क्रूरैरपि चिन्त्यम्।

क्लीबे चतुष्टयगते इति क्लीबस्य केन्द्रगत्वं वियोनिजन्महेतुः। तद्वत् पुरुषग्रहस्य केन्द्रगत्वं पुरुषजन्महेतुः। स्त्रीग्रहस्य केन्द्रगत्वं स्त्रीजन्महेतुः। एवं हृतनष्टादिषु प्रश्नेषु चिन्त्यम्। तथा च कृष्णीये—

"प्रायेण शुभा बलिनो मनुष्यचिन्तां तदाश्रयां कुर्युः।
देवानामुच्चगता नीचाश्रयिणस्तु नारकिनाम्॥"

इति।

क्रूरग्रहैरित्यत्र क्रूरशब्देन धातूनामपि चिन्तैवं कर्तव्येति व्यज्यते। क्रूरक्षेत्रद्रेक्काणग्रहयुतिदृष्टिभिर्धातुचिन्ता स्यात्। तथा च कृष्णीये—

"आग्नेयद्रेक्काणा ह्याग्नेयक्षेत्रमाश्रिता ये स्युः।
आग्नेयग्रहदृष्टाः कुर्युर्धातूद्भवां चिन्ताम्॥"

इति।

एवमेव मूलराशिद्रेक्काणादिवशान्मूलद्रव्यचिन्ता कर्तव्येत्यपि सूचितम्। तथा च कृष्णीये—

"मूलांशद्रेक्काणा मूलानां क्षेत्रमाश्रिता ये स्युः।
मूलग्रहसंदृष्टाः कुर्युर्मूलोद्भवां चिन्ताम्॥"

इति।

तद्वदेव जीवक्षेत्रद्रेक्काणग्रहयुतिदृष्टिवशाज्जीवद्रव्याणामपि चिन्ता कर्तव्या। तथा च कृष्णीये—

"जीवांशद्रेक्काणा जीवानां क्षेत्रमाश्रिता ये ये।
जीवग्रहसंदृष्टाः कुर्युर्जीवोद्भवां चिन्ताम्॥"

इति।

चन्द्रोपगद्विरसभागसमानरूपम् । चन्द्रः । उपगः उपगच्छति इति उपगः उदयारूढच्छत्रराशीनामुपलक्षणम् । द्विरसभागः द्रेक्काणः । चन्द्रशब्देन चन्द्रराशिरपि गृह्यते । एवं चन्द्रचन्द्रस्थानोदयारूढच्छत्रद्रेक्काणैः फलविशेषश्चिन्त्य इत्यपि सिद्ध्यति । केचिच्चन्द्रलग्नाद्वर्तमानफलं छत्रराशितो भाविफलमारूढेन भूतफलं च चिन्तयन्ति । तथा च कृष्णीये—

"लग्नस्योक्तं फलमिदमिन्दुस्थानेऽपि दर्शनाद्वाच्यम् ।
अन्योन्यनिपातेष्वपि राशिष्वागन्तुकमूह्यम् ॥"

इति ।

द्विरसभागसमानरूपम् । समानस्तुल्यपर्यायः । द्विरसभागस्यावृत्त्या द्विरसभागद्विरसभागरूपो द्रेक्काणद्वादशांशरूपः सूक्ष्मकालः । क्रूरग्रहैः स्यात् क्रूरेषु चरेषु ग्रहैः स्यात् । ग्रहैरित्यक्षरसङ्ख्यया द्वौ अष्ट च भवति । द्विप्राणयुक्ताष्टविनाड्यात्मको भवति । एतत्सूक्ष्मलग्नमिति सूचितम् ।

वृत्तं सिंहोन्नता । सिंहः पञ्चमराशिः । अतः पञ्चमभावफलं चाप्यत्र व्यञ्जितम् । वियोनिसंज्ञाध्याय एषः । अतो वियोनिजाः पुत्रा अत्र निरूपिताः । औरसवर्जं सर्वेऽपि पुत्रा वियोनिजा इति चिन्त्याः । क्रूरग्रहाणां सुबलित्वं सौम्यग्रहाणां बलहीनत्वं क्लीबग्रहस्य पञ्चमभावस्य संबन्धश्चानौरसपुत्राणां हेतवो भवन्तीति गम्यते । द्विरसभागसमानरूपं सत्त्वं वदेत् द्विरसाः द्वादशविधपुत्रास्तेषु भागः भ इत्यक्षरसङ्ख्यया चत्वारि अग इति सप्त, सङ्कलनेन एकादश । एकादशविधपुत्ररूपं वदेत् । औरसादिद्वादशविधपुत्रेष्वत्रोक्तश्लोकविधिना अनौरसा एकादशविधाः पुत्राः क्लीबैश्चिन्त्या इत्यर्थः ।

तथा च सारावल्याम्—

"सौरर्क्षे सौरगणो बुधदृष्टो न गुरुभौमदृग्घीनः ।
क्षेत्रजपुत्रं जनयति बौधोऽपि गणो रविजसंदृष्टः ॥

मान्दं सुतर्क्षमिन्दुनिरीक्षितं यदि शनैश्चरेण युतम् ।
दत्तकपुत्रोत्पत्तिः क्लीबस्य बुधस्य चैवं स्यात् ॥
सप्तमभावे कौजे सौरयुते पञ्चमे सदा भवने ।
कृत्रिमपुत्रं विन्द्याच्छेषग्रहदर्शनान्मुक्ते ॥
वर्गे पञ्चमराशौ सौरे सूर्ये च तत्र संयुक्ते ।
लोहितदृष्टे वा स्याज्जातश्च सुतोऽधमप्रभवः ॥
चन्द्रे भौमांशगते धीस्थे मन्दावलोकिते भवति ।
गूढोत्पन्नः पुत्रः शेषग्रहदर्शनातीते ॥
तस्मिन्नेव च भौमे शनिवर्गस्थे निरीक्षिते रविणा ।
पुरुषस्य भवति पुत्रोऽपविद्ध इति करुणमुनिवचनम् ॥
शनिवर्गस्थे चन्द्रे शनियुक्ते पञ्चमे भवने ।
रविशुक्राभ्यां दृष्टे पुत्रः पौनर्भवो भवति ॥
चूडा यदार्कसत्त्वात् कलादतस्यैव पञ्चमे भागे ।
रविदृष्टेऽप्यथ सहिते कानीनः सम्भवति पुत्रः ॥
वर्गे रविचन्द्रमसोः सुतगेहे चन्द्रसूर्ययोर्गेहे ।
शुक्रेण दृष्टमात्रः पुत्रः कथितः सहोत्थश्च ॥
पापैर्बलिभिर्युक्ते पापर्क्षे पञ्चमे सदा राशौ ।
जातः पुत्रः पुरुषः सौम्यग्रहदर्शनातीते ॥
शुक्रनवांशे तस्मिन् सूरेण निरीक्षिते बहून्यपत्यानि ।
दासीप्रभवानि वदेच्चन्द्रादपि केचिदाचार्याः ॥"

इति ।

वृत्तं वसन्ततिलकं वा । अनेन शुक्रस्य स्वोच्चादिराशिस्थितिरपि क्लीबग्रहसम्बन्धवशाद् दत्तादिपुत्रस्य हेतुर्भवतीति सूचितम् । तथा च सारावल्याम्—

"लग्नाधिपे भृगौ स्वोच्चे पुत्रे मन्दसमन्विते ।
कारके बलसंयुक्ते दत्तपुत्रस्तु सन्ततिः ॥"

क्रूरग्रहैः सुबलिभिः विबलैश्च सौम्यैः—सौम्य इत्यक्षरसङ्ख्यया सप्तदश । अथवा पञ्चमभावः । तत्र बहुवचनं लग्नाच्चन्द्रात् कारकाच्च पञ्चमपञ्चमेशानां ग्रहणार्थम् । एतेषु बलहीनेष्वेव दत्तादिपुत्रा वक्तव्या इति भावः । तथा च फलदीपिकायाम्—

"मान्दं सुतर्क्षं यदि वाऽथ बौधं मान्यर्कपुत्रान्वितवीक्षितं चेत् ।
दत्तात्मजः स्यादुदयास्तनाथसंबन्धहीनो विबलः सुतेशः ॥"

इति ।

द्विरसभागसमानरूपं सत्त्वं वदेद्यदि भवेत्स वियोनिसंज्ञः । स वियोनिसंज्ञश्चेदेव द्वादशविधपुत्रेषु दत्तादय एकादशविधाश्चिन्त्याः । अनपत्यतायोगाभावे पञ्चमाधिपे दुर्बल एव दत्तादयः सुताश्चिन्त्या निर्णेतव्याश्चेति । एष एवास्य श्लोकस्य मुख्यभावः । एतत्समाश्रित्य पूर्वोदाहृतानवधियोगा बुद्ध्या युक्त्या च चिन्त्या इति सारः । एवं सर्वेऽपि दत्तादिपुत्रयोगा व्याख्याताः ॥ १ ॥

वियोनिजस्य योगान्तरमाह—

**पापा बलिनः स्वभागगाः**
**पारक्ये विबलाश्च शोभनाः ।**
**लग्नं च वियोनिसंभवं**
**दृष्ट्वाऽत्रापि वियोनिमादिशेत् ॥ २ ॥**

इति । पापाः स्वभागगाः स्ववर्गस्थाः बलिनश्च । शोभनाः शुभाः पारक्ये शत्रुक्षेत्रे विबलाश्च । लग्नं च वियोनिसंभवं दृष्ट्वा । अत्रापि अस्मिन् योगेऽपि वियोनिं चन्द्रोपगद्विरसभागसमानरूपं वियोनिमादिशेत् ।

क्लीबस्य चतुष्टयस्थित्यवलोकनाभावेऽपि लग्नस्य वियोनिसंभवत्वेन वियोनित्वं वदेदिति भावः ।

अत्रापि दत्तपुत्रादीनां निर्णयो व्यञ्जितः । अत्र लग्नं चेति च-शब्देन पुत्रभावोऽपि गृह्यते । तद्भावावलोकने तस्यैव लग्नत्वात् । लग्नपञ्चमे-योरपि क्लीबगृहत्वं दत्तादिसुतानां कारणं भवति । लग्नं च वियोनिसंभव-मित्यनेन लग्नाधिपस्यापि क्लीबत्वं लग्नलग्नाधिपपञ्चमपञ्चमाधिपानां च क्लीबसंबन्धश्च दत्तादिसुतावह इत्यवगन्तव्यम् ।

तथा च सारावल्याम्—

" पुत्रस्थाने कुजे मन्दे बुधक्षेत्रे विलग्नपे ।
बुधदृष्टयुते वाऽपि तदा दत्तादयः सुताः ॥
पुत्रस्थाने बुधक्षेत्रे मन्दक्षेत्रेऽथवा भवेत् ।
मन्दमान्दियुते दृष्टे तदा दत्तादयः सुताः ॥
पुत्रस्थाने बुधक्षेत्रे बुधस्यांशे स्थितेऽपि वा ।
लग्नाधिपे शनौ वाऽपि दत्तपुत्रा भवन्ति हि ॥
पुत्रेशे मन्दसंयुक्ते कुजसौम्यनिरीक्षिते ।
लग्नाधिपे बुधांशे वा दत्तपुत्रा भवन्ति हि ॥
कामेशे लग्नभावस्थे पुत्रेशे शुभसंयुते ।
पुत्रे मन्दे बुधे वाऽपि दत्तपुत्रा भवन्ति हि ॥
पुत्रस्थानाधिपे चन्द्रे लग्ने पुत्रे शनैश्चरे ।
परिपूर्णबले जीवे दत्तपुत्रात्सुतावहाः ॥
पुत्राधिपे रवौ लग्ने पुत्रस्थे शनिसोमजौ ।
पुत्राधिपयुते लग्ने दत्तपुत्रात्सुखं भवेत् ॥
लग्नाधिपे बुधे पुत्रे कुजदृष्टिसमन्विते ।
पुत्रेशे भौमराशिस्थे दत्तपुत्रात्सुतावहः ॥ " इति ।

अर्धसमवृत्तमिदम् । विषमपादे नवाक्षराः । समे तु दशाक्षराः । अतो भाग्यभावतः कर्मभावतश्चापि क्लीबसम्बन्धवशाद् दत्तादिपुत्रा वक्तव्या इत्यपि व्यञ्जितम् । तथा च सारावल्याम्—

"पुत्रेशे भाग्यभावस्थे भाग्येशे कर्मराशिगे ।
पुत्रेशशुभदृष्टे तु दत्तपुत्रस्तु सन्ततिः ॥"

इति। विषमपादयोर्नवाक्षराणां सत्त्वात् समपादे दशाक्षराणां सत्त्वाद् दशमो ग्रहो मान्दिरपि स्मारितः । विषमपादेन ग्रहत्वं समपादेन दशमत्वं स्मारिते । अनेन मान्दिरिति लब्धम् । मान्दिरपि दत्तादिपुत्राणां विशेषेण कारक इत्यपि सूचितम् ।

पुनरपि नवाक्षरयुक्तविषमपादेन दशाक्षरयुक्तसमपादेन च पितृभाव उपलक्षितः । भाग्याधिपस्यापि क्लीबत्वक्लीबसन्धादयो वियोनिपितृत्वसूचका इत्यपि गम्यते । तथा चोक्तं फलदीपिकायाम्—

"शनिर्भाग्याधिपः स्याच्चेच्चरस्थो न शुभेक्षितः ।
सूर्ये दुस्थानगेऽप्यन्यपितरं तूपजीवति ॥"

इति ।

वैतालीयं छन्दो वा । अनेन दुर्बलैः शुभैः सबलैः पापैश्च जातो मनुष्यो वेतालस्वभावयुक्तः । अथवा क्रूरो भवतीति सूचितम् ॥ २ ॥

अथ वियोनिजन्मनां मेषादिराशिभिरङ्गकल्पनं करोति—

**क्रियः शिरो वक्त्रगले द्वितीयः**
**पादांसके पृष्ठमुरोऽथ पार्श्वे ।**
**कुक्षिस्त्वपानोऽङ्घ्रयथ मेढ्रमुष्के**
**स्फिक्पुच्छमित्याह चतुष्पदाङ्गे ॥ ३ ॥**

इति। चतुष्पदाङ्गे चतुष्पदाङ्गविभागे। क्रियः शिरः मेषराशिः शिरो भवति। द्वितीयः वृषभराशिः वक्त्रगले च मुखं गलं च भवति। मिथुनं पादांसके पादौ अंसश्च भवति। कटकः पृष्ठम्। सिंहः उरः। अथ कन्या पार्श्वे पार्श्वद्वयम्। कुक्षिस्तु तुलाधरः। वृश्चिकराशिः अपानः। धनुः अङ्घ्रिद्वयम्। अथ मकरराशिः मेढ्रमुष्कौ। कुम्भः स्फिक्। मीनः पुच्छम्। इत्याह शास्त्रमिति शेषः। वर्णरेखादिविज्ञानं प्रयोजनम्। इतिशब्दः प्रकारार्थः।

'अथ पार्श्वे' 'अथ मेढ्रमुष्कौ' इति अथशब्दस्य कन्यामकरयोः पूर्वं निर्देशः। अनेन दत्तादिपुत्रभावचिन्तायां कन्या मकरश्च विशेषतश्चिन्त्यौ भवतः। तत्र द्विवचनाद् राशिद्वयग्रहणम्। एवं मिथुनकन्ये बुधस्य गृहे मकरकुम्भे शनेर्गृहे च दत्तादिपुत्रदायिनो भवन्तीत्यर्थः।

तथा च फलदीपिकायाम्—

"मान्दं सुतर्क्षं यदि वाऽथ बौधं मान्द्यर्कपुत्रान्वितवीक्षितं चेत्।
दत्तात्मजः स्यादुदयास्तनाथसंबन्धहीनो विबलः सुतेशः॥"

इति।

वृत्तम् इन्द्रवज्रोपेन्द्रवज्रमिश्रा कीर्तिनाम्न्युपजातिः। अनेन वियोनिषु तत्तज्जात्यनुगुणेनाङ्गकल्पना कार्येति सूचितम्। एवमजस्य वृषभः वक्त्रगले सिंहस्य तु वक्त्रसटे भवति। पक्षिणः मिथुनं पादपक्षौ भवति। एवमन्यत्रापि चिन्त्यम्॥ ३॥

**लग्नांशकाद्ग्रहयोगेक्षणाद्वा**
**वर्णान्वदेद्बलयुक्तैर्वियोनौ।**
**दृष्ट्या समानां प्रवदेच्च सङ्ख्यां**
**रेखां वदेत्स्मरसंस्थैश्च पृष्ठे॥ ४॥**

वियोनौ बलयुक्तैः लग्नांशकात् लग्नादंशकाद्वा। लग्नाधिपस्य बलाधिक्ये लग्नाद् लग्नादंशकनाथस्य बलाधिक्येंऽशकादिति भावः। तयोरल्पबलत्वे ग्रहयोगेक्षणाद्वा ग्रहयोगेन ग्रहदृष्ट्या वा वर्णान् वदेत्। सङ्ख्यां वर्णसङ्ख्यां दृष्ट्या समानां बलयुक्तग्रहदृष्टितुल्यां प्रवदेच्च। यावद्भिर्ग्रहैर्दृष्टस्तावत्सङ्ख्याकवर्णान् वदेदित्यर्थः। एकग्रहदृष्टयैकवर्णः। द्विग्रहदृष्ट्या द्विवर्णः। बहुग्रहदृष्ट्या बहुवर्णः। पृष्ठे रेखां च स्मरसंस्थैः सप्तमस्थैर्बलयुक्तैर्ग्रहैर्वदेत्।

स्मरसंस्थैश्च पृष्ठे इति चकारेण उदयस्थैश्च ललाटे इत्यपि सूचितम्। वियोनिजातके प्रश्ने च लग्नादिसप्तभावा मुखादिपृष्ठान्ताङ्गानि च भवन्तीति व्यञ्जितम्। प्रतिलोमतो वामाङ्गानि च भवन्ति।

वृत्तं वैश्वदेवीति भट्टोत्पलः। तृतीयपादे इन्द्रवज्रा। इतरेषु त्रिष्टुप्छन्दोऽन्तर्गतं वृत्तान्तरम्। एवं वृत्तमुपजातिः। अनेन इन्द्रचापाद्युपग्रहैरपि वर्णविवेकः कार्य इति सूचितम्। तथा च सारावल्याम्—

“परिघपरिवेषजलदैः शङ्कुकवेधैर्ध्वजैश्च धूमैश्च।
वृषमृगदण्डैः सर्पैः शक्रधनुः पांसुभिर्वाऽपि॥
यद्वर्णेन वृतः स्याद्ग्रहस्तमिह वर्णमादिशेन्मतिमान्।
स्वाभाविकैर्ग्रहाणां वर्णैर्वर्णा भवन्ति जातानाम्॥”

इति। ग्रहवत् फलप्रदत्वादेतेषां परिघादीनामुपग्रहत्वम्। एतेषां लक्षणानि संहितायामुक्तम्। तथा च संहितायाम्—

“दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः।
धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः॥”

“संमूर्छिता रवीन्द्वोः किरणाः पवने मण्डलीभूताः।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः॥”

" सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः ।
वियति धनुस्संस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥ "

इत्यादि । विस्तरभयादेतावता विरम्यते ॥ ४ ॥

पक्षिणां लक्षणमाह—

**खगे दृगाणे बलसंयुतेन वा**
**ग्रहेण युक्ते चरभांशकोदये ।**
**बुधांशके वा विहगाः स्थलाम्बुजाः**
**शनैश्चरेन्द्वीक्षणयोगसंभवाः ॥ ५ ॥**

इति । खगे दृगाणे खगद्रेकाणे । मिथुनतुलाधरयोर्मध्यमौ सिंह-कुम्भयोराद्यौ च द्रेक्काणाः पक्षिद्रेक्काणा इति द्रेक्काणाध्यायतो द्रष्टव्यम् । पक्षिद्रेक्काणे बलसंयुतेन ग्रहेण युक्ते बलवद्ग्रहयुक्ते । शनैश्चरेन्द्वीक्षण-योगसम्भवाः शनिचन्द्रदृष्टियोगवशाज्जाताः पक्षिणो यथाक्रमं स्थलाम्बुजाः स्थलजा जलजाश्च भवन्ति । शनिदृष्टियोगवशात् स्थलजाः । चन्द्रदृष्टि-योगवशाज्जलजाः । एवमेको योगः । चरभांशकोदये बलसंयुतेन ग्रहेण युक्ते शनैश्चरेन्द्वीक्षणयोगवशात् स्थलाम्बुजाः पक्षिणो वक्तव्या इति द्वितीयो योगः । बुधांशके बलसंयुतेन ग्रहेण युक्ते शनैश्चरेन्द्वीक्षणयोगवशात् स्थलाम्बुजाः पक्षिण इति तृतीयो योगः ।

तथा च सारावल्याम्—

" विहगोदितदृगाणे ग्रहेण बलिना युतेऽथ चरभांशे ।
बौधेंऽशे वा विहगाः स्थलाम्बुजाः शनिशशीक्षणात्क्रमशः ॥ "

इति ।

शनिबुधयोः पक्षिकारकत्वं पूर्वमेव व्याख्यातम्। "क्रूरग्रहैः" इत्युक्ताद्यश्लोकप्रकारेण वियोनिजत्वे सिद्ध एवायं योगो वक्तव्यः। चरत्वं राश्यंशकयोः खगत्वं द्रेक्काणस्य बुधांशकत्वं शनियोगवीक्षण एतानि विहगोपलक्षणानि।

जीवद्रव्यविषयकः श्लोकः। वृत्तं वंशस्थम्। अनेन धातुमूलचिन्ताविधावप्येतद्योज्यमिति व्यज्यते। विहायसा गच्छन्तीति विहगाः। केतुपटाः। अतोऽनेन वस्त्रचिन्ताविधिर्व्यञ्जितः। मूलग्रहः शुक्रः, अतोऽस्मिन् योगे बुधशनिस्थाने शुक्रो योज्यः। तथा च सारावल्याम्—

> " द्रेक्काणेषु विहङ्गेषूडुपशुक्राश्रयेषु सर्वेषु।
> दृष्टेषु भृगुबुधाभ्यां वस्त्राश्रयजा भवेच्चिन्ता॥ "

इति॥ ५॥

अथ मूलद्रव्यलक्षणमाह—

> **होरेन्दुसूरिरविभिर्विबलैस्तरूणां**
> **तोयस्थले तरुभवोंऽशकृतः प्रभेदः।**
> **लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तु यावां-**
> **स्तावन्त एव तरवः स्थलतोयजाताः॥ ६॥**

इति। विबलैर्बलहीनैः। होरेन्दुसूरिरविभिः लग्नचन्द्रगुरुरविभिः, तरूणां स्थावराणां, जन्म वदेदिति शेषः। तोयस्थले जले वा स्थले वा तरुभवः तरूद्भवः। अंशकृतः प्रभेदः भवति। जलराशिना नवांशकेन जलाश्रयवृक्षाः वक्तव्याः, स्थलराशिना नवांशकेन स्थलाश्रयवृक्षा वक्तव्या इत्यर्थः। स्थलजलर्क्षपतिः स्थलराश्यधिपो जलराश्यधिपो वा ग्रहः।

लग्नात् लग्नराशेः यावान् यावति राशौ स्थितः तावन्तः स्थलवृक्षाः जलवृक्षा वा भवन्ति। अंशकनाथवशाच्चापि वक्तव्यम्। लग्नांशकयोर्बलाधिक्यमालोक्य फलनिर्देशः कार्यः।

जन्मकाले लग्नेन्दुसूर्यजीवाः बलवन्तश्चेज्जातो बुद्धिमान् सत्त्वयुक्तः कार्यक्षमश्च भवतीति सूचितम्। तथैव "अन्तःसारान्" इति वक्ष्यमाणश्लोकोऽपि न केवलं भूम्यादिप्रश्ने प्रयोजनवान्। किन्तु जातकेऽपि प्रयोजनवान्। यथा सूर्यो लग्ननवांशकाधिपश्चेज्जातोऽन्तःसारो भवति। शनिश्चेद्दुर्भगो भवति। चन्द्रश्चेत् स्नेहदयार्द्रचित्तो भवति। कुजश्चेद् हिंस्रः सज्जनशत्रुर्दुर्जनपरिवृतश्च भवति। गुरुश्चेत् सुन्दरपुरुषः सद्वृत्तः परोपकारी च भवति। बुधश्चेत् सौम्यः उदासीनश्च भवति। नोपकारी नापकारी चेति भावः। शुक्रश्चेद्दिगन्तव्याप्तकीर्तिमान् नानाविधकलाविच्च भवति।

वृत्तं वसन्ततिलकम्। अनेन स्थलजलर्क्षनवांशकग्रहस्य वसन्तादि-ऋतुवशादपि तत्तत्कालिकवृक्षा वक्तव्या इति सूचितम्॥ ६॥

वृक्षविशेषनिर्देशविधिमाह—

**अन्तःसारान् जनयति रविर्दुर्भगान् सूर्यसूनुः**
**क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः।**
**वागीशज्ञौ सफलविफलौ पुष्पवृक्षांस्तु शुक्रः**
**स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः॥ ७॥**

इति। रविः अन्तःसारान् गृहादिनिर्माणयोग्यान् दृढान् वृक्षान् जनयति। सूर्यसूनुः शनिः दुर्भगान् विकृतरूपान् जुगुप्सिताननिष्टफलदांश्च वृक्षान् जनयति। तुहिनकिरणः चन्द्रः क्षीरोपेतान् वृक्षान् जनयति। भौमः कुजः कण्टकाढ्यांश्च कण्टकिनः वृक्षान् कारस्करप्रभृतीन् जनयति। वागीशज्ञौ

गुरुबुधौ सफलविफलौ वृक्षौ जनयतः। गुरुः सफलवृक्षान् फलप्रधानान् पनसादीन् जनयति। बुधो विफलान् फलशून्यान् चन्दनादीन्वृक्षान् जनयति। शुक्रः पुष्पवृक्षान्पुष्पप्रधानान्वृक्षान् चम्पकादीन् जनयति।

शुभपापवशादेव वा वृक्षविशेषाश्चिन्त्या इति द्योतयितुं पुनरपि चन्द्रकुजयोर्वृक्षविशेषानाह। तत्र इन्दुः शुभस्योपलक्षणम्। भौमस्तु पापोपलक्षणम्। इन्दुः चन्द्रः शुभाश्च स्निग्धान्वृक्षान् स्नेहयुतान् पूर्वोक्तप्रकारेण क्षीरोपेतांश्च वृक्षान् जनयति। भौमः कुजः पापाश्च कटुकविटपान्। कटुकशब्दो विषस्याप्युपलक्षणम्। पूर्वोक्तप्रकारेण कण्टकाढ्यांश्च वृक्षान् जनयन्ति। तत्रापि कण्टकाढ्यांश्चेत्युक्तत्वाद् भौमस्य वृक्षाणामुन्मुखकण्टकवत्वं सूचितम्। दुर्भगत्वात् शनिवृक्षाणामधोमुखकण्टकवत्त्वम्। अन्तःसारवत्त्वात् सूर्यवृक्षाणां तिर्यक्कण्टकत्वं च।

तथा च कृष्णीये—

" पापैर्विषकण्टकिनः सौम्यैः सक्षीरमधुररसवन्तः।
तिर्यक्कण्टकिनोऽर्के कुज उन्मुखिनो यमे चाधः॥"

इति। भूमिपुत्रशब्दाद्राहुरपि सूचितः। तस्य विषवृक्षा वक्तव्या इत्यपि सिद्धम्। कटुकशब्दस्य विषस्योपलक्षणत्वात्।

अन्तःसारानिति गिरिद्रुमत्वम्। दुर्भगानिति तालादीनामुपलक्षणम्। क्षीरोपेतानिति कदल्यादिवृक्षाः। कण्टकाढ्यानिति विटपित्वम्। सफल इति क्रमुकादीनां व्यञ्जकः। विफल इति वेणुसूचकः। पुष्पवृक्षानिति शुभत्वं च सूचितम्। अत एवोक्तं कृष्णीये—

" शुभतरुविटपिगिरिद्रुमकदलीक्रमुकादितालवेणूनाम्।
शुक्रमहीसुतरविशशिगुरुयमसौम्यैर्वनानि स्युः॥"

इति।

पक्षान्तरोऽपि व्यज्यते । अन्तःसारानिति वृक्षाः । दुर्भगानिति तृण-मूले । क्षीरोपेतानिति वल्ल्यः । कण्टकाढ्चेत्यङ्कुराः । सफलेति रसवत्त्वम् । विफलैरिति पत्रपुष्पलतात्वम् । पुष्पवृक्षानिति पुष्पवल्ल्यश्च । राहोरपि शनि-वत् तृणमूल एव । तत्र राहोस्तृणवर्गाः शनेर्मूलवर्गा इति वा विवेकः ।

तथा च कृष्णीये—

" असुरार्क्योस्तृणमूले जीवस्येक्ष्वादिमधुररसवन्तः ।
भृगुकुजरविशशिविदुषां वल्ल्यङ्कुरवृक्षगुल्मलताः ॥ " इति ।

अन्तःसारानिति अस्थित्वक्परिणद्धं त्वग्वा सूर्यस्य । क्षीरोपेतान् स्निग्धानिति काण्डजतण्डुलं चन्द्रस्य । कण्टकाढ्यानिति कण्टकपुष्पे कुजस्य । सफलमिति मधुरं पक्वं फलं गुरोः । विफलमिति बुधस्य शाखापत्रे । पुष्पवृक्षानिति जलराशिवशान्निर्यासफलं शुष्कराशिवशादपक्कफलं च शुक्रस्य । दुर्भगानिति शनिराह्वोर्मूलम् इत्यादयोऽप्यवगन्तव्याः । तत्र क्षीणचन्द्रेण काण्ड-जानि तृणधान्यानि पूर्णचन्द्रेण शालितण्डुलानि जलराशिवशादार्द्रत्वं, शुष्कराशिवशाच्छुष्कत्वमित्यादिविषयश्च युक्त्या कल्प्याः । केन्द्रस्थ-बलवद्ग्रहैस्तदभावे केन्द्रराशिवशात्फलं नष्टमुष्ट्यादिषु सूक्ष्मतो वक्तव्यम् । तथा च कृष्णीये—

" निर्यासापक्कफले शुक्रस्य गुरोर्विपक्कफलमाहुः ।
काण्डजतण्डुलमिन्दोः कन्दं सौरेर्भवेन्मूलम् ॥
भौमे कण्टकपुष्पे शाखापत्रे बुधस्य मुष्ट्यां तु ।
अस्थित्वक्परिणद्धं सवितुस्त्वक् चापि निर्देश्या ॥ "

इति ।

वृत्तं मन्दाक्रान्ता । जलधिषडगयतियुतम् । जलधिरिति जल-व्यञ्जकम् । षडिति ऋतुव्यञ्जकम् । अग इति सप्तग्रहव्यञ्जकम् । अत एतानि

जलस्थलराशिभेदेन तत्तद्ग्रहोक्तऋतुजभेदेन ग्रहाणां बलवशाच्च चिन्त्यानीति गम्यते। मन्दाक्रान्तावृत्तेन शुभपापवशाद् आक्रान्तराशिवशादपि चिन्त्यमिति व्यज्यते। पापैर्बहिःसारान् शुभैरन्तःसारान् वदेत्, पापसम्बन्धवशात् जनपानलेपनाद्ययोग्यफलमूलादिसारान्वदेदित्यपि गम्यते।

तथा च कृष्णीये—

"क्रूरक्षेत्रे क्रूरैर्दृष्टे जनपानलेपनायोग्याः।
सौम्यक्षेत्रे सौम्यैर्दृष्टे भोग्याश्च लेप्याश्च॥
क्रूरा बहिरस्थिभरान् सौम्याः कुर्वन्ति चान्तरास्थियुतान्।
कुरुतो निरस्थिफलमुडुपतिसूर्यौ राशयोऽप्येवम्॥"

इति॥ ७॥

अथ राशिग्रहवशात्फलविशेषनिर्देशप्रकारमाह—

**शुभोऽशुभर्क्षे रुचिरं कुभूतले**
**करोति वृक्षं विपरीतमन्यथा।**
**परांशके यावति विच्युतः स्वकाद्**
**भवन्ति तुल्यास्तरवस्तथाविधाः॥ ८॥**

इति। अशुभर्क्षे अशुभराशौ स्थितः शुभः शुभग्रहः। कुभूतले कुत्सितभूतलस्थितं रुचिरं मनोहरं वृक्षं करोति। अन्यथा शुभर्क्षस्थोऽशुभः विपरीतं करोति। रुचिरभूतलस्थितं कुत्सितवृक्षं करोति। अशुभर्क्षस्थोऽशुभः कुत्सितभूतलस्थकुत्सितवृक्षं शुभराशिस्थशुभः रुचिरभूतलस्थरुचिरवृक्षं च कुरुत इत्यपि स्पष्टम्। अनेन द्रव्यचिन्ता ग्रहात् स्थलचिन्ता राशेरिति च व्यञ्जितम्। पूर्वोक्तान्तःसारादितरुष्वेकप्रकारतरुसङ्ख्यामाह। ग्रहः स्वकाद् यावति परांशके विच्युतो भवति तथाविधास्तुल्यास्तरवस्तावन्तः सन्ति। "अंशकेनैव विशेषा वक्तव्या" इति द्योतयितुं

"परांशके" इत्युक्तम् । "अंशकृतः प्रभेद" इत्यनेनैवांशकग्रहणे सिद्धे पुनरंशकग्रहणमुक्तकार्यार्थमेव ।

अस्मिन्नध्याये "दृष्ट्या समानां प्रवदेच्च सङ्ख्याम्" इत्यादिभिस्तत्र तत्र ग्रहैः सङ्ख्या विहिता । तत्र तत्र "स्वतुङ्गवक्रोपगतैस्त्रिसंगुणम्" "नीचेऽतोऽर्धं ह्रसति" इत्याद्यायुर्दायोक्तहरणगुणनादयो यथासंभवं कार्याः । उक्तं च सारावल्याम्—

"द्वित्रिगुणत्वं तेषामायुर्दायप्रकारोक्तम्" इति ।

वृत्तं वंशस्थम् । उपेन्द्रवंशा वा । अनेन धातुमूलद्रव्यचिन्तासु सर्वास्वप्येवं निरूपणीयमिति व्यञ्जितम् । वृक्ष इत्युपलक्षणमात्रं द्रव्यस्य । एवं मूलद्रव्यं मनुष्यव्यतिरिक्तजीवद्रव्यं च निरूपितम् । धातुद्रव्यचिन्ता तु "ताम्रं स्यान्मणिहेम" इत्यादिना सूचिता । तत्र ग्रहाणां तत्रतत्रोक्तस्वभावकारकत्वादिवशाद्विशेषाश्चिन्त्याः । यथाऽऽभरणचिन्तायां दक्षिणोत्तरायणकारकसूर्येण,

"पितृहू दक्षिणः कर्णः देवहू चोत्तरः स्मृतः"

इति श्रीमद्भागवतवचनात् कर्णभूषणं, तदुपलक्षितशिरोभूषणं, चन्द्रेणमौक्तिकशृङ्खलादयो वृत्ताकृतयश्च, गुरुणा हृदयोरःकण्ठाभरणानीत्यादीनि चिन्त्यानि ।

तथा च कृष्णीये—

"सूर्ये कर्णाभरणं जीवे हृदयोरसोश्च कण्ठे च ।
मौक्तिकशृङ्खलपाशकवृत्तानीन्दोर्ललाटे च ॥"

इति । भूमिलक्षणचिन्तायां वृक्षसंख्याचिन्तायां च प्रयोजनवदेतत् । जातकेऽपि लग्नवांशकाधिपः शुभोऽशुभराशिस्थितश्चेज्जातस्य माता व्यभिचारिणी, अशुभो लग्नवांशकाधिपः शुभराशिस्थश्चेज्जातः उभयकुलशुद्धिरहितो भवतीति च सूचितम् । एवं सर्वेऽपि विषय ऊह्या इत्येते विस्तरतो नोक्ताः ।

श्लोकानामष्टसंख्यया किं प्रयोजनम्? कुतोऽस्यैव श्लोकसंख्या-प्रयोजनं चोद्यते, न तु पूर्वयोरध्याययोः? प्रथमाध्याये श्लोकानां विंशति-संख्यया प्रयोजनं न वर्तते। किमिति चेदुच्यते। प्रथमाध्याये विंशति-संख्यया जैमिनीयकर्ममीमांसाद्वादशाध्यायानां काशकृत्स्नकृतचतुरध्यायानां च भगवद्बादरायणकृतशारीरकमीमांसाचतुरध्यायैः सहैकशास्त्रं सूचयन् विंशत्यध्यायप्रतिपादितं भगवन्तं परमपुरुषं सर्ववेदान्तसारं सर्वशास्त्रदैवतं श्रियः पतिं स्मारयन् होरामन्त्रदेवं सूर्यमण्डलान्तस्थं श्रीमन्नारायणं ध्याय-त्याचार्यः श्रीवराहमिहिरः। अत एवोक्तं श्रीमद्वेङ्कटनाथदेशिकैरस्मदाचार्यैः सेश्वरमीमांसायाम्—

"स जयति जैमिनिरादौ जयति पुनः काशकृत्स्नोऽपि।
नारायणावतारो जयति पुनर्बादरायणः श्रीमान्॥"

इति। द्वितीयाध्याये एकोनविंशतिश्लोकै राहुकेतू तत्सूचितकुण्डलिनीशक्ति-स्तद्युक्तो जीवात्मा च सूचितः। अनेनैव सिद्धं द्वितीयाध्याये सर्वत्रापि राहुकेत्वोरपि कारकत्वं चिन्त्यमिति। तथैव च तत्र तत्र व्याख्यातम्। अत्र त्वष्टभिः श्लोकैः

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥"

इत्यष्टधा भिन्ना मूलप्रकृतिस्तदधिदेवता महालक्ष्मीश्च स्मारिता। एवं चिद् अचित् तयोरीश्वरः श्रियः पतिश्च ध्यातः प्रथमसंस्कारभूतनिषेक-प्रतिपादकाध्यायात्पूर्वम्। अनेनैव व्यज्यते सर्वाणि वैदिककर्माणि चिद-चिदीश्वरस्य भगवतः पूजापुरःसरमेव कर्तव्यानीति॥ ८॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
वियोनिजन्माख्यकस्तृतीयोऽध्यायः।

---

## निषेककालाध्यायः ॥ ४ ॥

कयाधुसूनुपालकं हिरण्यनागमर्दिनम् ।
श्रिया युतं गुहाशयं भजे नृसिंहमक्षरम् ॥

अथ मानुषजन्म निरूप्यते । तत्रादौ मानुषजन्महेतुभूतं स्त्रीणामार्तवं गर्भाधानक्षमं कालं चाह—

**कुजेन्दुहेतुप्रतिमासमार्तवं**
**गते तु पीडर्क्षमनुष्णदीधितौ ।**
**अतोऽन्यथास्थे शुभपुंग्रहेक्षिते**
**नरेण संयोगमुपैति कामिनी ॥ १ ॥**

इति । कामिनी स्त्री । प्रतिमासं मासि मासि । अनुष्णदीधितौ चन्द्रे । पीडर्क्षे अनुपचयस्थानम् । जन्मकालचन्द्रादनुपचयस्थानमत्र विवक्षितम् । गते तु गतवति । कुजेन्दुहेतु कुजश्च इन्दुश्च कुजेन्दू तौ हेतू यस्य तत् कुजेन्दुहेतु कुजेन्दुहेतुकमार्तवमुपैति । जन्मकाले वा प्रश्नकाले वा कुजेन्द्वोर्योगेक्षणादिमिथःसम्बन्धमनुसृत्याऽऽर्तवशुद्धिः प्रजायते । कदा प्रथमरजोदर्शनं भवतीति चेदुच्यते । प्रतिमासमार्तवं प्रतिमा इत्यक्षर-सङ्ख्यया द्वौ षट् पञ्च च भवति । सङ्कलनेन त्रयोदश भवति । त्रयोदश्यां समायां वर्षे जायमानमार्तवं प्रतिमासमार्तवमिति विग्रहेण प्रथमरजोदर्शनं त्रयोदशे वर्षे भवतीति लब्धम् । कामिनीति पदं श्लोकान्ते दृश्यते । अक्षर-

सङ्ख्यया कामिनीत्येकपञ्चाशत्। अन्ते स्थितत्वादेकपञ्चाशद्वत्सरपर्यन्तं कामिनीत्वं पुरुषकाम्यत्वं वर्तत इति सूचितम्। अत एकपञ्चाशद्वत्सरपर्यन्तं प्रतिमासं रजः स्रवतीति व्यञ्जितम्। तथा चोक्तम्—

"मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम्।
वत्सराद्द्वादशादूर्ध्वमेकपञ्चाशतः क्षयम्॥"

इति। कुत एकत्र सङ्कलनेन वर्षसङ्ख्या, अन्यत्रान्यथेति चेदुच्यते। सूत्रतुल्यशास्त्रस्य बह्वर्थसंपादनार्थमिति। कथमेतत्प्रकारविशेष अवगन्तव्य इति चेद्व्याख्यानतो विशेषप्रतिपत्तिरिति।

कुजेन्दुहेतु। कुजः पित्तरूपोऽग्निः। चन्द्रः रक्तरूपं जलम्। एतयोः संयोग एव रजसो हेतुः। तथा चोक्तं सारावल्याम्—

"इन्दुर्जलं कुजोऽग्निर्जलमसृगथवाऽग्निरेव पित्तं स्यात्।
एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु॥"

इति।

कुजेन्दुहेत्विति पदत्रयनिर्देशः आर्तवं प्रति। हेतुरिति पृथिवीव्यञ्जकं पदम्। कुजः वह्निः। इन्दुः जलम्। "अग्नेरापः। अद्भ्यः पृथिवी।" इति श्रुत्या हेतुशब्दः पृथिवीद्योतकः। अथवा कुजश्च इन्दुश्च कुजेन्दुहेतुश्च कुजेन्दुहेतवः कुः भूमिः कुजः भूमिजः ओषधिस्तद्रूप इन्दुः कुजेन्दुः।

"सोम ओषधीनामधिपतिस्समावत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याᳪ स्वाहा।"

इति हि श्रुतिः। कुजेन्दुः हेतुः ओषधेर्हेतुः भूमिरेव। अनेनाऽऽर्तवस्याग्निजलपृथिवीरूपाणि त्रीणि दिनानि व्यञ्जितानि। एतेषामग्नेरेव रूपभेदत्वात् संयोगवर्ज्यत्वं व्यञ्जितम्।

कुजेन्दुहेतुप्रतिमासमार्तवम् । कुजेन्दुहेत्विति त्रीणि वर्ज्यदिनानि प्रतिमा इति पूर्वमुक्तप्रकारेण त्रयोदश । त्रयोदश दिनानीत्यत्र योज्यम् । प्रतिमा इति शिशुरपि सूचितः । अतस्त्रयोदश दिनानि गर्भाधानयोग्यानीति गम्यते । आहत्य वर्ज्यावर्ज्यदिनानि षोडश । कुजेन्दुहेतुप्रतिमासममार्तवं स्यात् षोडशसमसङ्ख्याकदिनवदार्तवमित्यर्थः । तथा चोक्तम्—

"रजोदर्शनमारभ्य स्त्रीणामृतुः षोडशरात्रम्" इति ।

कुजेन्दुहेतु । हेतुशब्देन पुत्रकारको गुरुर्वा ग्राह्यः । वृत्तं वंशस्थम् । सुतरूपवंशकारककारको गुरुः । जगतीच्छन्दः । एकैकस्य पादस्य द्वादशाक्षराणि । अतो द्वादशवर्षैर्भगणं भुञ्जानो गुरुरेव हेतुशब्दवाच्यो भवितुमर्हति । आर्तवं प्रतिमासं मासे मासे कुजेन्दुहेतु भवति । अक्षरसङ्ख्यया पञ्चसप्ततिः । षष्टिनाडीयुक्तस्य नक्षत्रस्य चरणः पञ्चदशनाड्यात्मकः, तस्य द्वादशांशकः पञ्चसप्ततिविनाड्यात्मकश्चन्द्रस्य नवांशद्वादशांशभोगकालः । अत आर्तवं नवांशकद्वादशांशे कुजेन्दुहेतुर्भवति । कुजशशिगुरूणां नवांशद्वादशांशसंबन्धे सत्यार्तवं भवतीत्यर्थः । अत्राऽऽर्तवशब्देन गर्भाधानयोग्यार्तवं गृह्यते । अनुष्णदीधितावित्युष्णप्रयुक्तव्याधिग्रस्तातुरादिनिवृत्त्यर्थम् । त्रयोदशवर्षादारभ्यैकपञ्चाशत्पर्यन्तमिति सूचनाद् बालवृद्धौ निवर्तितौ ।

"विबीजिनामिमे करा हिमांशोर्विदृशामिवाफलाः"

इति वक्ष्यमाणप्रकारेण वन्ध्याश्च निवारिताः । एवं "स्त्रीणामनुष्णदीधितौ पीडर्क्षे गते प्रतिमासं कुजेन्दुहेतुकमार्तवं प्रवर्तते । तच्च गर्भक्षमं भवति । अन्यत्र बालवृद्धवन्ध्यातुराभ्यः" इति फलितार्थः ।

उक्तं च बादरायणेन—

"स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः
संदृश्यते यदि धरातनयेन तासाम् ।

गर्भग्रहार्तवमुशन्ति तदा च वन्ध्या
वृद्धातुराल्पवयसामपि तन्न हीष्टम् ॥"

इति ।

अथ गर्भाधानकालमाह । चन्द्रे अत उक्तापचयस्थानेभ्यः अन्यथास्थे अन्यराशिषु स्थिते । पुरुषस्य गोचरवशाद् उपचयराशिं गत इत्यर्थः । शुभपुंग्रहेक्षिते शुभपुंग्रहो गुरुरेव । गुरुणा वीक्षिते च कामिनी मैथुनेच्छायुता स्त्री ।

"क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥"

इत्युक्तलक्षणवत्यत्र कामिनीशब्देन लक्षिता । सा नरेण

"नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।"

इति नारापरनामकतत्त्वजनकत्वद्योतकतया नरशब्देनोत्पादकयोग्यः पुरुषो गृह्यते । वक्ष्यमाणविबीजिनश्च निवर्तिताः । नरेणोत्पादकयोग्येन पुरुषेण । संयोगं सम्यग्योगं गर्भाधानक्षमयथाक्रमसंयोगम् । वात्स्यायनादिसूत्रोक्तवेश्यादिसंभोगप्रकारनिवृत्त्यर्थं संयोगग्रहणम् । उपैति लोडर्थे लट् उपैत्वित्यर्थः ।

नरेणेत्यक्षरसङ्ख्यया विंशतिः । कामिनी तु अन्यथास्थे वर्तते । अन्यथास्थे इत्यक्षरसङ्ख्यया शून्यं, एकं, सप्त, सप्त, सङ्कलनेन पञ्चदश भवति । पूर्णपञ्चदशवर्षा स्त्री पूर्णविंशेन पुंसा सङ्गता भवितुमर्हतीत्यर्थः । अथवा कुजेन्दुहेतुप्रतिमासमार्तवमित्यनेन पूर्वोक्तप्रकारेण कुजेन्दुहेतुप्रतिमा इति षोडश भवति । समाः वर्षाः षोडशवर्षजातमार्तवं गर्भाधानयोग्यमिति व्यञ्जितम् । अनेन पूर्णषोडशवर्षा स्त्री पूर्णविंशेन पुंसा सङ्गता भवेदिति लब्धम् । तथा चोक्तम्—

"पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।
वीर्यवन्तं सुतं सूते तयोर्न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति वा न वा ॥"

इति ।

कुजेन्दु । कुज इति कुजतुल्यभूछायारूपकेतुर्वा गृह्यते । इन्दुश्चन्द्रः । हेतुः जातकप्रश्नाधानकालादिषु प्रधानहेतुभूता प्रतिमा लग्नम् । सम इत्येतेषां समानराशिगतत्वम् । केतुचन्द्रलग्नसमस्थितिवदित्यर्थः । आर्तवमृतुकालः आधानकालः । कुजेन्दुहेतुप्रतिमासममार्तवं यस्य स इति विग्रहेण संयोगस्य विशेषणं वा भवेत् । केतुचन्द्रलग्नानां समस्थितिवत्कालं संयोगं कामिनी उपैतीत्यन्वयः । अनेन लग्नस्थचन्द्रकेत्वोराधानकाले वंशवृद्धिकरत्वम् । अथवा गर्भकारणत्वं द्योत्यते । वंशस्थवृत्तमपि तदनुगुणमेव । प्रश्नेऽप्येवं चिन्त्यम् । शुभ इति शुकारेण शुक्रस्य ग्रहणम् । भपुंग्रह इति केतुः । भ इति भगणः, तत्रस्थपुमान् भपुमान् सूर्यः, तं गृह्णाति भपुंग्रहः केतुः । ईक्षिते न तु वीक्षिते । ईक्षितशब्दोऽत्रैकराशिस्थयोरन्योन्यावलोकनपरः । अत युते इत्यर्थः । कुत्रेति चेत् न्यथास्थे न्य इति अक्षरसङ्ख्ययैकत्वाल्लग्नम् । था इति तस्मात्सप्तमः । स्थ इति तस्मादपि सप्तमो लग्नम् । तस्मिन् लग्ने इत्यर्थः । शुक्रकेत्वोराधानप्रश्नलग्नगतयोः कामिनी नरेण संयोगं गर्भकारकं संयोगमुपैति । गर्भोत्पत्तिर्भवतीत्यर्थः । कुजेन्दुहेतुप्रतिमासमार्तवमिति सप्तम्यर्थेऽमन्ताव्ययं स्यात् । कुजेन्दुहेतुप्रतिमासमार्तवे केतुचन्द्रलग्नयुतार्तवकाले केतुचन्द्रयुतलग्ने शुभपुंग्रहेक्षिते शुभौ बुधशुक्रौ शुभपुंग्रहो गुरुश्च, ऐतेष्वेकतमेनेक्षिते । पूर्वोक्तकेतुचन्द्रयुक्तलग्ने गुरुणा भृगुणा बुधेन वा ईक्षिते । पूर्वोक्तप्रकारेणात्रापि ईक्षितशब्दो युतिपरः । युक्ते इत्यर्थः । कामिनी नरेण संयोगमुपैति गर्भवती भवति ।

कुजेन्दुहेतुप्रतिमाससमार्तवे अशुभपुंग्रहेक्षिते अशुभेन अपुंग्रहेणेक्षिते इत्यर्थः। अपुंग्रहत्वं नपुंसकत्वम्। अतो बुधशनी विवक्षितौ। बुधस्याशुभत्वं बलहीनत्वप्रयुक्तम्। शनेस्तु स्वतःसिद्धम्। बलहीनबुधेन शनिना वा युक्ते इति पूर्ववज्ज्ञेयम्। कामिनी अनरेण गर्भजातस्य नाशस्य रोगपीडायाश्च हेतुभूतेन पुरुषेण संयोगमुपैति। अतश्चन्द्रकेत्वोर्लग्नस्थितिर्गर्भोत्पत्तिकरी। तत्र शुभयोगो बलोपेतबुधयोगो वा गर्भपुष्टिकरः। बलहीनबुधस्य योगो शनियोगो वा गर्भस्य शोषकर इति भावः।

तथा च कृष्णीये—

"यदि भवति केतुरिन्दूशनसोरेकेन संयुतो लग्ने।
जनयति गर्भोत्पत्तिं सौरयुतश्चेद्विनाशयति॥
केतुः शशाङ्कयुक्तो भृग्वङ्गिरसोरथैकतरसंयुक्तः।
कुरुते गर्भोत्पत्तिं जातमरोगं बुधो बलोपेतः॥
पुत्रस्य वातरोगं कुरुते रजनीशसूनुनोपेतः॥"

इति।

नरेण संयोगमुपैति कामिनी। नरेण प्रोषितभर्त्रा सह संयोगमुपैति कामिनी। अनेनोक्तयोगेषु भर्त्रागमनप्रश्ने शिशुजन्मस्थाने भर्त्रागमनं निवेश्य भर्त्रागमनं ब्रूयादिति सिद्धयति।

तथा च कृष्णीये—

"गृहमपि जितमङ्गनया प्रष्टुर्गमनं च निर्देश्यम्॥" इति।

अतोऽन्यथास्थे कामिन्या आदौ भर्त्रा सह योगः। अतः गर्भोत्पादकयोगानन्तरम्। अन्यथास्थे अन्य इत्यक्षरसङ्ख्यया दश, तस्मात् प्रकारार्थे थाल्। दशमे इत्यर्थः। दशमस्थे ऋक्षे। गर्भाधाननक्षत्राद् दशम नक्षत्रे कामिनी नरेण संयोगं सम्यग्योगं पुत्रजन्मना दृढीकृतस्नेहवद्योगमुपैति। आधाननक्षत्राद्दशमं जन्मनक्षत्रमिति भावः।

तथा च सारावल्याम्—

"आधानाज्जन्मर्क्षं दशमं वाञ्छन्ति केचिदाचार्याः।" इति। नरेण संयोगमुपैति कामिनी। केन नरेणेति चेदुपचयस्थचन्द्रं यः पश्यति तदनुगुणेन नरेणेति सिद्धमेव। तथा च सारावल्याम्—

"राजपुरुषेण रविणा रविजेनाप्नोति भृत्येन।
चन्द्रे कुजेन दृष्टे पुष्पवती सह विटेन संयोगम्॥
एकैकेन फलं स्याद्दृष्टे नान्यैः कुजादिभिः पापैः।
सर्वैः स्वगृहं त्यक्त्वा गच्छति वेश्यापदं युवतिः॥"

इति॥ १॥

अथ गर्भाधानस्य प्रधानाङ्गभूतं रहस्यमनन्यसाक्षिकं मैथुनस्वरूपं दिङ्मात्रं दर्शयति—

**यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः।**
**असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः॥ २॥**

इति। यथा यत्प्रकारेण अस्तराशिः सप्तमो राशिः मिथुनं समेति मिथुनीभवति। कीटनराम्बुचरपशुस्वरूपा हि राशयः। ते तत्तत्स्वभाववशात् मिथुनीभवन्तीति सिद्धम्। तथैव तत्प्रकारेणैव मिथुनप्रयोगः मैथुनं वाच्यः वक्तव्यं भवति। एतज्जन्मारूढवशाद् निषेकलग्नवशाद्वा चिन्त्यम्।

पुरुषजातके अस्तराशिः सप्तमराशिः यथा यत्प्रकारेण भवति तथैव तत्प्रकारेणैव मिथुनं समेति भार्यामधिगच्छति। तथैव स्त्रीजातकास्तराशिवशाद्भर्तृस्वभावोऽपि वाच्यः। तथा चोक्तम्—

"शुक्रेन्दुजीवशशिजैः सकलैस्त्रिभिश्च
द्वाभ्यां कलत्रभवने च तथैककेन।

एषां गृहेऽपि च गणेऽथ विलोकिते वा
सन्ति स्त्रियो भवनवर्गखगस्वभावाः ॥ ”

इति । स्त्रीणां भर्तृज्ञानं तु “ भर्तारं सुभगत्वमस्तभवनात् ” इति वक्ष्यति ।

यथा यत्प्रकारेण अस्तराशिः सप्तमराशिः मिथुनं समेति दाराधिपस्थितराशिवशाद् द्वैविध्यं प्राप्नोति । तथैव मिथुनप्रयोगः मिथुनस्य दाराणां प्रकर्षो योगः जन्मभसम्बन्धो वाच्यः । दाराधिपस्थितक्षेत्रं दारजन्मभं भवतीति सारः । तथा चोक्तम्—

“ दाराधिपस्थितक्षेत्रं दारजन्मर्क्षभं विदुः ॥ ”

इति ।

प्रकर्षेण योगः प्रयोगः । प्राधान्येन दाराधिपस्थितक्षेत्रं दारजन्मर्क्षभं स्यात् । तदभावे तस्योच्चराशिः, नीचराशिः, तदंशो वा भवेदिति प्रयोगशब्देन सूचितम् । तथा च—

“ तस्योच्चं तस्य नीचं वा तदंशं वाऽथ निर्दिशेत् ॥ ”

इति । प्रकर्षेण योगः प्रयोगः । अस्तराशिवशात्प्राधान्येन कथितव्यम् । अतो लग्नाधिपाश्रितराशिवशादपि निर्देश्य इति व्यञ्जितम् । उक्तं च—

“ लग्नाधिपो वा मदनाधिपो वा यातो यदीये भवनेंऽशके वा ।
तत्क्षेत्रजातं प्रवदेत्कलत्रं पुंसोऽङ्गनायाश्च पतिं तथैव ॥ ”

इति ।

यथा अस्तराशिः मिथुनं समेति ग्रहयुतिदृष्टिवशाद् द्वैविध्यं प्राप्नोति । तथैव दारजन्मर्क्षभं वाच्यम् । तथा चोक्तम्—

“ कलत्रसंस्थस्य तदीक्षकस्य लग्नात्तदीशस्य च चन्द्रतो वा ।
तत्क्षेत्रजातं प्रवदेत्कलत्रं पुंसोऽङ्गनायाश्च पतिं तथैव ॥ ”

इति ।

"उग्रग्रहैः सितचतुरश्रसंस्थितैः" इति कलत्रकारकशुक्रादपि चिन्त्यमिति सूचयति । अतः शुक्रादप्युक्तप्रकारेण वक्तव्यमिति गम्यते । "चन्द्रोपगद्विरसभागसमानरूपं सत्त्वं वदेत्" इति न्यायेन चन्द्रद्वादशांशवशाद्वा वक्तव्यम् ।

तथा च--

"शुक्रजामित्रभे वाऽपि तस्यारूढे बलान्विते ।
शशाङ्काद्वादशांशर्क्षत्रिकोणे वा कलत्रभम् ॥"

इति । सर्वमेतद्बलवशाच्चिन्त्यम् ।

वृत्तमुपेन्द्रवज्रा । "उपेन्द्रवज्रा जतजास्ततो गौ" इति लक्षणात् । उपेन्द्रशब्देन इन्द्रोऽपि स्मारितः । अत इन्द्रादिनाथकदिशोऽपि कलत्रस्य भर्तुर्वा वक्तव्या इति सूचितम् । उपेन्द्रवज्रा उपेन्द्रशक्तिः महालक्ष्मीः तद्देवताकः शुक्रः । अतः शुक्राष्टवर्गतोऽपि चिन्त्यमिति द्योत्यते । तथा चोक्तम्—

"शुक्राधिष्ठितराश्यंशदिशो वा दारसम्भवः ।
शुक्रजामित्रतो वाऽपि दारेशस्य दिशोऽथवा ॥
दाराधिनाथसंयुक्तराश्यंशसहितोऽथवा ।
दाराधिष्ठितराश्याप्तदिशो वा दारसम्भवः ॥
कलत्रसंस्थस्य तदीक्षकस्य लग्नात्तदीशस्य च चन्द्रतो वा ।
दिग्जातमत्र प्रवदेत्कलत्रं पुंसोऽङ्गनायाश्च पतिं तथैव ॥
शुक्राष्टवर्गं निक्षिप्य शोधनायाः पुरैव तु ।
प्राग्दक्षिणादिराशीनां फलान्येकत्र विन्यसेत् ।
पृथक् पृथक् चतुर्दिक्षु तैश्च दारदिशं वदेत् ॥"

इति । किं बहुना ।

"यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः" ।

इत्यनेन सर्वाण्यत्र विस्तरभयादनुक्तान्यप्यूह्यानि ।

यथा अस्तराशिः मिथुनं समेति । अत्र मिथुनं युग्मस्योपलक्षणम् । यत्प्रकारेण स्वभावेन द्रष्टृग्रहस्थितिवशाद्वा । अस्तराशिः अस्त इति सुरतोपलक्षणम् । अस्तराशिः सुरतप्रश्नविषयकारूढराशिः । सः वर्तते तथैव मिथुनप्रयोगो वाच्यः द्विवारसुरतप्रयोगो वाच्यः । अनेन ओजराशिवशादेकवारमित्यपि सिद्धम् । शुक्लकारकशुक्रवर्गवशात् शोणितकारककुजवर्गवशाच्च वात्स्यायनादिकृतकामशास्त्रोक्तप्रकारेण बहुविधबहुवारकसुरतमपि युक्त्या तर्क्यम् ।

तथा च कृष्णीये—

"विषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरेषु ।
बहवो विभ्रमबहुलं भृगुकुजवर्गात्मजे सुरतम् ॥"

इति । यथा यत्प्रकारेण चतुष्पदादियद्रूपेण अस्तराशिः निषेकलग्नाद् जन्मलग्नात् प्रश्नलग्नाद्वा सप्तमराशिर्मिथुनं समेति तथैव चतुष्पदादिवन्मैथुनं भवति ।

तथा च सारावल्याम्—

"द्विपदादयो विलग्नात्सुरतं कुर्वन्ति सप्तमे यद्वत् ।
तद्वत्स्त्रीपुरुषाणां गर्भाधाने समादेयम् ॥"

इति ।

यथाऽस्तराशिर्मिथुनं समेति । अत्र जातके अस्तराशिः । मैथुनप्रश्ने कामविषयकत्वात् "अस गतिदीप्त्यादानेषु" इति धातोर्निष्पन्नत्वाद्वा अस्तराशिना आरूढलग्नमेव गृह्यते । एवमारूढलग्नवशाद् जातके सप्तमराशिवशाद्वा स्त्रीणामुच्चादिभेदत्वमपि वक्तव्यम् । यथा स्वक्षेत्रस्थद्रष्ट्रा स्वभार्या-

सङ्गमं, अन्यक्षेत्रस्थेन परभार्यासङ्गमं, उच्चस्थेन श्रेष्ठराजस्त्र्यादिसङ्गमं, बन्धुस्थेन बन्धुस्त्रीसङ्गमं, शत्रुराशिस्थेन शत्रुस्त्रीसङ्गमं, नीचस्थेन नीचस्त्रीसङ्गमं च ब्रूयात्। स्वेतरस्थितस्य ग्रहस्य तु तत्स्वभाववशात्कथयेत् । यथा शोणितकारककुजेन वेश्यास्त्रीसङ्गमं, सस्यादिकारकशुक्रेण कर्षकभार्यासङ्गमं, मन्त्रिणा मन्त्रिभार्यासङ्गमं, ब्राह्मणगुरोः भार्यां भुक्तवता चन्द्रेण ब्राह्मणस्त्रीसङ्गमं, उत्तमक्षत्रियकारकसूर्येण राजस्त्रीसङ्गमं च परदारग्रहणविधौ युक्त्या तर्कयित्वा वक्तव्यम् । स्वदिक्स्थग्रहेणापि स्वभार्याभोग एव वक्तव्यः ।

व्यक्तमुक्तं कृष्णीये—

"स्वदिशं ग्रहे प्रयाते स्वस्थे चात्मीययान्ययान्येषु ।
उच्चारिमित्रनीचाश्रयणे तेषां स्त्रियो वाच्याः ॥
तरुणी कर्षकभार्या मन्त्रिस्त्री ब्राह्मणी नृपोपेता ।
कुजभृगुगुरुशशिरविभिः शेषैः पाषण्डिनां युवतिः ॥"

इति । नपुंसकग्रहाणां बुधशनिराहूणां पाषण्डिनां स्त्रिय इत्यपि सिद्धमेव ।

अस्तराशिरिति छत्रराशिर्वा । यथा छत्रराशिः मिथुनं समेति आरूढलग्नेन राश्यधिपैक्येन मैत्र्या शत्रुभावेन वा मिथुनत्वं गच्छति तथा मिथुनप्रयोगो वाच्यः । यथा मेषवृश्चिकयोरन्यतरो लग्नराशिः इतरश्छत्रराशिः । छत्रे कुजः यदि भवति स्वभवने स्वस्त्रीसङ्गमो वक्तव्यः । आरूढच्छत्रेशयोर्मित्रत्वे छत्रराशौ तदीशश्चेन्मित्रभार्यासङ्गमो वाच्यः । सारूढच्छत्रेशयोः शत्रुत्वे शत्रुभार्यासङ्गमश्च वक्तव्यः । एवमेव सर्वराशीनाम् ।

उक्तं च कृष्णीये—

"मेषाष्टमयोर्मेषोपगते स्वस्त्रीभिरेव संगमनम् ।
मैत्र्या बुधभृगुभवने शत्रोर्भार्या तथाऽन्येषु ॥"

इति ।

यथास्तराशिर्मिथुनं समेतीत्यनेन वन्ध्यादिसञ्ज्ञश्चाप्यूह्यः । अल्प-पुत्रकभानुना वन्ध्यां रजोरूपेण कुजेन रजस्वलां पुत्रमारणकारकत्वाद् वन्ध्यां च वदेत् । एवमितरेषां ग्रहाणामपि युक्त्या तर्कणीयम् ।

तथा चोक्तम्—

"वन्ध्यासञ्ज्ञो मदे भानुश्चन्द्रे राशिसमाः स्त्रियः ।
सौम्ये वेश्या च हीना च वणिक्स्त्री वा प्रकीर्तिता ॥
जीवे ब्राह्मणभार्या स्याद्गर्भिणीसञ्ज्ञमो भृगौ ।
हीना च पुष्पिणी च स्याच्छनिराहू मदे युतौ ॥
राहौ च गर्भिणीसञ्ज्ञः कृष्णया कुब्जया शनौ ॥"

इति ।

यथास्तराशिर्मिथुनं समेति । अनेन मिथुनीभावस्याकर्षकरूपकुच-भगादीनामपि लक्षणं सप्तमराशिराशीशद्रष्ट्रादिभिश्चिन्त्यम् । शास्त्रान्तरेषु विस्तरतो निरूपितमेतत् केवलं युक्तिमात्रेणैव चिन्त्यत्वादाचार्यशास्त्रे दिङ्-मात्रं दर्शितम् । विप्रत्वादिजातिरप्येवं ग्रहैर्निरूप्यः । अटवीक्षेत्रादि सङ्गम-स्थानमपि "स्वचराश्च सर्वे" इत्युक्तलक्षणप्रकारेण राशिभ्यश्चिन्त्यम् ।

तथैव वाच्यो मिथुनप्रयोगः । अत्र मिथुनप्रयोग इति वात्स्यायन-शास्त्रोक्तभगचुम्बनादीनामपि ग्राहकः । सप्तमेशकुजशुक्रशनिभिरेते चिन्त्या इत्यत्र न कोऽपि संशयः । कामकारकशुक्रस्य रजोरूपकुजेन सम्बन्धो भगचुम्बनसूचकः । एवं सप्तमेशेनापि, सप्तमेनापि वक्तव्यम् । नपुंसक-पापग्रहशनेः शिश्नकारकत्वात् कामस्थानकारकेशानां सम्बन्धादौपरिष्टकं चिन्त्यमित्यवगन्तव्यम् । कुटुम्बाधीशादपि सर्वं चिन्त्यम् ।

"भौमांशकगते शुक्रे कुजक्षेत्रं गतेऽथवा ।
भौमयुक्ते च दृष्टे च भगचुम्बनतत्परः ॥

मन्दांशकगते शुक्रे शनिक्षेत्रगतेऽपि वा ।
शनिदृष्टे च युक्ते च शिश्नचुम्बनतत्परः ॥
मदेशे भृगुसन्दृष्टे भृगुणा सहितेऽपि वा ।
भृगुक्षेत्रगते वाऽपि भगचुम्बनतत्परः ॥
क्षेत्राधिपवशादुह्यचुम्बनं प्रवदेद्बुधः ।
एवं कुटुम्बनाथेन वदेत्तादृशचुम्बनम् ॥ ”

इत्याद्यत्र प्रमाणम् ।

यथास्तराशिस्तथैव मिथुनं समेति मित्रतया शत्रुतया वेति शेषः । लग्नसप्तमेशयोर्मित्रत्वे भार्याबन्धवो मित्राणि भवन्ति । अन्यथा अन्यथा-भवन्ति । तथा चोक्तम्—

“ लग्नेश्वरस्यापि कलत्रनाथे शत्रौ तदीयस्त्विह शत्रुभूतः ।
मित्राणि ते तस्य कुलोद्भवाश्च मित्रे विलग्नाधिपतेस्तदानीम् ॥
दारेश्वरस्यापि विलग्ननाथे शत्रौ तदीयास्त्वरयस्ततोऽन्ये ।
बलेन साम्ये समभावमाहुः स्त्रियं सुशीलां पतिभक्तिचित्ताम् ॥ ”

इति ।

असद्ग्रहालोकितसंयुते तु वा । आधानजन्मलग्नवशाद् अस्तराशौ सुरतप्रश्ने आरूढे वाऽशुभग्रहैर्युक्ते दृष्टे वा सरोषः कलहबहुलो भवति । इष्टैः शुभैर्युक्ते दृष्टे वा सविलासहासो मिथुनप्रयोगोऽन्योन्यानुरागयुतो भवति ।

तथा च कृष्णीये—

“ क्रूरेषु पतिं त्यजति प्रमदा नन्दयति पतिमपापेषु । ”

इति ।

‘ असद्ग्रहालोकितसंयुते तु वा ’ इति तुशब्देन आधानेन भविष्य-शिशोर्मातृत्वान्मातृकारकश्चन्द्रो विवक्षितः । तस्मिन् पापाक्रान्ते स्त्री बलाद्भुक्ता भविष्यतीत्यूह्यम् । तथा सूर्येण विपरीतम् ।

तथा च कृष्णीये—

" चन्द्रे पापसमेते पुरुषो भुङ्क्ते बलाद्द्वौ नारी ॥ "

इति। एवं शुक्रेणापि वक्तव्यमिति शास्त्रज्ञाः। आचार्योऽपि वक्ष्यति " दिवार्कशुक्रौ पितृमातृसंज्ञितौ " इति। अनेन विधिना स्त्रियः पुरुषेऽनुरागः पुरुषस्य स्त्रियामनुरागश्च वक्तुं शक्यः। अस्मिन् विधौ सूर्यस्य न पापत्वमित्यप्यवगन्तव्यम्।

सरोषः कोपभयकलहपृथक्शयनवस्त्रच्छेदादयोऽत्र ग्राह्याः। लग्नविक्रमस्थानसप्तमस्थानकर्मस्थानसुखस्थानैश्च शनिकुजाभ्यां च शुक्रचन्द्रयोः सम्बन्धात् युक्त्या विचिन्त्य कोपभयादिलक्षणान्वितो मिथुनप्रयोगो वक्तव्यः। तथा च कृष्णीये—

" लग्नगते रवितनये जामित्रे भूमिनन्दने सभयम्।
इतरेतरालयस्थौ यदि सौरारौ तु जागरितम् ॥
अस्मिंश्चन्द्रेऽन्यतरेण युते नार्या सहात्र कलहः स्यात्।
यमकुजराशिषु भृगुजे यदि परशय्या स्त्रियो वाच्याः ॥
जामित्रगते चन्द्रे कुजे तु दशमेऽथवा तृतीयेऽस्मिन्।
शुक्रे भूमौ शयनं कलहनिमित्तं सुसंवृत्तम् ॥
होरातृतीयसप्तमचतुर्थभवनेषु चन्द्रशुक्रौ चेत्।
विद्याद्वस्त्रच्छेदं कलहनिमित्तं हि नारीणाम् ॥ "

इति।

सविलासहासः कामशास्त्रोक्तालिङ्गनादिविविधोपचारपुष्टो भवति मिथुनप्रयोग इति भावः।

तथा च सारावल्याम्—

"अस्ते शुभयुतदृष्टे सरोषकलहं भवेद्ग्राम्यम् ।
सौम्यैः सौम्यं सुरतं वात्स्यायनसंप्रयोगिकाख्यानम् ॥"

इति ।

यथास्तराशिर्मिथुनं समेति । यत्प्रकारेण अस्तराशिर्भवति तत्प्रकारकसङ्ख्यायुतकलत्रवान् भवति । एवमेव तृतीयतो भ्रातृसङ्ख्यां पञ्चमतः पुत्रसङ्ख्यां चतुर्थतो दासदासीमित्रबान्धवसंख्यां च वदेत् ।

"पुत्रान् पञ्चमभात्तृतीयभवनाद्भ्रातॄन् कलत्रात्स्त्रियो
दासीश्च क्षितिराशितः स्वभवनाद्दासांश्च मित्राणि च ।
यातांश्चैव नवांशका शुभदृशा हत्वा तथारोपये-
द्व्योम व्योमचरैर्विभज्य तु तथा भूतांश्च पुत्रादयः ॥
"पुत्रं सोदरभं कलत्रमुदयाद्यानं च राशिं विना
तल्लिप्ता शुभखेटदृग्बलहताः षष्ट्या विभक्ताः क्रमात् ।
व्योमाकाशकराप्तपुत्रसहजस्त्रीदासदासीसुहृ-
त्सङ्ख्याः पापनभोगदृग्बलभवाः पुत्रादिनाशप्रदाः ॥"

इति जातकपारिजातकोक्तद्भावसमृद्धिनाशसङ्ख्यानिर्णयः कात्स्न्येंनात्र दर्शितः ॥ २ ॥

अथापत्यकामानुद्दिश्य ग्रहस्थितिवशाद्गर्भाधानयोग्यकालमाह—

**रवीन्दुशुक्रावनिजैः स्वभागगै-**
**र्गुरौ त्रिकोणोदयधर्मगेऽपि वा ।**
**भवत्यपत्यं हि विबीजिनामिमे**
**करा हिमांशोर्विदृशामिवाफलाः ॥ ३ ॥**

इति । गुरौ त्रिकोणोदयधर्मगेऽपि वा गुरौ लग्ने पञ्चमे नवमे वा स्थिते स्वभागगैः स्वभागमाश्रितैः रवीन्दुशुक्रावनिजैः सूर्यचन्द्रशुक्रकुजैरपत्यं भवति हि भवत्येव न संशयः। संशयो मा भूदिति वंशस्थं वृत्तं प्रयुज्यते आचार्येण । वंशस्थाः पुत्रपौत्रादयः भवन्त्येवेति सूचयति ।

अत्र रविः पुरुषरूपः, इन्दुः स्त्रीरूपः । गर्भाधानस्यैतयोरेव प्राधान्यतया आदावुपदिष्टौ । शुक्रः शुक्लं अवनिजः शोणितम् । एतयोः शुद्ध्यैव गर्भो धार्यते । गुरौ त्रिकोणोदयधर्मगेऽपि वेति गुरोस्त्रिकोणादि-स्थितिः स्वर्गे नरके वा पुण्यपापफलमनुभूय जननोन्मुखजीवात्मनः सान्निध्यं सूचयति । त्रयाणां सान्निध्यमेव गर्भोत्पत्तेर्विशेषतश्चिन्त्यम् । तथा च सारावल्याम्—

"तत्र शुभाशुभमिश्रैः कर्मभिरधिवासिता विषयवृत्तिः ।
गर्भावासे निपतति संयोगे शुक्लशोणितयोः ॥"

इति । शुक्लशोणितयोः शुद्धिस्तु—

"शुक्लं शुद्धं गुरु स्निग्धं मधुरं बहुलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ।
लाक्षारसशशास्राभं धौतं यच्च विरज्यते ॥"

इति लक्षणेन लक्षिता । स्त्रीपुरुषयोः शुद्धिस्तु पूर्वमेवोक्ता । एवमरोगदृढ-गात्रतायुक्तयौवनस्थत्वं विवक्षितम् ।

स्वभागगैः । अत्र स्वभागशब्दः स्त्रीपुंभागविभागपरः । स्त्रीरूप-चन्द्रस्य रजोरूपकुजस्य च स्त्रीभागस्थितिः पुरुषरूपस्य रवेः शुक्लात्मक-शुक्रस्य च पुंभागस्थितिश्च विवक्षिते ।

उक्तग्रहस्थितिरपि विबीजिनामफला भवतीत्याह । इमे विबीजिनां विहतबीजानां हिमांशोश्चन्द्रस्य कराः रश्मयः । विदृशां नेत्रहीनानामिव ।

अफलाः भवन्तीति शेषः। विबीजिनामित्यनेन बीजबलं क्षेत्रबलं च विवक्षिते। अतो बीजस्फुटं क्षेत्रस्फुटं च कृत्वा तदनन्तरमेवोक्तयोगेन फलं वाच्यमिति भावः।

रवीन्दुशुक्रावनिजैः रवीन्दू इति लग्नस्योपलक्षणम्। शुक्रावनिजैरिति शुक्लशोणितरजःस्थानभूतपञ्चमभावस्योपलक्षणम्। स्वभागगैरिति लग्नेशपञ्चमेशयोः स्फुटैक्यं व्यञ्जितम्। गुरौ त्रिकोणोदयधर्मगेऽपि वेति लग्नेशपञ्चमेशस्फुटैक्यगृहांशत्रिकोणे जीवे पुत्रप्राप्तिर्वक्तव्येति सारः।

तथा च जातकपारिजाते—

"लग्नाधीश्वरपुत्रपस्फुटचये राश्यंशकोणे गुरौ
पुत्राप्तिः . . . . . . . . . ॥"

इति।

क्षेत्रस्फुटं बीजस्फुटं चाप्यत्र सूचितम्। यथा रवीन्दुशुक्रावनिजैरित्यत्र रविः पिता शुक्रः शुक्ररूपः गुरुः जीवः। वृत्तं च वंशस्थम्। अतो वंशवृद्धिचिन्तायां रविशुक्रगुरूणां स्फुटैक्यभवने ओजांशकेऽप्योजभे च बीजबलं भवति। एवं चन्द्रो माता कुजः शोणितं गुरुः जीवः। अत एतेषां स्फुटैक्यभवने युग्मांशके युग्मके क्षेत्रबलं भवति।

तथा च फलदीपिकायाम्—

"जीवेन्दुक्षितिजस्फुटैक्यभवने युग्मे च युग्मांशके
स्त्रीणां क्षेत्रबलं वदन्ति सुतदं मिश्रे प्रयासात्फलम्।
भास्वच्छुक्रगुरुस्फुटैक्यभवनेऽप्योजांशकेऽप्योजभे
पुंसां बीजबलं सुतप्रदमिदं मिश्रे तु मिश्रं वदेत्॥"

इति। क्षेत्रबीजस्फुटैक्येनाप्तराशेः सप्तमे पञ्चमे वा क्लीबग्रहयुक्ते सन्तत्यभावो वाच्यः। पापग्रहयोगदृष्ट्या चैवं वाच्यम्। क्षेत्रबीजस्फुटयोर्बलवत्त्वे

सुखेन वंशवृद्धिर्भवति । बीजे संपूर्णबलयुक्ते क्षेत्रे बलहीने पुनर्विवाहेन सन्ततिलाभो भवति । बीजबलेऽसंपूर्णे तु सन्ततिलाभप्रतिबन्धकभूतपापानां प्रायश्चित्तेन सन्ततिर्भवति ।

अथवा स्वभागगैः स्वभं स्वाधिष्ठितनक्षत्रं तत् आगच्छन्तीति स्वभागाः । एवं स्थितैः गैः ग इत्यक्षरसङ्ख्यासूचितत्रिभिः रविशुक्रगुरुभिः बीजबलनिर्णये चन्द्रकुजगुरुभिः क्षेत्रबलनिर्णये इत्यर्थः । जगतीच्छन्दः । अनेन स्वभागगैरिति नक्षत्रस्य द्वादशांशश्च विवक्षितः । नक्षत्रद्वादशांशभूतमेषादिराशिगतानां त्रयाणां स्फुटानामैक्यस्य राश्यंशकयोरोजयुग्मवशात्सन्ततिर्वाच्येति भावः । अत्रैवं गणितप्रक्रिया । ग्रहाधिष्ठितनक्षत्रघटिकाः सावयवा विन्यस्य पञ्चभिर्हृत्वा राशयो लभ्यन्ते । शेषाद् भागकलादयो लभ्यन्ते । रविशुक्रगुरूणामेवमानीतस्फुटानामैक्यं बीजस्फुटं भवति । चन्द्रकुजगुरूणां स्फुटैक्यं क्षेत्रस्फुटं भवति । क्षेत्रबीजे च संपूर्णबले कदा पुत्रलब्धिरिति चेद् गुरौ त्रिकोणोदयधर्मगेऽपि वा रवीन्दुशुक्रावनिजगुरूणामुक्तप्रकारानीतस्फुटैक्यराशौ लग्नत्रिकोणगते प्रथमवयसि सन्ततिप्राप्तिः । अपीति निर्देशात् केन्द्रेऽपि प्रथमवयसि सन्ततिप्राप्तिः । वा इत्यनेन पणपरगते मध्यवयसि आपोक्लिमगे अन्त्यवयसि च पुत्रलब्धिरिति सूचितम् । "रवीन्दुशुक्रावनिजैः स्वभागगैः" इत्यनेन रवीन्दुशुक्रावनिजानां स्फुटानि स्वभागगैरित्यक्षरसङ्ख्यासूचितैः चतुर्भिश्चतुर्भिः त्रिभिस्त्रिभिश्च यथाक्रमं गुणितव्यानि । गुरौ त्रि इति निर्देशाद् गुरुस्फुटं त्रिभिर्गुणितव्यमिति च सूचितम् । एवं कृतगुणान्येव क्षेत्रबीजस्फुटनिर्णययोग्यानि भवन्तीति केचित् ।

जगतीच्छन्दः । अनेन द्वादशभागात्मकतिथिः स्मारितः । अनेन सन्तानतिथिस्फुटमपि व्यञ्जितम् । उक्तं च फलदीपिकायाम्—

"पञ्चघ्नाच्छशिनः स्फुटादिषुहतं भानुस्फुटं शोधये-
न्नीत्वा तत्र तिथिं सिते शुभतिथौ पुत्रोऽस्त्ययत्नादपि ।

कृष्णे नास्ति सुतस्तिथेर्बलवशाद्ब्रूयाद्द्वयोः पक्षयो-
देंशे छिद्रतिथौ च विष्टिकरणे न स्यात् स्थिराख्ये सुतः ॥"

इति । वृत्तं वंशस्थम् । अनेन दोषशान्त्या पुत्रो भवतीति सूचितम् । दोषपरिहारश्चोक्तः फलदीपिकायाम्—

"विष्टिस्थिरं वा करणं यदि स्यात् कृष्णं यजेत्पौरुषसूक्तमन्त्रैः ।
षष्ठ्यां गुहाराधनमत्र कार्यं यजेच्चतुर्थ्यां किल नागराजम् ॥
रामायणस्य श्रवणं नवम्यां यद्यष्टमी चेच्छ्रवणं व्रतं च ।
चतुर्दशी चेद्यदि रुद्रपूजां स्याद्द्वादशी चेत्स्मृतमन्नदानम् ॥
तृप्तिं पितॄणामिह पञ्चदश्यां कृष्णे दशम्याः परतोऽतियत्नात् ।
पक्षत्रिभागेष्वपि नागराजं स्कन्दं च सेवेत हरिं क्रमेण ॥"

इति ।

अनेन श्लोकेन अष्टवर्गशोधनक्रमश्चोक्तः । यथा रवीन्दुशुक्रावनिजैः रविचन्द्रशुक्रकुजैः । रवीन्दुशुक्रावनिजैः रविजइन्दुजइन्दुशुक्रावनिजैः । रविजः शनिः इन्दुजः बुधः । इन्दुशुक्रावनिजः इन्दुश्चन्द्रः तस्य शुक्रस्य अवनिः क्षेत्रं तारा सा जाया यस्य सः इत्यर्थे जानिशब्दस्य स्थाने एकदेशविकृतजशब्दः ताराजानिः बृहस्पतिरित्यर्थः । अवनिज इति पूर्वक्षितिजभूतलग्नमपि गृह्णाति। एवं रवीन्दुशुक्रावनिजैरिति लग्नयुक्तग्रहसप्तात्मकोऽष्टकवर्गस्तन्त्रेण निर्दिष्टः । जकारस्यावृत्त्या रवीन्दुशुक्रावनिजजैः तेषां बिन्दुभिः स्वभागगैः स्वराशिगतैः । गुरौ अधिके । अधिकबिन्दुयुक्तस्याधिकांशस्य शोधनया शिष्टस्य प्राबल्यमित्यर्थः । पुनस्त्रिकोणोदयधर्मगेऽपि वा गुरौ प्राबल्यमिति त्रिकोणशोधनापि निर्दिष्टा । विधिद्वयेऽपि प्राप्ते "विप्रतिषेधे परं कार्यम्" इति परत्वात् त्रिकोणशोधना प्रथमं प्राप्ता । पश्चादेकाधिपत्यशोधना । पुनरेकाधिपत्यशोधनायामेकक्षेत्रं अपत्यं अपगतत्यं, त्यद्शब्दोऽत्र

ग्रहपरः, अपगतग्रहं यदि भवेत्। तदैव भवति पूर्वोक्तशोधनाविधिः। अपगतग्रहस्यापकर्षोक्त्या शोधनमपि तस्यैव राशेरिति व्यज्यते। एवमष्टकवर्गान्तर्गतैकाधिपत्यत्रिकोणशोधने व्याख्याते।

तथा चोक्तं जातकपारिजाते—

"त्रिकोणभावेषु यदल्पबिन्दव-
स्तत्तुल्यसङ्ख्या यदि सर्वमुत्सृजेत्।
एकर्क्षशून्ये खलु शोधयेन्न तान्
साम्ये त्रयाणां सकलं समुत्सृजेत्॥
कण्ठीरवं कटकभं च विना कुजादि-
कावासराशियुगलोपगबिन्दुसङ्ख्याः।
तत्तुल्यशून्यविषमाग्रहसग्रहाद्या-
स्त्वेकाधिपत्यपरिशोधितशेषिताः स्युः॥
राशिद्वयं सद्युचरं न शोधये-
देकं द्वयोः शून्यभमप्यशोधयेत्।
फलाधिके खेटयुते परित्यजेत्
फलं समग्रं परतो ग्रहाद्गृहात्॥
पूर्वं त्रिकोणं परिशोध्य पश्चा-
देकाधिपत्यस्य ततः प्रकल्प्याः॥"

इति।

विबीजिनाम्। बीजं बिन्दुः। विबीजिनः बिन्दुरहिताः तेषामेते विधयः अफलाः। एकराशौ शून्यं यदि चेत् तस्य शोधना न कार्येति व्यञ्जितम्। तथैवोक्तमुद्धृतजातकपारिजातश्लोकेषु।

विबीजिनां बिन्दुरहितानां ग्रहाणामिमे ज्योतिश्शास्त्रविधयः। हिमांशोः करा इत्युपमानसामर्थ्यात् शुभसूचका विधय इति सिद्धम्।

विफला भवन्ति। बिन्दुशून्याः अथवा विबीजिनः वि इत्यक्षरसङ्ख्या-सूचितचतुर्बिन्दुयुताः अथवा तस्मादपि न्यूनबिन्दुयुक्तराशियुताः शुभफल-दाने अशक्ता भवन्ति।

तथा च जातकपारिजाते—

"सबिन्दुकस्तत्र फलप्रदः स्यादबिन्दुकः शून्यफलप्रदाता॥"

इति।

करा इति गुणकारकत्वं रश्मिवत्वं च व्यञ्जितम्। अतः अष्टकवर्ग-बिन्दवः शोधनानन्तरं ग्रहाणां गुणकारैर्गुणितव्याः। ते च गुणकारास्तेषां रश्मय एवेत्यपि सिद्धम्। तथापि करा हि मा अंशोः इति पदच्छेदेन अंशोः अंशुमतः सूर्यस्य चन्द्रस्य वा मा करा हि। मा इत्यक्षरसङ्ख्या-सूचितपञ्चकिरणा हि इत्यर्थः। अनेन सूर्यस्य चन्द्रस्य च गुणकारः पञ्च। विद्दशां विषमदृशां क्रूरदृशां कराः किरणाः हि हि इत्यक्षरसङ्ख्यासूचिता अष्टौ भवन्ति। इति कुजस्य गुणकारः अष्टौ। गुरौ गुरुविषये त्रिकोणोदय-धर्मगेऽपि वा इत्यक्षरदशकेन दश गुणकारः भवति। इतरेषां बुधशुक्रशनीनां पूर्वोक्तरश्मिसङ्ख्यया गुणकाराः पञ्च सप्त पञ्च च भवन्ति। एतत्स्पष्टतर-मुक्तं नष्टजातकाध्याये—"गोसिंहौ जितुमाष्टमौ" इति।

वृत्तं वंशस्थम्। जगतीच्छन्दः। अतो द्वादशराशीनामपि गुणकारै-र्बिन्दवो गुणितव्या इति सिद्धम्। एवं राशिगुणकारेण ग्रहहीनराशिबिन्दूनां कार्यमित्यप्यूह्यम्। ग्रहसहितानां राशीनां बिन्दवस्तु राशिगुणकारेण प्रथमं संस्कृत्य पुनस्तत्रस्थग्रहाणां गुणकारान् मिलित्वा गुणः कार्यः।

उक्तं च नष्टजातकाध्याये—

"गोसिंहौ जितुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमा-
त्संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसङ्ख्यागुणाः।

जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यव-
द्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणा ॥ ''

इति। अस्य प्रयोजनमायुर्दायनिर्णये ''सप्ताहतं त्रिघनभाजित '' इत्यादिना।

उक्तं च जातकपारिजाते—

'' तद्राशिखेटगुणकैक्यफलानि भूयः
सप्ताहतान्युडुगणापहृतानि यानि।
वर्षाणि तानि पुनरर्कमुखघ्नतोऽस्मि-
न्मासादिकानि च नयेत्तदिहायुरायुः ॥ ''
तद्द्वादशाब्दाद्यधिकेऽपि शोध्यं भमण्डलं तत्पुनरत्र सर्वम्।
हत्वा वराङ्गेन हरेन्मतज्ञैर्लब्धं फलं सौरसमं प्रदिष्टम् ॥
उच्चंगतस्य द्विगुणं तदीयं नीचंगतस्यास्तगतस्य चार्धम्।
अतोऽन्तराले त्वनुपातमाहुरेवं ग्रहाणां हरणानि कुर्यात् ॥
मूलत्रिकोणनिजतुङ्गगृहोपगानां
तुङ्गादिवर्गशुभयोगनिरीक्षितानाम्।
उक्तप्रकारगणितागतमायुरेव
पापारिवर्गसहितस्य विवादमाहुः ॥
रविमुख्यनभोगदत्तसङ्ख्याः परमायुश्शरदस्तु मानवानाम्।
सविलग्नसमश्च केचिदाहुर्गुरुमूलात्समुपैति तुल्यमाहुः ॥
केन्द्रादन्यगते चन्द्रे सुखभे चाष्टवर्गजम्।
आयुरेव नभःस्थाने शुभपापयुतेऽथवा ॥
रव्यादिखेटस्थितराशिजानां स्वकीयवर्गोपमबिन्दुसङ्ख्याः।
वेदाष्टवर्गप्रभवायुरब्दा भवन्ति सर्वा हरणक्रियाश्च ॥ ''

इति ॥ ३ ॥

स्त्रीपुरुषयोराधानलग्नवशात्प्रश्नलग्नवशाद्वा ज्ञेयान्यरिष्टान्याह—

**दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ**
**गदप्रदौ पुङ्गलयोषितोस्तदा ।**
**व्ययस्वगौ मृत्युकरौ युतौ तथा**
**तदेकदृष्ट्या मरणाय कल्पितौ ॥ ४ ॥**

इति । दिवाकरेन्द्वोः सूर्यात् चन्द्राच्च स्मरगौ सप्तमगौ कुजार्कजौ कुजशनैश्चरौ । पुङ्गलयोषितोः पुरुषस्य स्त्रियाश्च गदप्रदौ रोगप्रदौ भवतः । पुरुषरूपस्य सूर्यस्य सप्तमस्थौ शनिकुजौ पुरुषस्य गदप्रदौ भवतः । एवं स्त्रीरूपस्य चन्द्रस्य सप्तमस्थौ शनिकुजौ स्त्रियाः रोगप्रदौ भवतः । तदा निषेककाले इत्यर्थः । तथा व्ययस्वगौ द्वादशद्वितीयस्थौ मृत्युकरौ मरणं दत्तः । सूर्याद्व्ययस्वगौ पुरुषस्य मृत्युकरौ चन्द्राद्व्ययस्वगौ स्त्रियाः मृत्युकरौ भवतः । युतौ तदेकदृष्ट्या तयोरेकतरेण युक्तौ इतरेण दृष्टौ च । मरणाय कल्पितौ मृत्युं कुरुतः । एवं सूर्यश्चेत्पुरुषो म्रियते चन्द्रश्चेत्स्त्री म्रियते । आधानलग्नस्य स्मरगौ कुजार्कजौ गर्भस्य रोगप्रदौ, व्ययस्वगौ मृत्युकरौ तथायुतौ तदेकदृष्ट्या मरणाय कल्पिता-वित्यप्यूह्यम् ।

राहुकेतू अपि यथाक्रमं शनिकुजसमानौ । अतस्तावप्यत्र ग्राह्यौ । इदमर्थमेव कुजार्कजावित्युक्तवानाचार्यः ।

वृत्तं वंशस्थम् । जगतीच्छन्दः । अनेन द्वादशमासाः स्मारिताः । अतो योगकर्तृग्रहस्य मासे रोगो भवतीति सूचितम् ।

अर्थान्तरस्यापि ध्वनिः । तदा मैथुनकाले । दिवाकरेन्द्वोः सूर्यचन्द्र-रूपयोः । पुङ्गलयोषितोः दम्पत्योः । स्मरगौ मनोगतौ । कुजार्कजौ अशुभचिन्ता चेत् । गदप्रदौ आहितः रोगी भवति ।

तथा च सारावल्याम्—

" मिथुनस्य मनोभावो यादृङ्मदलालसस्य सम्भवति ।
श्लेष्मादिभिः स्वदोषैस्तत्तुल्यगुणो निषिक्तः स्यात् ॥"

इति ॥ ४ ॥

अथ पितृमातृपितृव्यमातृष्वसृकारकान् तेषां स्थानवशात् स्त्रीपुरुषयोः शुभाशुभफलं चाह—

**दिवार्कशुक्रौ पितृमातृसंज्ञितौ**
**शनैश्चरेन्दू निशि तद्विपर्ययात् ।**
**पितृव्यमातृष्वसृसंज्ञितौ च ता-**
**वथौजयुग्मर्क्षगतौ तयोः शुभौ ॥ ५ ॥**

इति । दिवा अह्नि आहितस्य जातस्य वा अर्कशुक्रौ सूर्यशुक्रौ पितृमातृसंज्ञितौ स्तः । सूर्यः पिता शुक्रः माता । निशि रात्रौ आहितस्य जातस्य वा शनैश्चरेन्दू शनिचन्द्रौ पितृमातृसंज्ञितौ स्तः । शनिः पिता चन्द्रः माता । तद्विपर्ययात् तद्व्यत्ययेन निशि अर्कशुक्रौ दिवा शनैश्चरेन्दू पितृव्यमातृष्वसृसंज्ञितौ च भवतः । निशि सूर्यः पितृव्यः पितृसहोदरः शुक्रः मातृष्वसा, दिवा शनैश्चरः पितृव्यश्चन्द्रः मातृष्वसा च भवन्ति । अथ तौ ओजयुग्मर्क्षगतौ ओजे सूर्यशनी युग्मे शुक्रचन्द्रौ च तयोः मातापित्रोः पितृव्यमातृष्वस्रोश्च शुभौ शुभकरौ भवतः । अन्यथा अशुभकरावित्यर्थात्सिद्धम् ।

वृत्तं वंशस्थम् । अनेन दिवा जातस्य पितुश्च मिथो विरोधः स्याद्यदि सूर्यः युग्मर्क्षगतः । तथैव तस्यौजर्क्षशुक्रेण मात्रा विरोधः । युग्मर्क्षशनिना पितृव्येन विरोधो जायते । एवमेवौजर्क्षचन्द्रो मातृष्वस्रा विरोधं जनयतीत्यादि सूचितम् ॥ ५ ॥

गर्भाधानग्रहस्थितिवशादाहितस्य मातुररिष्टयोगमाह—

**अभिलषद्भिरुदयर्क्षमसद्भि-**
**र्मरणमेति शुभदृष्टिमयाते ।**
**उदयराशिसहिते च यमे स्त्री**
**विगलितोडुपभूसुतदृष्टे ॥ ६ ॥**

इति । उदयर्क्षं लग्नमभिलषद्भिः प्राप्तुमिच्छुभिः पापैः । द्वादशराश्यन्त्यांशस्थितैः पापैरित्यर्थः । स्त्री आहितस्य माता मरणमेति म्रियते । शुभदृष्टिं शुभेन दृष्टिं अयाते यदि । लग्नस्य शुभदृष्टचभावे द्वादशभावान्त्यांशस्थाः पापाः स्त्रीमरणं ददतीति भावः । योगान्तरमाह । उदयराशिसहिते लग्ने यमे च शनौ, विगलितोडुपः अतिक्षीणचन्द्रः भूसुतः कुजः क्षीणचन्द्रकुजाभ्यां दृष्टे सति स्त्री मरणमेति । लग्ने शनौ सप्तमे क्षीणचन्द्रकुजयोश्च आहितस्य माता म्रियते । प्रसवपूर्वमेव म्रियते । आधानलग्नवशादुक्तफलानां प्रसवपूर्वमेव फलं वक्तव्यम् । कुत इति चेदुच्यते निषेकाध्यायारम्भसामर्थ्यादिति । "निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या" इति जन्मकालसादृश्यमाधानकालस्य दर्शितम् । अतो जातकफलनिरूपणेनैवाऽऽधानलग्नवशात्फलमपि सिद्धे सूतिकालात्पूर्वमेवोक्तफलानि वाच्यानीति सूचयितुमाधानाध्याय आरब्ध आचार्येण ।

वृत्तं द्रुतगतिः । "द्रुतगतिर्नभजयैरुदिता सा" इति स्यात् । अनेनोक्तयोगावतिवेगेन फलप्रदाविति सूचितम् । द्रुततरगत्या भिषग्भिः शस्त्रक्रियया शिशुः रक्षणीय इत्यपि व्यञ्जितम् । शुभदृष्टिवशाद्द्रुततरचिकित्सया माताऽपि जीवति ॥ ६ ॥

अथ निषेकादिलग्नवशाद्गर्भगर्भिण्योर्वक्तव्यमरिष्टं दर्शयति—

**अशुभद्वयमध्यसंस्थितौ**
**लग्नेन्दू न च सौम्यवीक्षितौ ।**
**युगपत्पृथगेव वा वदे-**
**न्नारी गर्भयुता विपद्यते ॥ ७ ॥**

इति । लग्नेन्दू लग्नचन्द्रौ अशुभद्वयमध्यसंस्थितौ द्वयोः पापयोर्मध्यस्थितौ न च सौम्यवीक्षितौ शुभैर्न वीक्षितौ चेत् युगपत् पृथगेव वा गर्भगर्भिण्यौ अथवा तयोरेकतरो वा विपद्यते म्रियते । अत्र लग्नस्य पापद्वयमध्यसंस्थितिर्गर्भविनाशाय भवति । तस्य शुभदृष्टिर्गर्भं विनाशाद्रक्षति गर्भः क्लिश्यते न तु म्रियते । एवं चन्द्रस्य पापद्वयमध्यसंस्थितिर्गर्भिणीविनाशाय भवति । चन्द्रे शुभदृष्टे सा क्लिश्यते न तु विपद्यते । एवं लग्नचन्द्रयोरेकस्मिन् राशौ स्थितयोरुभावपि म्रियेते । शुभदृष्टिवशात् क्लिश्येते न तु विपद्येते । अर्धसमवृत्तम् । अनेन पृथक्स्थितयोर्लग्नेन्द्वोः फलं पृथग्वक्तव्यम् ।

वृत्तं सुमुखीशुद्धविराड्संमिश्रा उपजातिः । "सुमुखी ससजा गुरुः स्मृता" "म्यौ ज्गौ शुद्धविराडिदं मतम्" इति तयोर्लक्षणम् । अनेन सुमुख्याः मातुः शुद्धविराजः शिशोश्च जातकशास्त्राशुभत्वसजातीयाशुभत्वेनापि फलं वाच्यमिति सूचितम् । एवं दूतलक्षणं व्यञ्जितम् । दूतस्याशुचित्वं शिशुनाशकरम् । सांवत्सरिकस्य तु मातुरनिष्टप्रदमिति भावः । वैतालीयं छन्दो वा । अनेनाप्यशुभफलं सूचितम् । अतो योगद्वयकल्पनया पृथङ्मरणत्वेऽप्युभावपि विपद्येते एव । लग्नस्य पापद्वयमध्यसंस्थितिर्गर्भविनाशं करोति । तथाप्यादौ गर्भनाशः परतो मातुर्नाशः । चन्द्रस्य पापमध्यसंस्थितिः स्त्रीमरणं करोति ।

तथाप्यादौ मातृनाशः । परतो गर्भनाशश्च भवत्येव । अत एवाऽऽचार्येण 'युगपत्पृथगेव वा' इत्युक्तम् । सर्वथा गर्भगर्भिण्यावस्मिन् योगे विपद्येते । अथवा लग्नेन्दू युगपदशुभद्वयमध्यसंस्थितौ सौम्यवीक्षितौ च न चेद् नारी गर्भयुता विपद्यते । तच्च युगपत्पृथगेव वा वदेद् युगपत् पृथग्वा सम्भवति । अस्मिन् योगे—

"वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥"

इति वाहटोक्तप्रकारेण मृताया मातुः कुक्षितः रक्षितोऽपि शिशुः शीघ्रमेव म्रियते इत्यर्थः । अत्र पूर्णेऽपि योगे पृथङ्मरणं वा वाच्यम् । एवं बह्वर्थप्रदस्य युगपच्छब्दस्य प्रयोजनमजानता भट्टोत्पलेन "युगपद्ग्रहणं पादपूरणार्थम्" इत्युक्तम् ॥ ७ ॥

योगान्तरमाह- -

**क्रूरे शशिनश्चतुर्थगे लग्नाद्वा निधनाश्रिते कुजे ।**
**बन्ध्वन्त्यगयोः कुजार्कयोः क्षीणेन्दौ निधनाय पूर्ववत् ॥ ८ ॥**

इति । शशिनः चन्द्रात् चतुर्थगे चतुर्थस्थाने क्रूरे शनौ रवौ वा कुजे निधनाश्रिते अष्टमस्थे इत्येको योगः । लग्नाद्वा चतुर्थगे क्रूरे कुजे निधनाश्रिते इति द्वितीयो योगः । कुजार्कयोः बन्ध्वन्त्यगयोः चतुर्थद्वादशगयोः क्षीणेन्दौ इन्दौ क्षीणे सति चेति तृतीयो योगः । त्रिष्वपि योगेषु पूर्ववत् लग्ने वा चन्द्रे वा शुभदृष्टिविहीने । निधनाय गर्भगर्भिण्योर्नाशो भवति ।

अष्टमे कुजे सुखे पापे लग्ने च शुभदृष्टिविहीने गर्भगर्भिण्योर्मरणं संभवति । चन्द्रात् सुखे पापे अष्टमे कुजे चन्द्रे शुभदृष्टिविहीने गर्भगर्भिण्योर्नाशो वक्तव्यः । लग्नात् चतुर्थद्वादशस्थयोः कुजमन्दयोः क्षीणश्च चन्द्रः शुभदृष्टिहीनश्चेदपि गर्भगर्भिण्योर्नाशो भवति ।

वैतालीयं छन्दः। बृहतीपङ्क्तिच्छन्दोऽन्तर्गतवृत्तसंमिश्रम्। सम पादयोः शुद्धविराड्वृत्तम्। शशिन इति मातृकारकस्योपलक्षणम्। अनेन रात्रौ चन्द्रान्नवमदशमराशिवशादप्येवं चिन्त्यमिति दिवा शुक्रान्नवमस्थानादप्येवं मातृमरणं चिन्त्यमिति च सूचितम्।

तथा च सारावल्यम्—

"चन्द्राद्दशमे भानुर्मातुर्मरणं करोति पापयुतः।
शुक्रात्पञ्चमनवमे सौरियुतस्तेन वा दृष्टः॥
चन्द्रात्त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ।
शुक्रात्तथैव दिवसे भौमः पापेन सन्दृष्टः॥"

इति॥ ८॥

अथाऽऽहितस्य मातुर्मरणहेतुं गर्भस्रावं चाह—

**उदयास्तगयोः कुजार्कयोर्निधनं शस्त्रकृतं भवेत्तदा।**
**मासाधिपतौ निपीडिते तत्काले स्रवणं समादिशेत्॥ ९॥**

इति। तदा आधानकाले प्रश्नकाले वा। कुजार्कयोरुदयास्तगयोः कुजे लग्नगते सूर्ये सप्तमगते च शस्त्रकृतं निधनं शस्त्रेण कृतं मरणं वदेत्। रोगादि विनैवागन्तुकघातकवस्तुकृतमरणं गर्भगर्भिण्योर्भवति। मासाधिपतौ निपीडिते नीचशत्रुक्षेत्रगते मूढे युद्धे पराजिते वा। तत्काले तस्य काले स्रवणं गर्भस्रावं समादिशेत् वदेत्। आधानकाले प्रश्नकाले वा यो निपीडितः सः "कललघनाङ्कुरास्थि" इति वक्ष्यमाणप्रकारेण यस्य मासस्याधिपतिस्तस्मिन्मासे गर्भस्य स्रवणं सम्भवति। तत्काले इत्याधानलग्नस्योपलक्षणम्। निपीडिते दुर्बले ग्रहे गर्भस्रावकारकग्रहे। तत्काले आधानलग्ने चारवशात्स्थिते तदाऽपि गर्भस्रावो वाच्यः।

तथा च सारावल्याम्—

"उत्पातक्रूरहते तस्मात्स्वस्याधिपे पतति गर्भः ।
लग्नगृहं वा हेतुर्योगेशो गर्भपातस्य ॥"

इति । वैतालीयं छन्दः । बृहतीपङ्क्तिसंमिश्रं वृत्तं वा । पूर्वार्धे सुमुखी-वृत्तम् । उदयास्तगपापैरनिष्टं चोक्तम् । अतः उदयास्तव्यतिरिक्तकेन्द्रगैः शुभैः सुमुखीत्वं वाच्यम् । प्रसवसमये सम्पत्तयो भवन्तीत्यर्थः । बृहती-छन्दसा नवमोऽपि विवक्षितः । नवमश्च त्रिकोणोपलक्षणम् । एवं त्रिकोण-सप्तमस्थपापैरानन्दवर्जितः प्रसवो वाच्यः ।

तथा च सारावल्याम्—

"जायात्रिकोणसंस्थैः क्रूरैरानन्दवर्जितः प्रसवः ।
दशमचतुर्थोपगतैः सौम्यैः संपत्तयो विपुलाः ॥"

इति ॥ ९ ॥

एवं गर्भगर्भिण्योररिष्टलक्षणमुक्त्वाऽधुना गर्भसौख्यलक्षणमाह—

**शशाङ्कलग्नोपगतैः शुभग्रहैः त्रिकोणजायार्थसुखास्पदस्थितैः ।**
**तृतीयलाभर्क्षगतैश्च पापकैः सुखी तु गर्भो गुरुणा निरीक्षितः ॥१०॥**

इति । शुभग्रहैः बुधगुरुशुक्रैः । शशाङ्कलग्नोपगतैः त्रिकोणजायार्थसुखा-स्पदस्थितैः चन्द्रलग्नत्रिकोणसप्तमद्वितीयचतुर्थदशमस्थितैः । शुभग्रहैः केन्द्र-त्रिकोणधनस्थानगतैश्चन्द्रयुक्तैर्वेत्यर्थः । अशोभनैः पापैः तृतीयलाभर्क्षगतैश्च तृतीयैकादशस्थितैः । गुरुणा निरीक्षितः लग्नचन्द्रयोरेकतरे गुरुणा दृष्टे यदि गर्भः सुखी भवेत् । गर्भश्च सुखी भवेदिति जनन्या अपि सौख्यं वक्तव्यम् । गर्भगर्भिण्योराधाराधेयत्वभावेन तयोरभेदेन सौख्यं निर्दिष्टम् ।

अर्थान्तरस्यापि ध्वनिः। त्रिकोणकेन्द्रधनस्थानस्थितानां शुभानां शुभदत्वं सूचितम्। तथैव तृतीयैकादशगाः पापाः सौख्यप्रदाः। उपचयेषु दशमः केन्द्रत्वेन त्यक्तः षष्ठस्तु दुःस्थानत्वात्। "नयनभवनकेन्द्रे कोणगे वा" इति जातकपारिजाते धनस्थानस्य केन्द्रकोणतुल्यत्वं दर्शितम्।

वृत्तं वंशस्थम्। जगतीच्छन्दः। अनेन द्वादशादित्यरूपः सूर्यः सूचितः। अतोऽत्र गुरुशब्देन पितृकारकः सूर्योऽपि विवक्षितः। यस्मात्सारावल्याम्—

"होरेन्दुतश्च सौम्यैस्त्रिकोणजायार्थसुखाम्बरस्थैर्वा।
पापैस्त्रिलाभयातैः सुखी तु गर्भो निरीक्षिते रविणा॥"

इति॥ १०॥

अथ जातस्याधानकालवशाज्जन्मकालवशात् प्रश्नकालाद्वा स्त्रीपुरुषविभागलक्षणमाह—

**ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः**
**पुंजन्म प्रवदेत्समांशसहितैर्युग्मेषु तैर्योषिताम्।**
**गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियं**
**द्व्यंशस्था बुधवीक्षणाच्च यमलं कुर्वन्ति पक्षे स्वके॥ ११॥**

इति। निषेकादिकाले ओजर्क्षे ओजराशौ। पुरुषांशकेषु ओजनवांशकेषु बलिभिः बलयुक्तैः लग्नार्कगुर्विन्दुभिः लग्नसूर्यगुरुचन्द्रैः पुंजन्म पुरुषस्य जन्म प्रवदेत्। युग्मेषु युग्मराशिषु समांशसहितैः युग्मांशसहितैः। तैः लग्नार्कगुर्विन्दुभिः योषितां जन्म स्त्रीजन्म प्रवदेत्।

अत्र लग्नं शरीरं सूर्यः आत्मकारकः गुरुः जीवः चन्द्रः मनः। अत एतैरेव प्राधान्येन पुंस्त्रीविभागः कर्तव्यः। एते विषमराश्यंशेषु पुरुषं

समराश्यंशेषु स्त्रियं च जनयन्ति। एतद्योगाभावे तु स्त्रीपुंविभागज्ञानार्थं प्रकारान्तरमाह—विषमे लग्नाद्विषमराशौ लग्नतृतीयपञ्चमसप्तमनवमैकादश-भावेषु स्थितौ गुर्वर्कौ। नरं पुरुषं जनयतः। पुरुषग्रहत्वात् विषम-भाववशादेव एतौ पुंजन्मकरौ भवतः। शशिसितौ युग्मे लग्नाद्युग्मभावस्थितौ स्त्रियं कुरुतः। स्त्रीग्रहत्वाद्युग्मराशिवशादेव स्त्रियं जनयतः। वक्रश्च युग्मे स्त्रियं करोति। स्वतः पुरुषग्रहोऽपि युग्मराशिस्थित्या शोणिताधिक्यद्योत-कत्वात् स्त्रियं जनयति। चकाराद् ओजभावस्थित्या स्वतः पुंग्रहत्वात्पुंजन्म-कर इत्यपि व्यञ्जितम्। द्व्यंशस्थाः उभयराश्यंशगताः तावेव गुर्वर्कौ शशिसितौ च। बुधवीक्षणाच्च बुधदृष्टिवशात् स्वके पक्षे यमलं पुरुषपक्षे पुरुषद्वयं स्त्रीपक्षे स्त्रीद्वयं कुरुतः। द्व्यंशस्थौ गुर्वर्कौ बुधदृष्टौ पुरुषद्वयं जनयतः। द्व्यंशस्थौ शशिसितौ बुधदृष्टौ स्त्रीद्वयं जनयत इति सारः।

वक्रश्च। वृत्तं शार्दूलविक्रीडितम्। अस्यैकैकस्य पादस्य एको-नविंशत्यक्षराणि। अनेन एकोनविंशतिवत्सरैर्भगणं भुञ्जानो सदा प्रति-लोमगतिकश्च राहुः स्मारितः। पक्ष इत्यक्षरसङ्ख्यया एकषष्टिः भगणशोध-नाल्लग्नं भवति। अतो लग्नमित्यर्थः। अनेन लग्नस्थो वक्रश्च राहुश्च बुधवी-क्षणाद्यमलं करोति। वक्रश्चेत्येकस्योक्त्या स्त्रीपुरुषात्मकयमलमिति सिद्धम्।

गुर्वर्कौ। गुरुशब्दावृत्त्या गुरुगुर्वर्कौ भवति। गुरुशब्देन गुरुर्गृह्यते। गुरुः अर्कः यस्य स इति विग्रहेण गुर्वर्को शनिः। गुरुश्च गुर्वर्कश्च गुर्वर्कौ गुरुशनी। द्व्यंशस्थौ द्वि अंशस्थौ। द्विशब्दो यमलशब्दस्य विशेषणं, द्वे अङ्गे यस्य तत् द्वि। अंशस्थौ लग्नांशस्थौ द्वियमलं स्त्रीपुरुषात्मक-द्व्यङ्गयुतं यमलं कुरुतः। लग्नांशस्थौ गुरुशनी स्त्रीपुरुषयमलं कुरुत इति सारः।

अथवा गुर्वर्कौ अंशस्थौ। पक्षे वक्रश्च बुधवीक्षणाच्च द्वियमलं कुर्वन्तीति वा योजना। अनेनापि लग्नांशस्थौ गुरुशनी बुधवीक्षणयुतो लग्नस्थराहुश्च स्त्रीपुरुषात्मकयमलं कुर्वन्तीत्यर्थस्य सिद्धिर्भवति।

उक्तं च पराशरहोरायाम्—

"लग्ने राहुसमायुक्ते तथा सोमनिरीक्षिते ।
लग्नांशे मन्दसूरी चेज्जातश्च यमलो भवेत् ॥"

इति । वक्र इति निर्देशात् स्वतः पुरुषग्रहोऽपि लग्नाद् युग्मराशिस्थित्या विपरीतो भूत्वा स्त्रीकारको भवतीति सूचितम् । अतो लग्नाद्विषमराशिस्थितो भौमः पुरुषमेव करोतीत्यपि व्यञ्जितम् ।

वृत्तं शार्दूलविक्रीडितम् । अतिधृतिश्छन्दः । अनेन जातस्य स्त्रीपुंविभागनिर्णये लग्नयुक्तसप्तग्रहाणामेकोनविंशतिरंशाः कल्प्या इति सूचितम् । उत्तरश्लोकव्याख्याने विस्तरत उच्यते ॥ ११ ॥

अथ योगान्तरमाह—

**विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात् ।**
**प्रोक्तग्रहाणामवलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ १२ ॥**

इति । लग्नं विहाय लग्नं हित्वा विलग्नाद् विषमर्क्षसंस्थः लग्नाद् ओजभावगतः तृतीयपञ्चमसप्तमनवमैकादशगतः सौरोऽपि शनिरपि पुंजन्मकरः पुरुषजन्मकरः भवति । सौरोऽपीत्यपिशब्देन उपेन्द्रवज्रावृत्तेन च उपेन्द्रदैवत्यबुधोऽपि लग्नात् समराशिगतः स्त्रीजन्मकर इत्यपि व्यञ्जितम् । पुंनपुंसकग्रहः शनिः लग्नेतरविषमभावस्थः पुरुषं करोति । स्त्रीनपुंसकग्रहो बुधः समस्थः स्त्रियं करोति ।

प्रसूतौ प्रोक्तग्रहाणामुक्तग्रहाणां वीर्यं बलमवलोक्य पुरुषः अङ्गना वा वाच्या ।

वीर्यं शुक्लम् । एतच्छुक्लशोणितयोरुपलक्षणम् । ग्रहाणां शुक्लशोणितमवलोक्य वाच्यः । शुक्लशोणितबलमवलोक्य वाच्य इत्यर्थः । यथा लग्नार्क-

गुर्विन्दूनामेकैकस्य द्वौ द्वावंशौ स्याताम् । ओजराश्यंशकस्थसूर्यस्य द्वावपि पुरुषांशौ युग्मराश्यंशकस्थस्य द्वौ स्त्र्यंशौ राश्यंशकयोरेकतरस्य ओजत्वे इतरस्य च युग्मत्वे एकः पुरुषांशः एकः स्त्र्यंशः । एवमेव लग्नेन्दु-जीवानामपि । ततः सप्तग्रहाणामप्येकैकस्य द्वौ द्वावंशौ प्रकल्प्यौ । लग्नाद् विषमस्थगुरोर्द्वावपि पुरुषांशौ, समस्थस्यैकः पुरुषांशः, एकः स्त्र्यंशः, एवमेव सूर्यस्यापि । युग्मस्थशशिनो द्वौ स्त्र्यंशौ । एवमेव शुक्रस्य । कुजस्यैकोऽशः । स च तस्य युग्मराशिस्थित्या स्त्र्यंशः । विषमराशिस्थित्या पुरुषांशः । शनैश्चरस्यैकोऽशः । लग्नाद् विषमस्थाने एकः पुरुषांशकः । अन्यथा शून्यम् । बुधस्य एकोऽशः । लग्नाद्युग्म-राशिस्थितस्यैकः स्त्र्यंशः । अन्यथा शून्यम् । आहत्यैकोनविंशतिरंशाः । "द्व्यंशस्था बुधवीक्षणाच्च यमलं कुर्वन्ति पक्षे स्वके" इत्यनेन गुर्वर्कशशि-शुक्रकुजानामुभयराशिस्थित्या बुधदृष्ट्या च लग्नादिगणनवशात्प्राप्तांशा-स्तत्तत्पक्षे द्विगुणीकर्तव्या इत्यपि द्योत्यते । एवमपि कृत्वोक्तप्रकारेण स्त्रीपुंविभागेन विभक्तेष्वंशाधिक्यवशात् स्त्रीपुंविभागः कर्तव्यः ।

वृत्तमुपेन्द्रवज्रा । त्रिष्टुप्छन्दः । अतो लग्नादिगणनेन ग्रहाणां स्त्रीपुंविभागांशाः एकादश इत्यपि सूचितम् ।

अवलोक्य वीर्यमित्युक्तवताऽऽचार्येण ग्रहाणां स्त्रीपुमंशास्तत्तद्ग्रह-बलपिण्डेन गुणितव्या इत्यपि व्यञ्जितमिति मन्यामहे ॥ १२ ॥

स्त्रीपुरुषयोगानुक्त्वाऽधुना क्लीबयोगानाह—

**अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यौ तथा**
**वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत्स्थितौ ।**
**युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ**
**पुंभागे सितलग्नशीतकिरणाः षट्क्लीबयोगाः स्मृताः ॥ १३ ॥**

इति। युग्मौजर्क्षगतौ शशिरवी अन्योन्यं पश्यतः यदि युग्मराशिस्थ-चन्द्रः ओजराशिस्थसूर्यश्च अन्योन्यं पश्यतः यदीत्येको योगः। युग्मौजर्क्षगतौ आर्किसौम्यावन्योन्यं पश्यतः यद्वा युग्मराशिस्थशनिरोजराशिस्थबुधश्च अन्योन्यं पश्यतो यदीति द्वितीयो योगः। असमे ओजे स्थितः वक्रः कुजः। समगं दिनेशं समराशिस्थं रविं पश्यति यदीति तृतीयो योगः। असमे स्थितौ चन्द्रोदयौ भूम्यात्मजेनेक्षितौ चेद् विषमराशिस्थितौ लग्नचन्द्रौ कुजः पश्यति यदीति चतुर्थो योगः। युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ समराशिस्थचन्द्रं ओजराशिस्थबुधं च कुजः पश्यति यदीति पञ्चमो योगः। पुंभागे सितलग्नशीतकिरणाः ओजनवांशके शुक्रलग्नचन्द्राः स्थिता यदीति षष्ठो योगः। एते षट्क्लीबयोगाः स्मृताः ऋषिभिरिति शेषः।

अत्र प्रथमोक्तयोगे पुरुषरूपसूर्यस्यौजराशिस्थित्या शुक्राधिक्यं स्त्री-रूपचन्द्रस्य युग्मराशिस्थितिवशात् शोणिताधिक्यं च स्पष्टम्। तथापि तयोस्तुल्यबलत्वात् शुक्रशोणितयोः समत्वं दर्शितम्। सूर्याचन्द्रमसोरन्योन्य-मीक्षणवशात् शुक्रशोणितयोः संबन्धः। तयोः समत्वान्नपुंसकजन्मप्रसक्तिः। एतन्न्याय्यमेव। अत्रौजर्क्षसूर्यस्य युग्मर्क्षचन्द्रस्य च मिथो दृष्टिरन्योन्य-चतुर्थदशमयोरेव सम्भवति। अत एकस्य पादोनदृष्टिरितरस्य पाददृष्टिश्च भवतः। अथवा पद्धतिरीत्या दृष्ट्यानयनप्रकारेण षष्ठाष्टमस्थयोर्वा पूर्ण-दृष्टिर्वक्तव्यः। पादपादोनदृष्टी कृष्णशुक्लाष्टम्योर्भवतः। अत एवाष्टम्यां स्त्रीपुंयोगश्च प्रतिषिद्धः। अत्र सप्तमदृष्टिः शुक्लचतुर्दशीपौर्णमास्योर्भ-वति। अतस्तयोर्दिनयोर्मैथुनस्य प्रतिषिद्धत्वम्। एकराशावोजयुग्माभावेऽपि कृष्णचतुर्दश्यमावास्ययोः क्रमदृष्टिशीर्षोदयग्रहत्वाच्चन्द्रः पृष्ठोदयवत्वात्सूर्यश्चा-न्योन्यं पश्यतः। अत एव कृष्णचतुर्दश्यमावास्या च प्रतिषिद्धदिने। अत्र "अन्योन्यं रविचन्द्रौ विषमर्क्षसमर्क्षगौ निरीक्ष्येते" इति बादरायणवचन-मनुसृत्य तृतीयपादस्थ "युग्मौजर्क्षगतौ" इति पदमाकृष्टम्।

" निषेककाले चन्द्रार्कावन्योन्यं यदि पश्यतः ।
तथैव चन्द्रमन्दौ वा क्लीबजन्मप्रदौ तदा ॥ "

इति जातकपारिजातवचनेन यत्रकुत्र स्थितावपि चन्द्रसूर्यावन्योन्यदृष्ट्या क्लीबं जनयत इति सिद्धम् । द्वितीयतृतीययोगयोरपि शुक्रशोणितसाम्यमेव नपुंसकत्वकारणम् । एतेषु त्रिषु योगेषु जाताः नपुंसकाः व्यञ्जनहीना भवन्ति । अत एव ते वाशब्देन संयोजिताः ।

इतरयोगत्रये स्त्रीपुरुषसङ्करत्वादेव नपुंसकत्वम् । अत एतेषु योगेषु जाताः स्त्रीपुरुषधर्महीना सम्भोगेऽसमर्थाश्च भवन्ति । योगकर्ता बलहीनश्चेत् तस्य दशायां नपुंसकत्वं ददाति । एवं जातकेऽपि चिन्त्यम् ।

वृत्तं शार्दूलविक्रीडितम् । अनेन नपुंसकत्वेऽपि स्त्रीपुंविभागः पूर्वोक्तप्रकारेणैकोनविंशत्यंशैरेव चिन्त्यमिति सूचितम् । अत एव पूर्वोक्त-स्त्रीपुरुषयोगाभाव एवैते योगाः प्रवर्तन्त इत्यपि व्यञ्जितम् ।

षट् क्लीबयोगाः स्मृताः । ष्णान्ता षट् । षडिति सप्ताष्टादीनां संज्ञा । " यद्वार्किसौम्यौ तथा " इति सूर्यचन्द्रयोः स्थाने तयोः पुत्रौ निवेशितौ । अनेन शशिमन्दावपि मिथो दृष्ट्या क्लीबं जनयतः ।

तथा च जातकपारिजाते—

" तथैव चन्द्रमन्दौ वा क्लीबजन्मप्रदौ तदा । "

इत्युक्तम् । अर्कसौम्यावपि मिथो दृष्ट्या क्लीबं जनयतः ।

शोणितरूपवक्रः विषमस्थः समराशिस्थपुरुषरूपरविं दृष्ट्वा क्लीबं जनयति । एवं शुक्ररूपशुक्रः समस्थः ओजराशिस्थस्त्रीरूपचन्द्रं दृष्ट्वा नपुंसकजनकः स्यात् ।

युग्मौजर्क्षगताविन्दुशशिजौ भूम्यात्मजेनेक्षितौ क्लीबजन्मप्रदौ । तथैवौजयुग्मर्क्षगतौ रविशनी शुक्रेणेक्षितौ क्लीबजन्म दद्याताम् ।

युग्मौजर्क्षगतौ चन्द्रोदयौ भूम्यात्मजेनेक्षितौ क्लीबजन्मकरौ । तथैवौ-जयुग्मर्क्षगतौ सूर्योदयौ शुक्रेणेक्षितौ क्लीबत्वं कुरुत एव ।

पुंभावे सितलग्नशीतकिरणाः क्लीबत्वकर्तारः, तथैव स्त्रीभागे कुजलग्नचण्डकिरणाः क्लीबत्वप्रदा भवन्ति ।

असितलग्नशीतकिरणाः इति वा पदच्छेदः । पुन्नपुंसको हि शनिः । अतो नपुंसककर्तृत्वे तस्य प्राधान्यं भवत्येव । लोके नपुंसकत्वं बहुधा दृश्यते । न सर्वे पूर्णनपुंसकाः । का ह्यत्र व्यवस्थेति चेदुच्यते । कालाङ्गानीति पद्योक्तराशिपत्ववशाद्योगकर्त्रा तत्तदङ्गेषु विकारो वाच्यः । एवं "अन्योन्यं यदि पश्यतः शशिरवी" इत्यत्र पुन्नपुंसकस्य स्तनवत्त्वं स्त्रीक्रोडवत्त्वं च वाच्यम् । स्त्रीनपुंसकस्य स्तनाभावः पुरुषक्रोडवत्त्वं च वाच्यम् । एवमितरेष्वपि योगेषु युक्त्या तर्क्यम् ।

अत्र बृहस्पतिव्यतिरिक्ताः षड् ग्रहा एव योगकर्तारः । कुतः ? नपुंसकत्वनिवर्तको हि गुरुः । अतो योगकर्तॄणामेकतमस्य जीवेन योगो दृष्टिर्वा नपुंसकयोगबाधक इति सूचितम् ॥ १३ ॥

अथ यमलत्वादिविशेषं कथयति—

**युग्मे चन्द्रसितावथौजभवने स्युर्ज्ञारजीवोदया**
**लग्नेन्दू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः ।**
**कुर्युस्ते मिथुनं ग्रहोदयगतान् द्व्यङ्गांशकान् पश्यति**
**स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद्युग्मं त्वमिश्रैः समम् ॥ १४ ॥**

इति । अथ युग्मे युग्मराशौ चन्द्रसितौ चन्द्रशुक्रौ ओजभवने ओजराशौ ज्ञारजीवोदयाः बुधकुजगुरुलग्नानि स्युः यदि इत्येको योगः । समगौ समराशिस्थितौ लग्नेन्दू लग्नचन्द्रौ नृनिरीक्षितौ पुरुषग्रहैः सर्वैः कुजगुरु-

रविभिर्वीक्षितौ इति द्वितीयो योगः । युग्मेषु वा प्राणिनः ते ज्ञारजीवोदयाः युग्मेषु युग्मराशिषु प्राणिनो बलवन्त इति तृतीयो योगः । ते उक्तयोगेषु मिथुनं यमलं कुर्युः । एकां स्त्रियमेकं पुरुषं च जनयन्ति । ग्रहोदयगतान् ग्रहैरुदयलग्नेन प्राप्तान् द्व्यङ्गांशकान् उभयराश्यंशान् स्वांशे स्वांशस्थिते ज्ञे बुधे पश्यति सति ते त्रितयं कुर्युः । तत्र स्त्रीपुंविभाग उच्यते । ज्ञगांशकवशात् बुधाश्रितांशकवशात् युग्मं भवति । कन्यांशकस्थबुधेन द्वे स्त्रियौ एकः पुरुषश्च भवन्ति । मिथुनांशस्थेन बुधेन एका स्त्री द्वौ पुरुषौ च भवन्ति । अमिश्रैः पुरुषराशिद्व्यङ्गस्थैः बुधे मिथुनांशके, अथवा स्त्रीराशिद्व्यङ्गस्थैः बुधे कन्यांशके । समं पूर्वोक्तयोगे त्रयः पुरुषाः द्वितीययोगे तिस्रः स्त्रियश्च भवन्ति ।

अत्र पुंस्त्रीनपुंसकादिविभागस्य सर्वेषां ग्रहाणामपि कारकत्वात् तेषां द्व्यङ्गांशकवशाद् यमलादित्वं निरूपितम् । वृत्तं शार्दूलविक्रीडितम् । सूर्याश्वयतियुतम् । अतः सर्वेषां भावानां विशेषतः सप्तमभावस्य च कारकस्य पत्युश्च द्व्यङ्गांशकवशादेवमूह्यमिति व्यञ्जितम् । तेन शुक्रस्य सप्तमाधिपस्य चोभयराश्यंशकवशात् कलत्रद्वित्वं वक्तव्यम् । तथा च फलदीपिकायाम्—

"द्वन्द्वर्क्षांशे मदपतिसितौ तस्य जायाद्वयं स्यात्"

इति । एवमेव स्वांशस्थबुधोऽपि तत्तद्राश्यनुगुणबहुकलत्रदो भवति ॥ १४ ॥

गर्भस्यानेकसङ्ख्याकप्रजावत्त्वमाह—

**धनुर्धरस्यान्त्यगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः ।**
**ज्ञेनार्किणा वीर्ययुतेन दृष्टे सन्ति प्रभूता अपि कोशसंस्थाः ॥१५॥**

इति । विलग्ने लग्ने धनुर्धरस्यान्त्यगते धनुषोऽन्त्यनवांशके धनुषि धनुर्नवांशक इत्यर्थः । वीर्ययुतेन ज्ञेनार्किणा बलयुताभ्यां बुधशनिभ्यां दृष्टे ।

बलिष्ठैर्ग्रहैः बलयुक्तैरितरग्रहैः तदंशोपगतैः यत्र कुत्रापि संस्थितैर्धनुर्नवांशकगतैः। कोशसंस्थाः जरायुसंस्थिताः। प्रभूता अपि बहवोऽपि सन्ति।

इन्द्रवज्रोपेन्द्रवज्रसंयुक्तमालानामकोपजातिवृत्तमिदम्। प्रभूताः कोशसंस्था इत्यप्युक्तम्। कोशशब्देन भाग्ययोगः सूचितः। अत अस्मिन्योगे जातः इन्द्रवद्बहुपरिवारयुक्तः उपेन्द्रवद्गुणाढ्यश्च भवतीति द्योत्यते। न्याय्यमेतत्। अत्र सर्वे ग्रहा बलिष्ठाः पञ्चानां ग्रहाणां गुरुनवांशकस्थितिश्च। लग्ननवांशकनाथोऽपि गुरुः। लग्नं च वर्गोत्तमगम्। "शुभं वर्गोत्तमे जन्म" इति वक्ष्यति॥ १५॥

अथ गर्भस्थायाः प्रजायाः शुभाशुभफलनिरूपणार्थं मासाधिपतीनाह—

**कललघनाङ्कुरास्थिचर्माङ्गजचेतनदाः**
**सितकुजजीवसूर्यचन्द्रार्किबुधाः परतः।**
**उदयपचन्द्रसूर्यनाथाः क्रमशो गदिता**
**भवति शुभाशुभं च मासाधिपतेः सदृशम्॥ १६॥**

इति। सितकुजजीवसूर्यचन्द्रार्किबुधाः शुक्रकुजगुरुसूर्यचन्द्रशनिबुधाः क्रमेण कललघनाङ्कुरास्थिचर्माङ्गजचेतनदाः भवन्ति। शुक्रः कललदः निषिक्तं बीजं शोणितेन मेलयित्वा सान्द्रं करोति। कललशब्दः बुद्बुदपिण्डयोरप्युपलक्षणम्। कुजः घनदः काठिन्यं ददाति। गुरुः अङ्कुरदः मनुष्याकारोत्पत्त्यारम्भं करचरणाद्यवयवसम्भवात् करोति। अङ्कुरशब्देन लिङ्गव्यक्तिमपि करोतीत्यूह्यम्। सूर्यः अस्थिदः अस्थीनि जनयति। चन्द्रः चर्मदः चर्म त्वचं ददाति। शनिः अङ्गजदः नखरोमाणि जनयति। बुधः चेतनदः जीवचैतन्यं ददाति।

"ऋतुकाले संप्रयोगादेकरात्रोषितं कललं भवति। सप्तरात्रोषितं बुद्बुदं भवति। अर्धमासाभ्यन्तरे पिण्डो भवति। मासाभ्यन्तरे कठिनो भवति। मासद्वयेन शिरः संपद्यते। मासत्रयेण पादप्रदेशो भवति। अथ चतुर्थे मासि गुल्फजठरकटिप्रदेशा भवन्ति। पञ्चमे मासि पृष्ठवंशो भवति। षष्ठे मासे मुखनासिकाश्रोत्राणि भवन्ति। सप्तमे मासे जीवेन संयुक्तो भवति। अष्टमे मासे सर्वलक्षणसंपूर्णो भवति। पितू रेतोऽतिरेकात्पुरुषो मातू रेतोऽतिरेकात्स्त्री उभयोर्बीजतुल्यत्वान्नपुंसको भवति," इति गर्भोपनिषदुक्तकललादिकारकत्वादेते सितादयस्तत्रैवोक्ततत्तदुत्पादकमासनाथाश्च भवन्तीति सूचितम्। अतः सितादिबुधान्ताः प्रथमादिसप्तमासाधिपतय इति सिद्धम्।

परतः पश्चात् जीववत्वकरणानन्तरं उदयपचन्द्रसूर्यनाथाः। अष्टममासस्य निषेकलग्नाधिपो प्रश्नलग्नाधिपो वा, नवमस्य चन्द्रः, दशमस्य सूर्यश्च नाथा भवन्ति।

"अथ नवमे मासि सर्वलक्षणज्ञानकरणसंपूर्णो भवति।"

इति गर्भोपनिषद्वाक्यानुसारेण गर्भस्य संपूर्णत्त्वम्। अतो दशमे मासि सूर्याधिदैवत्यो गर्भः प्रसूतिवायुना बहिर्नीयते। यवनेश्वरस्तु कुजस्य प्रथममासाधिपत्यं शुक्रस्य द्वितीयस्य च वक्ति। तथा च तद्वाक्यम्—

"कुजास्फुजिज्जीवरवीन्दुसौरशशाङ्कलग्नेन्दुदिवाकराणाम्।"

इति। शुक्रशोणितमिश्रस्य कललस्य शुक्रप्रथमत्वं शोणितप्रथमत्वं वा न्याय्यमेव। आचार्यस्तु शुक्रप्रथमत्वमङ्गीकरोति। यवनेश्वरस्तु शोणितस्य। शुभाशुभं च मासाधिपतेः सद्दशमुक्तमासाधिपबलाबलवशाद्वक्तव्यमित्यर्थः। उक्तं च—

"मासाधिपतौ निपीडिते तत्काले स्रवणं समादिशेत्" इति।

शुभाशुभमिति गर्भोपनिषत्स्थस्य "शुभाशुभं च कर्म विन्दति" इत्यस्य स्मारकः ।

सितादिसप्तमासाधिपानामेकपदेन समासः, उदयपचन्द्रसूर्याणा-मुत्तरपदेन । अनेनायमर्थः सूचितः । जन्मानन्तरं च प्रथमवयसि शरीरस्यैव प्राधान्यादुदयपो नाथः, मध्ये वयसि मनसः परिपाकतया चन्द्रो नाथो भवति, अन्त्ये वयस्यात्मप्रधानतया सूर्यो नाथो भवति ।

अष्टिश्छन्दः । अनेन षोडशकलात्मकश्चन्द्रः सूचितः । अतोऽत्र सौरसावननाक्षत्रचान्द्रेषु चान्द्रो मासो विवक्षित इति सूचितम् । अष्टिच्छन्द-स्त्वात्, पद्यक्रमसङ्ख्यया षोडशत्वात्, नागाष्टयतियुतत्वात्, अष्टमूर्तेः षोडशकलाधरस्यार्धनारीश्वरस्य स्मरणम् । अतो हरवृत्तमिदमिति मन्यामहे यदेवं लक्ष्येत—

"नजरभभा गुरुश्च नागाष्टभिरेष हरः"

इति । प्रकृतिं भोग्यत्वेन हरतीति व्युत्पत्त्या हरशब्देन जीवो गृह्यते यः

"स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः ।"

"तुषेण बद्धो व्रीहिः स्यात्तुषाभावेन तण्डुलः ।
पाशबद्धस्तदा जीवः पाशमुक्तः सदाशिवः ॥"

इत्यादिपुराणोपनिषद्वाक्यैर्लक्षितः । नागाष्टयतिना षोडशाक्षरयुक्तपादेन चाष्ट प्रकृतयः षोडश विकाराश्च, अत एव गर्भोपनिषच्च स्मारिता । तस्मात्

"भवति शुभाशुभं च मासाधिपतेः सदृशम्"

इत्यनेन

"यदि योन्याः प्रमुच्येहं तत्प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥

यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायणम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥
यदि योन्याः प्रमुच्येऽहं तत्साङ्ख्यं योगमभ्यसे ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥
यदि योन्याः प्रमुच्येऽहं ध्याये ब्रह्म सनातनम् ॥ ”

इति गर्भोपनिषद्वाक्यानुसारेण तत्तन्मासि तत्तद्ग्रहान्तर्यामिणम् अशुभक्षयकर्तारं भगवन्तं संपूज्य शुभफलमेव प्राप्यत इति सूचितम् । अत एव “तत्काले स्रवणं समादिशेद्” इत्यत्र समादिशेदित्यनेन सम्यगालोच्यादिशेदिति व्याख्यया शान्तिकर्माभाव एव स्रवणमादिशेदिति सिद्धम् ।

अत्र शुक्रदैवत्यप्रथममासि लक्ष्मीदुर्गादिपूजया तन्मन्त्रजप्तनवनीतादिप्राशनाच्च गर्भरक्षा कार्या । एवमितरेषु मासेषु ।

“उदयपचन्द्रसूर्यनाथाः” इति सर्वेषामेव मासानां उदयपचन्द्रसूर्या एव नाथाः, इतरे सितकुजादयः कललघनादिदातार एव । तत्पक्षे उदयपशब्दः प्राणपञ्चभूतोपलक्षणम् । चन्द्रः मन इन्द्रियाणि च । सूर्यः आत्मा । तस्मात्

“शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं सुरैरपि ॥ ”

इति श्रीमद्भागवतघोषितः शब्दब्रह्म परंब्रह्म वा श्रीमन्नारायणः पूजनीयो गर्भरक्षार्थम् । प्राणरूपो गरुडः

“मनश्चक्रं निगद्यते”

इति भागवतवचनेन मनोरूपः सुदर्शनः आत्मा नारायणश्च उदयपचन्द्रसूर्यशब्दैर्विवक्षिताः । अतो गारुडसुदर्शननारायणाष्टाक्षरैरथवा नारायणाष्टाक्षरेण वा जप्तं नवनीतघृतादि प्राश्य गर्भं रक्षेत् ।

उदयपश्च चन्द्रश्च सूर्यश्च नाथश्च उदयपचन्द्रसूर्यनाथाः इति विग्रहेण नाथशब्देन विष्णुर्विवक्षितः । अत एव

"नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमै-
भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्यायते ॥"

"नाथस्य नन्दभवने नवनीतनाट्यम् ।"

इत्यादिषु कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेङ्कटनाथदेशिकैर्नाथशब्देन भगवान् वासुदेवो विवक्षितः । स एव जननानन्तरं देवता । यस्मादुक्तं गर्भोपनिषदि—

"अथ योनिद्वारं संप्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्ममरणानि न च कर्म शुभाशुभं विन्दति ।" इति ।

तस्माज्जातस्य शिशोर्भगवतः पञ्चायुधैरपि रक्षा कार्येत्यपि सिद्धम् ॥ १६ ॥

गर्भस्थस्य जन्मान्तरीयकर्मविपाकानुसारेण जातमङ्गन्यूनातिरेकरूपवैरूप्यमाह—

**त्रिकोणगे ज्ञे विबलैस्ततोऽपरै-**
**र्मुखाङ्घ्रिहस्तैर्द्विगुणस्तदा भवेत् ।**
**अवाग्गवीन्दावशुभैर्भसन्धिगैः**
**शुभेक्षितश्चेत्कुरुते गिरं चिरात् ॥ १७ ॥**

इति । तदा ज्ञे बुधे त्रिकोणगे । ततः अपरैः अपरे च अपरे च अपरे इत्येकशेषः । न परे इत्यपरे इति व्युत्पत्त्या अपरशब्दः कुजचन्द्रसूर्याणां ग्राहको

भवति। अपरे अन्ये इति गुरुशुक्रमन्दाः। एवमपरैः कुजचन्द्ररविभिः गुरुशुक्रशनिभिश्च विबलैर्बलहीनैः मुखाङ्घ्रिहस्तैः द्विगुणः द्विगुणीकृतमुखपाद-हस्तो भवेत् जातः। त्रिकोणगे ज्ञे कुजगुर्वोः बलहीनयोः द्विशिराः भवति। त्रिकोणगे ज्ञे चन्द्रशुक्रयोर्बलहीनयोः पादद्वैगुण्यं भवति। त्रिकोणगे ज्ञे सूर्यशन्योर्बलहीनयोर्हस्तद्वैगुण्यं भवति। अथवा अपरैर्विबलैः ज्ञे त्रिकोणगे लग्ने पञ्चमे नवमे वा मुखाङ्घ्रिहस्तैर्द्विगुणो भवेत्। ज्ञे लग्ने मुखद्वैगुण्यं पञ्चमे हस्तद्वैगुण्यं नवमे पादद्वैगुण्यं च भवति।

"द्विबलैस्ततोऽपरैः" इति पाठभेदः। तदनुसारिणस्त्रिकोणपदेन मूलत्रिकोणं गृहीत्वा बुधे कन्यागते बलहीनाभ्यां गुरुशुक्राभ्यां मुखद्वैगुण्यं, बलहीनाभ्यां शनिरविभ्यां पादद्वैगुण्यं, बलहीनाभ्यां चन्द्रकुजाभ्यां हस्त-द्वैगुण्यं चेच्छन्ति।

वृत्तं वंशस्थम्। उपेन्द्रवंशा वा। अत उपेन्द्रदेवताकबुधस्य बलवशाच्छुभाशुभफलं वाच्यम्। अनेन बुधे लग्ने बलवति वाग्बाहुल्यं वाच्यम्। बलहीनश्चेन्मुखरोगादि। पञ्चमे बुधो बलिष्ठश्चेज्जातो बाहु-बलयुतो भवति। अन्यथा बाहुच्छेदमाप्नुयात्। नवमे बुधो बलिष्ठो यदि पादबलयुतो भवति। विशेषतो ज्ञस्य विहगकारकत्वाद्विहगद्रेक्काण-वशाद् रज्जुगमनादिक्रीडनकौशलं वक्तव्यम्। बलहीने पादच्छेदाद्यनिष्टफलं वक्तव्यम्।

गवि वृषभे अथवा वाचि द्वितीयभावे। इन्दौ चन्द्रे। आहितः अशुभैः पापैः भसन्धिगैः गण्डान्तगतैः अवाग्वक्तुमशक्तो भवति। शुभेक्षितश्चेत् स च चन्द्रः शुभेक्षितश्चेत् चिरात् गिरं कुरुते। अनेन शुभदृष्टवृषस्थचन्द्रेण भसन्धिगतशुभैश्च शुभं वाच्यम्।

"चिरात्" इत्यनेन कालनिर्णयः कथं कर्तव्यः। "चेत्" इत्यक्षरसङ्ख्यासूचितषष्ठे वर्षे गिरं कुरुत इत्यवगन्तव्यम्।

उपेन्द्रवंशावृत्तम् । अतः शुभेक्षितो बुधः राजयोगं कुरुत इत्यपि सूचितम् । तथा चोक्तम्—

"दिवौकसां पतेर्मन्त्री कुर्यात्पश्यन् बुधं नरम् ।
शिरोभिः शासनं यस्य धारयन्ति नृपा नृपम् ॥"

इति । वृषस्थचन्द्रोऽथवा बलयुक्तचन्द्रः शुभेक्षितश्चेद्राज्ययोगकर इत्यप्यूह्यम् । तथा चोक्तम्—

"इन्दुः स्वोच्चे पश्यन् करोति गुरुभार्गवौ नरं नृपतिम् ।
प्रणतारिपक्षमुच्छ्रितयशसं सौभाग्यवन्तं च ॥
अधिमित्रांशगतश्चन्द्रो दृष्टो दानवमन्त्रिणा ।
अनिशं कुरुते लक्ष्मीस्वामिनं भूपतिं नरम् ॥
स्वांशेऽधिमित्रभावे वा गुरुणा यदि दृश्यते ।
शशी महीपतिं कुर्याद्दिवसे नात्र संशयः" ॥

इति ॥ १७ ॥

"व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति" इत्युक्तगर्भोपनिषदमनुसृत्य निषेकलग्नवशात्प्रश्नलग्नवशाद्वा कुब्जादियोगानाह—

**सौम्यर्क्षांशे रविजरुधिरौ चेत्सदन्तोऽत्र जातः**
**कुब्जः स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ।**
**पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे**
**सन्धौ पापे शशिनि च जडः स्यान्न चेत्सौम्यदृष्टिः ॥१८॥**

इति । अत्र निषेककालेऽथवा प्रश्नकाले सौम्यर्क्षांशे बुधस्य राशौ अंशके वा रविजरुधिरौ शनिकुजौ चेत् तिष्ठतश्चेत् जातः सदन्तः दन्तयुतो भवति । शशिनि चन्द्रे स्वर्क्षे स्वक्षेत्रे कटके तनुगे लग्नस्थे मन्दमाहेयदृष्टे शनिभौमदृष्टे

जातः कुब्जः । मीने मीनराशौ लग्नसंस्थे लग्ने यमशशिकुजैर्वीक्षिते शनिचन्द्रकुजैरीक्षिते सति जातः पङ्गुर्भवति । पापे शशिनि च सन्धौ गण्डान्ते चेद् जातः जडः चैतन्यरहित इव भवति । सौम्यदृष्टिः शुभदृष्टिर्न स्याच्चेत् । एतद्योगचतुष्टयेऽपि योज्यम् ।

"अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः"

इति शुभदृष्ट्या सर्वेऽप्यशुभा योगा नश्यन्तीत्याचार्यस्य मतम् । मिश्रदृष्ट्या यथाबलं फलं भवति ।

वृत्तं मन्दाक्रान्ता । मन्दत्वमाक्रान्तत्वं चास्य वक्तव्यम् । शुभदृष्टिविरहिता ये अनिष्टफलदास्ते शुभदृष्टियुता इष्टफलदा इति भावः । एवं प्रथमयोगे शुभदृष्ट्या सदन्त इत्यनेन गजदन्तादिव्यापारकुशलो भवति । द्वितीयतृतीययोगयोः शुभदृष्ट्या गृहनिर्माणकुशलो भवति । तुर्ययोगे शुभदृष्ट्या आत्मज्ञानेन जडवद्भवतीति वक्तव्यम् ।

"सौम्यर्क्षेंशे" इति वक्तव्ये "सौम्यर्क्षांशे" इत्युपदिष्टवताऽऽचार्येण किं विवक्षितम् ? सौम्यः बुधः । तस्य ऋक्षौ मिथुनकन्ये । तयोः रविजरुधिरौ मिथुने शनिः कन्यायां कुजः अथवा मिथुने कुजः कन्यायां शनिश्चेज्जातस्य जननकाले एको दन्तो भवति । शनौ मिथुनांशगे कुजे कन्यायां वर्गोत्तमगे जातस्य जननकाले द्वौ दन्तौ भवतः । शनौ मिथुने वर्गोत्तमे कुजे कन्यायां वर्गोत्तमे जातस्य जननकाले त्रयो दन्ताः स्युः । "रुधिररविजौ" इति वासरक्रमं विहाय "रविजरुधिरौ" इति निर्देशात् रविजस्य मिथुनांशगत्वं रुधिरस्य कन्यांशगत्वं चादृते ।

"कुब्जः स्वर्क्षे" इति कुब्जत्वं मन्ददृष्ट्या पुरतो माहेयदृष्ट्या पृष्ठतश्चेति वाच्यम् ।

एवं "पङ्गुर्मीने" इत्यत्र पङ्गुत्वमपि शनिदृष्ट्या दक्षिणपादेन चन्द्रदृष्ट्या वामपादेन द्वाभ्यां द्वाभ्यां च वक्तव्यम्। यमशशिकुजैः सर्वैर्वीक्षिते पङ्गुत्वमाजानसिद्धं स्यात्। यमशशिभ्यां तु जननादनन्तरं निमित्तोद्भूतं भवति। भाग्याधिपस्य कुजस्य दृष्टेरितरदृष्ट्यभावेऽशुभत्वं नेष्यते यस्मात्

"होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा"

इत्यत्र गुरुं जानातीति गुरुज्ञः इति व्युत्पत्त्या "गुरुज्ञः भाग्याधिपः" इति व्याख्याय लग्नस्य भाग्याधिपदृष्ट्या न केवलमिष्टफलं वाञ्छन्ति किन्त्वनिष्टफलमपि नेच्छन्ति होराशास्त्रविदः।

"सन्धौ पापे" इत्यत्र चन्द्रे रवियुते बधिरत्वं दक्षिणश्रोत्रेण कुजयुते वामश्रोत्रेण च वाच्यम्। चन्द्रे पापत्रययुते बाधिर्यमाजानसिद्धं भवति। रविकुजावाग्नेयौ, अतस्ताभ्यां पापफलाधिक्यं शनिना पापफलाल्पत्वं च विवक्षितम् ॥ १८ ॥

वामनत्वाङ्गहीनत्वयोगावाह—

**सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने।**
**धीनवमोदयगैश्च दृगाणैः पापयुतैरभुजाङ्घ्रिशिराः स्यात् ॥१९॥**

इति। मकरान्त्यविलग्ने मकरलग्नस्य अन्त्यभागे लग्ने सौरशशाङ्कदिवाकरदृष्टे शनिचन्द्रसूर्यैर्दृष्टे वामनको भवति।

"अज्ञाते कुत्सिते चाल्पे ह्रस्वे संज्ञानुकम्पयोः।
प्रतिकृत्यामथ स्वार्थेऽप्येष कप्रत्ययो भवेत् ॥"

इति वचनादत्र वामनशब्दादल्पार्थे कप्रत्ययः। अतिह्रस्वो भवतीत्यर्थः। शनिदृष्ट्या शिरसः, चन्द्रदृष्ट्या तदधः ऊर्वोरुपरि सूर्यदृष्ट्या शेषस्य च वामनत्वं

वाच्यम् । वृत्तं चारणगीतम् । चारणगीतत्वं तु भगवत एव वाच्यम् । अतः प्रतिकृत्यां कप्रत्ययो वा स्यात् । अतोऽस्मिन् योगे जातो वामनप्रतिकृतिर्भवति । विष्णुतुल्यो भवतीति सारः । सौरशशाङ्कदिवाकरैर्बलिष्ठैरेवं स्यात् । मध्यबलैस्त्वतिह्रस्वो भवति । अनुकम्पायां वैष कप्रत्ययः स्यात् । वामनक इति वाममार्गान्वेषणेन आत्मज्ञानरहितो भवति । बलहीनैः सौरशशाङ्कदिवाकरैरेवं वाच्यम् ।

मकरान्त्यविलग्ने मकरे अन्त्ये वा लग्ने । अन्त्यमिति मीनराशेः संज्ञा । अतो मीनलग्नस्याप्येवं वक्तव्यम् ।

पापयुतैः कुजेन युतैः धीनवमोदयगैः दृगाणैश्च पञ्चमनवमलग्नद्रेक्काणैः सौरशशाङ्कदिवाकरदृष्टैः अभुजाङ्घ्रिशिराः विगतभुजपादशिरस्का भवन्ति जाताः । लग्नद्रेक्काणः एवं स्थितश्चेद् विशिरा भवति । पञ्चमद्रेक्काणश्चेद्भुजहीनो भवति । नवमद्रेक्काणश्चेत्पादहीनो भवति । सौम्यदृष्टिहीनत्व एवैवं वक्तव्यम् । तथा चोक्तं गार्गिणा—

"लग्नद्रेक्काणगो भौमः सौरसूर्येन्दुवीक्षितः ।
कुर्याद्विशिरसं तद्वत् पञ्चमे भुजवर्जितम् ॥
विपादं नवमस्थाने यदि सौम्यैर्न वीक्षितः ॥"

इति । योगस्य बलाधिक्येऽसंपूर्णप्रजाजननविषयं भवति । अन्यथा तत्तदङ्गानां तत्तदङ्गकार्यकौशलाभावो वक्तव्यः ।

पापयुतैः अत्र पापशब्देन राहुकेत्वोरपि ग्रहणम् । पापयुतैरेवं भवति । शुभयुतैः सौरशशाङ्कदिवाकरैर्वीर्यवद्भिश्च तत्तदङ्गस्य तत्तदङ्गकार्येषु कुशलत्वं च वक्तव्यमिति द्योत्यते ।

वृत्तं चारणगीतम् । अनेन बलयुक्तैर्ग्रहैर्वामनकत्वं विष्णुतुल्यत्वं द्योतयति । स महापुरुषो भवतीति भावः । एवमेव व्याख्यातम् ॥ १९ ॥

अथ नेत्रविनाशकयोगानाह—

**रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते**
**नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः ।**
**व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-**
**स्त्वशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः ॥ २० ॥**

इति । रविशशियुते सूर्यचन्द्रसहिते सिंहे लग्ने कुजार्किनिरीक्षिते कुजशनिभ्यां दृष्टे सति गर्भस्थः नयनरहितः अन्धो भवति । कुजार्क्योः सप्तमवीक्षणेन "दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ" इति वचनेन मातापित्रोरपि रोगो वक्तव्यः । अस्मिन् योगे सौम्यासौम्यैः गुरुकुजशनिभिः दृष्टे सति सबुद्बुदलोचनः नेत्ररोगी भवति । आदित्यस्य बुधशुक्रयोः सप्तमदृष्टेरसम्भवात् सौम्यशब्देन गुरुरेव निर्दिष्टः । पाददृष्टिरपि शुक्रस्यैव सम्भवति । न तु बुधस्य । कृष्णीययवनादिमतानुसारेण युत्यात्मकदृष्टिरपि गृह्यते चेत् सौम्यशब्दो बुधशुक्रयोरपि ग्राहको भवति । राहुकेतू अप्यसौम्यशब्दवाच्यौ भवतः । एवं चेद् असौम्यशब्देन कुजशनिराहुकेतवो गृह्यन्ते ।

व्ययगृहगतः निषेकलग्नात्प्रश्नलग्नाद्वा द्वादशगः चन्द्रः वामं वामनेत्रं हिनस्ति नाशयति । व्ययगृहगतः रविः सूर्यः अपरं दक्षिणं हिनस्ति । अनेन पूर्वोक्तयोगेऽपि सूर्येण दक्षिणाक्षिनाशः, चन्द्रेण वामाक्षिनाशश्चेति सिद्धम् । सूर्यस्य दक्षिणाक्षिकारकत्वं चन्द्रस्य वामाक्षिकारकत्वं च व्यञ्जिते ।

अशुभगदिताः अशुभग्रहैरुक्ता योगाः शुभेक्षिताः शुभैर्दृष्टाश्चेत् याप्याः अत्यन्तं दोषशून्या भवन्ति । सर्वेषामप्यनिष्टयोगानां शुभदृष्ट्या नाश इष्यते । शुभयोगापेक्षया शुभदृष्टेः शुभाधिक्यं व्यञ्जितम् ।

वृत्तं हरिणी । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी मता" इति लक्षणात् । हरिणः अस्य अस्तीति हरिणी चन्द्रः । रसयुगहययतियुतं

च वृत्तम् । युगसङ्ख्याक्षरैः "सिंहे लग्ने" इति चोक्तम् । अतो मेषवृष-मिथुनकर्कटेषु सिंहपूर्वेषु राशिषु चन्द्रे द्वादशे स्थिते वामाक्षिनाशो वाच्य इति सूचितम् । चतुर्षु केन्द्रेष्वन्यतमे वा चन्द्रे स्थिते कुब्जत्वाद्यनिष्टफलं भवतीत्यपि सूचितम् । तथा च कृष्णीये—

"होराकेन्द्रैः कुर्यादिन्दुर्जडबधिरकुब्जवामनकान् ।
मेषवृषमिथुनकुलीरे द्वादशभे वामकाणं तु ॥"

इति । रसयतियुतत्वात् षष्ठस्थश्चन्द्रोऽपि नयनदोषकृद्भवति । "निधना-रिधनव्ययस्थिताः" इति वक्ष्यति ॥ २० ॥

अथाधानलग्नवशात् प्रश्नलग्नवशाद्वा प्रसवकालमाह—

**तत्काल इन्दुसहितो द्विरसांशको य-**
**स्तत्तुल्यराशिसहिते पुरतः शशाङ्के ।**
**यावानुदेति दिनरात्रिसमानभाग-**
**स्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥ २१ ॥**

इति । तत्काले आधानकाले प्रश्नकाले वा इन्दुसहितः तत्कालचन्द्रेण युक्तः द्विरसांशकः द्वादशांशकः यः मेषादितः यावति द्वादशांशके तत्कालचन्द्रः स्थित इत्यर्थः । पुरतः भविष्यति काले तत्तुल्यराशिसहिते मेषादारभ्य तावता राशिना युक्ते शशाङ्के चन्द्रे । यावान् दिनरात्रिसमानभागः । रात्रिराशयः गोजाश्विकर्किमिथुनमृगाः इतरे दिनराशयः । दिनरात्रिसंज्ञकराशिषु यतम-स्त्रिंशांशः उदेति पूर्वस्यां दिशि उदयं प्राप्नोति । दिननिशोः दिनरात्र्योः तावद्गते तावत्प्रमाणनाडिकासु गतासु जन्म जननं प्रवदन्ति मुनय इति शेषः । निषेककालचन्द्रस्य द्वादशांशः प्रसवकालचन्द्रस्य राशिः निषेक-

कालदिनरात्रिसंज्ञकराशेस्त्रिंशांशसंख्या प्रसवकालदिनरात्रिगतनाडिकासङ्ख्या इति भावः ।

अनेन श्लोकेन बहवः प्रसवकाललग्ननक्षत्रादिनिर्णायकविधयः सूचिताः । एतद्विस्तरतो दर्शितं रुद्रविवरणे । यथा—

"तथा तत्कालेन्दुद्वादशांशकस्य नवधा खण्डितस्य गतागतवशेन प्रसवनक्षत्रमपि वक्तव्यमित्युक्तं भवति । 'तत्काल इन्दुसहितो द्विरसांशको य' इत्यत्र सांप्रदायिका योजनविशेषाः सन्ति । ते च यथाश्रुतमत्र लिख्यन्ते । तत्तुल्यराशिसहित इत्यत्र गणनारम्भराशिविशेषानुक्त्या मेषाश्विप्रथमत्वन्यायेनागतं मेषादितो गणनं विना तत्कालचन्द्राधिष्ठितद्वादशांशकराशिमारभ्यापि गणनं कर्तव्यमिति द्योत्यते । मेषादिगणनेन द्वादशांशकादिगणनेन च प्राप्तयोः प्रसवचन्द्रयोरैक्ये त्रिकोणसम्बन्धे वा सति निःसंशयेन वक्तव्यत्वं भवति । अयं न्यायोऽत्र सर्वेष्वपि योजनप्रकारेषु द्रष्टव्यः । 'स्फुटमिह भवति द्वित्रिसंवादभावात्' इत्याप्तवचनमत्र प्रमाणम् । 'बलयोगात् फलमंशकर्क्षयो'रित्युक्तमार्गेण राशिद्वादशांशकोक्तः प्रसवचन्द्रानयनप्रकारः चन्द्राधिष्ठितनवांशद्वादशांशकेनापि विचिन्तनीय इत्यत्र प्रदर्शितेन 'शकोय' इति शब्देन द्योत्यते । कथमिति चेत्, पञ्चदशघटिका हि नवांशकप्रमाणं, तत्र नवांशे द्वादशधा खण्डिते एको भागः एका नाडिका पञ्चदश विनाडिकाश्च भवन्ति । तस्य केन्द्ररूपेणाक्षरसङ्ख्यया निर्देशे शकोय इति निर्देश्यत्वं स्यात् । ततः शकोयशब्देनात्रान्यार्थमपि प्रसक्तेन नवांशकद्वादशांशोऽत्र ग्राह्य इत्युक्तं भवति । तत्रापि मेषादिगणनेन चन्द्राधिष्ठितनवांशकद्वादशांशकादिगणनेन च पूर्ववत्तुल्यराशिसहितप्रसवचन्द्रद्वयं संभवति । अत्र द्विरसांशको य इत्युक्त्या चान्योऽर्थो द्योत्यते । तद्यथा—द्विरसशब्देन द्विरसनो राहुः तस्य नवांशकद्वादशांशक इति शृङ्गग्राहिकया द्विरसांशकोयशब्देन राहुस्थितनवांशद्वादशांश उच्यते ।

स यद्राशिसंज्ञः स राशिरत्र तत्तुल्यराशिः। चन्द्रे तत्र भविष्यति च प्रसवश्चिन्तनीयः। द्विरसांशको य इत्यत्र द्विरसस्यांशकः द्विरसांशक इति राहुणाऽधिष्ठितं नवांशराशिं गमिष्यति। चन्द्रे प्रसूतिरिति द्विरसांशकवशाच्च द्विधा प्रसवचन्द्रानयनम्। अथ तत्काले द्विरसांशकोय इति योजने तत्कालराहुः क्षणिकराहुरपि गृह्यते। दिनगतनाडिकाः षष्ट्या गुणिता विनाडिकाः ताश्च षष्टिगुणिता गुर्वक्षराणि भवन्ति। तानि दिनगतगुर्वक्षराणि सहस्रेण हृत्वा राशयो लभ्यन्ते। शिष्टात् त्रिंशद्गुणिताद्भागाः तत्र शिष्टात् षष्टिगुणितात्कलाश्च लभ्यन्ते। एवमानीतं राशिभागकलात्मकं मण्डलाच्छोधितं क्षणिकराहुस्फुटं भवति। तस्य राहोरपि नवांशं वा नवांशद्वादशांशं वा गच्छति चन्द्रे प्रसूतिरिति च प्रकारद्वयम्। तत्काल इन्दुसहितो द्विरसांशको य इत्यत्र तत्काल इन्दुशब्देन क्षणिकेन्दुरुच्यते। तत्सहितो द्विरसांशकः द्वादशांशकः क्षणिकचन्द्रसंस्थितद्वादशांशक इत्यर्थः। स यद्राशिसंज्ञस्तत्तुल्यं तमेव राशिं गते चन्द्रे प्रसूतिरित्यर्थः। इत्येकः प्रकारः। अन्योऽपि प्रकारः। तत्काल इन्दुसहितो द्विरसांशको य इत्यत्र तत्कालशब्देन काललग्नमुच्यते। षड्गुणितो दिनगतकालो भागस्वरूपः सूर्यस्फुटेन संयुक्तः काललग्नं भवति। मीनमेषसन्धेरारभ्य पूर्वक्षितिजावधिर्घटिकामण्डलैकदेशः काललग्नमित्युच्यते। तत्रैकाया घटिकायाः षड्भागाः संभवन्ति, इति तत्कालशब्देन काललग्नमुक्तं भवति। तत्र काललग्ने इन्दुसहिते तात्कालिकचन्द्रेण युक्ते यो द्विरसांशकः द्वादशांशकः तत्तुल्यराशिं गते चन्द्रे प्रसवः स्यात्। तात्कालिकलग्नचन्द्रस्फुटयोगे यो द्विरसांशको द्वादशांशकः नवांशद्वादशांशो वा ताभ्यामपि प्रसवचन्द्रनिर्देश इति प्रकारद्वयं सम्भवति। तत्काल इन्दुसहित इत्यत्र तत्कालेन्दुरन्यथाऽप्यानीयते। तद्यथा—दिनगतनाडिकां विन्यस्य विनाडीकृत्य त्रिंशता हृत्वा राश्यादिफलं लभ्यते। तत्कुलीरादि तत्कालेन्दुः। तद्राशिं गते चन्द्रे

वा प्रसवः । अन्योऽपि प्रकारः । दिनगतविनाडिकासु पञ्चचत्वारिंशद्भिर्हृतासु राश्यादिफलं लभ्यते । तस्मिन् सिंहादितो गणिते यो राशिर्भवति तं राशिं गते चन्द्रे प्रसवः स्यात् । अन्योऽपि प्रकारः विनाडीकृतं दिनगतं पञ्चदशभिर्हृत्वा लब्धे राश्यादिफले गुलिकस्थितराशेरारभ्य विलोमेन गण्यमाने यो राशिर्भवति तं राशिं गते चन्द्रे वा प्रसवः स्यात् । अत्र तत्कालेन्दुद्वादशांशेन तत्कालेन्दुनवांशद्वादशांशेन च द्विधा प्रसवचन्द्रो दर्शितः । पुनः राहुस्थितनवांशेन तन्नवांशद्वादशांशेन च तथा क्षणिकराहुस्थितनवांशेन तन्नवांशद्वादशांशकेन चेति राहुवशादपि चतुर्धा प्रसवचन्द्रानयनमुक्तमित्यष्टधा भवति । क्षणिकेन्दुस्थितद्वादशांशकराशिना च एकः प्रकार इति नवधा । तत्काललग्नस्य तत्कालचन्द्रस्य च संयोजने जातेन द्वादशांशेन तन्नवांशद्वादशांशेन चेति द्वौ प्रकारावित्येकादशधा । पुनर्दिनगतवशाच्च पञ्च प्रकाराः । तत्र काललग्नतत्कालचन्द्रयोगद्वादशांशेन एकः । कर्कटकाद्यर्धनाडिकाचारेण द्वितीयः । सिंहादिपादोननाडिकाचारेण तृतीयः । लग्नादिपादनाडिकाचारेण चतुर्थः । गुलिकर्क्षाद्येकैकनाडिकाविलोमचारेण पञ्चमः । इति दिनगतवशात् पञ्च प्रकाराः । इति प्रसवचन्द्रानयनविषये महामुनिभिरुदाहृताः षोडशप्रकारा दर्शिताः । अत्र सांप्रदायिकः सप्तदशोऽप्यतिरहस्यभूतो योजनप्रकारोऽस्ति । तत्काल इन्दुसहितो द्विरसांशक इत्यत्र तत्कालेन्दुः प्रश्नकालचन्द्रः द्विरसशब्देन गुलिको गृह्यते । तत्कालद्विरसनः तत्कालगुलिक इत्यर्थः । तत्कालेन्दोस्तत्कालगुलिकस्य च अंशको य इत्युक्त्या नवांशद्वादशांश इत्युक्तं भवति । गुलिकस्य शकोयांशकाः गुलिकनवांशराशेर्विलोमेन गण्याः । चन्द्रस्य शकोयांशकाः अनुलोमेन गण्याः । तत्र गणनप्रकारे तयोर्योगो वा त्रिकोणबन्धो वा यस्य राशौ भवति तद्राशिसहिते शशाङ्के प्रसवं वदन्तीति सम्बन्धः । अस्मिन् प्रकारे पूर्वप्रदर्शितैः कैश्चित्संवादे सति निःसंशयेन

वक्तव्य इति । यावानुदेति दिनरात्रिसमानभाग इति लग्नराशिना दिनरात्रिज्ञाननिर्देशेन दिनकराधिष्ठितराशिज्ञानमपि लग्नेन भवतीति द्योत्यते । तद्यथा—उदयलग्नं विन्यस्य राशीनपास्य भागान् षष्ट्या हत्वा लिप्ताभिः संयोज्य त्रिभिर्हत्वा पञ्चाशता हृत्वा राश्यादिफलं लभ्यते । राशिभागकलात्मकं तत्फलं लग्नराश्यादि तत्प्रसवकालार्कस्फुटं भवति । अथवा लग्नराशौ गतनवांशकनाडिकाः सङ्कलय्य वर्तमाननवांशके गता नाडीर्विनाडीश्च संयोज्य नाडिकाः षष्ट्या हत्वा विनाडीकृत्य पञ्चसप्ततिभिः (हृत्वा) नवांशद्वादशांशराशयो लभ्यन्ते । शिष्टाद्भागाः कलाश्च लभ्यन्ते । तत्पूर्वानीतमेव प्रसवार्कस्फुटं भवति । अत्र केचित् प्रश्नकालचन्द्रस्फुटे उदयलग्नस्य भागाः कलाश्च संयोज्य तत्र यो नवांशद्वादशांशकः पञ्चसप्ततिविनाडिकाप्रमाणः प्राप्यते । तद्राशिगतमर्कं प्रसवार्कं ब्रुवते । अन्ये तु उदयलग्नं लिप्तीकृत्य तत्कालचन्द्रस्य सार्धोदिता नवांशद्वादशांशका यावन्तः तावत्या सङ्ख्यया हत्वा लब्धं राशिभागकलात्मकं फलं यत् तत् प्रसवार्कमाचक्षते । परे तु उदयलग्नस्य नवांशद्वादशांशकराशौ प्रसवार्कस्थितिं निर्दिशन्ति । प्रसवलग्नस्य निर्देशो यावानुदेति दिनरात्रिसमानभागस्तावद्गते दिननिशोरित्युक्तेन दिनगतप्रमाणेन रात्रिगतप्रमाणेन वा यथोद्दिष्टेन प्रसवार्केण वा रात्रौ चेत्, षड्राशियुक्तप्रसवार्केण वा स्वदेशोदयसंक्षुण्णमित्याद्युक्तप्रकारेणोदयलग्नमानीय कर्तव्यः । अत्र उदयलग्नस्थितो द्वादशांशको वा द्वादशांशकस्य नवांशकराशिर्वा प्रसवलग्नं भवेत् । बलवशेन वक्तव्यम् । अत्रापि तत्कालगुलिकत्रिकोणवर्गसम्बन्धवशान्निर्णयः । वर्गेषु च—

> " नवांशकं तु प्रथमं पश्चान्नवनवांशकम् ।
> नवांशद्वादशांशश्च द्वादशांशमतः परम् ॥
> चत्वार्येतानि कर्माणि कृत्वा लब्धं विचिन्तयेत् ।

नवांशको नवांशस्य नवांशद्वादशांशकौ ॥
द्वादशांशश्च लग्नेन्दुमान्दीनां बन्धसूचकाः ।"

इति वचनादेते यथोक्ताश्चत्वार एव ग्राह्याः । अत्र तत्कालेन्दुशब्देन आरूढं पृच्छकारूढं गृह्यते । तस्मात् पूर्वानीतेषु प्रसवचन्द्रराशिषु यो राशिरारूढ-राशित्रिकोणसंवादी भवति । तत्र राशौ प्रसवचन्द्र इति द्रष्टव्यम्" । इति ।

अयं श्लोकोऽध्यायेऽस्मिन्नन्त्यो भवितुमर्हति । कुतो ह्यस्यात्रोप-देशः । श्लोकस्यैकविंशत्वसिद्ध्यर्थम् । एकविंशत्वं प्राणभूतेन्द्रियमनसां सङ्घातात्मकस्य शरीरस्योपलक्षणम् । जातकशास्त्रे शरीरं चन्द्रमाः । मान्त्रिकवृत्तेन वसन्ततिलकेन सूक्ष्मशरीरस्यापि ग्रहणं व्यञ्जितम् । अतोऽत्र-त्येन्दुशब्देन स्थूलसूक्ष्मभेदेन द्विधा स्थितं शरीरं, अत एव द्विगुणीकृत-प्रष्ट्रुक्तसङ्ख्या विवक्षिता । तत्कालः इत्यपि पदच्छेदः । तत्कालघटिकेत्यर्थः । तत्कालः प्रश्नकालः सूतिकालो वा । स च इन्दुसहितः द्विरसांशकः द्वादशांशकः स्यात् । सूक्ष्मप्रसवकालजिज्ञासुना अह्नि सूर्याभिमुखेन रात्रा-वग्न्यभिमुखेन च प्रष्ट्रा देवतागुरुवन्दनपूर्वकमुक्तां सङ्ख्यां द्विगुणीकृत्य गतघटिकाः संयोज्य प्राप्तां सङ्ख्यां द्वादशभिर्हृत्वाप्तफलं मण्डलशोधनानन्तरं मेषादिक्रमेण राशिः । तस्मिन् चन्द्रे स्थिते प्रसवं ब्रूयादिति सारः । एषोऽतिरहस्यभूतोऽर्थः । गुरूपदेशतो ग्राह्यः ।

वृत्तं वसन्ततिलकम् । शक्करीच्छन्दः । अनेन कल्पः, अत एव मरणकालश्च सूचितः । तत्काल इति लग्नम् । इन्दुश्चन्द्रः । द्विरसांशकः मान्दिः । एतेषां स्फुटानामैक्येन तत्तुल्यराशिसहिते । तुल्येन राशिना सहिते लग्ने निर्याणं वदेत् । इन्दुसहितो द्विरसांशको यः तत्तुल्यराशिसहिते शशाङ्के इति निर्याणचन्द्रं मान्दीन्दुस्फुटैक्येन वदेदिति सूचितम् । तत्काल इति लग्नस्य कालस्वरूपस्य गुलिकस्य च सूचकः । द्विरसांशक इति लग्नमान्दि-

स्फुटैक्यद्वादशांश एतत्कल्पमनोरादिभूतस्य सूर्यस्य स्फुटं भवतीति सूचितम् । लग्नमान्दिस्फुटतो निर्याणमासं वदेदित्यर्थः ।

तथा चोक्तम्—

"प्राग्लग्नमान्दिस्फुटयोगभांशे निर्याणमासं प्रवदन्ति तज्ज्ञाः ।
निर्याणचन्द्रं गुलिकेन्दुयोगे राशिं च मान्दीन्दुविलग्नयोगे ॥"

इति ॥ २१ ॥

निषेककाललग्नवशाद् गर्भधारणे उपविष्टकनागोदरादित्वेन कालाधिक्यमाह—

**उदयति मृदुभांशे सप्तमस्थे च मन्दे**
**यदि भवति निषेकः सूतिरब्दत्रयेण ।**
**शशिनि तु विधिरेष द्वादशाब्दे प्रकुर्या-**
**न्निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या ॥ २२ ॥**

इति । मृदुभांशे मृदुः शनिः तस्य भं मकरः कुम्भो वा । तस्य अंशः तस्मिन् मकरांशे कुम्भांशे उदयति सति सप्तमस्थे मन्दे निषेकः भवति यदि सूतिः प्रसवः अब्दत्रयेण वर्षत्रयेण भवतीति शेषः । शशिनि चन्द्रे एवंविधश्चेत् चन्द्रे मकरनवांशे कुम्भनवांशे वा स्थितः, तस्मात् सप्तमे च मन्दः स्थितश्चेत् एष विधिः प्रसवं द्वादशाब्दे प्रकुर्यात् । अत्र स्त्रीणामृतुकालानुसारेण नाक्षत्रवर्षा विवक्षिता इत्येकः पक्षः । सौराब्द एवेति पक्षान्तरम् । चकारेण चतुर्थमपि केचिदिच्छन्ति ।

अध्यायमुपसंहरति—इह निगदितं अस्मिन्नध्यायोक्तविषयः सूतिकालेऽपि युक्त्या चिन्त्यं जन्मकालवशादपि युक्त्या चिन्त्याः । अपिशब्देन चिन्त्यं इति शब्देन च प्रश्नलग्नवशादप्येवं चिन्त्या इति व्यञ्जितम् ।

वृत्तं मालिनी । "शकुबुगुशुचराद्या वृद्धितो वीर्यवन्तः" इत्यस्य स्मारकम् । अनेनैवमाधानलग्नवशात् फलनिरूपणानन्तरं जन्मकालं निश्चित्य जन्मकालकुण्डलीसहितैर्जन्मकालतिथिनक्षत्रोडुदशादिभिर्जन्मकाल-फलमप्येवं चिन्त्यमिति सूचितम् ।

तथा च सारावल्याम्—

"इत्याधानं प्रथमं प्रसूतिकालं सुनिश्चितं कृत्वा ।
जातकविहितं च विधिं विचिन्तयेत्तत्र गणितज्ञः ॥"

इति । अत्र द्वाविंशतिः श्लोकाः । अत एव पादसंख्या अष्टाशीतिः । अध्यायश्च निषेकप्रतिपादकः । सूतिकालेऽपि इत्यपिशब्देन विवाहकाले इत्यपि सूचितम् । 'सप्तमस्थे च सौरौ' अथवा 'सप्तमस्थेऽर्कपुत्रे' इत्यनेनैवेष्टसिद्धौ मन्दशब्देन मन्दफलमथवा दुष्टफलं व्यञ्जितम् । एवं विवाहे आनुकूल्यचिन्तायां वधूनक्षत्रपादाद्वरस्य अष्टाशीतितमः पादो नेष्यते इत्यवगन्तव्यम् ॥ २२ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
निषेककालो नाम चतुर्थोऽध्यायः

---

# जन्मकाललक्षणाध्यायः ॥ ५ ॥

प्रलम्बहन्ता विजयं प्रदद्यात्तथैव गोपालकुलेश्वरोऽपि ।
ययोश्चरित्रामृतपानमत्तो मोक्षश्रियामप्यकृतादरः स्यात् ॥

एवं निषेकलग्नवशाद्गर्भस्थस्य तस्य पित्रोश्चातिविस्मापनानि फलानि निरूप्य, अधुना आधानलग्नवशाद्वा,

"गोलो नाडी वलयं यष्टिः शङ्कुर्घटीचक्रम् ।
चापं तुर्यं फलकं धीरेकं पारमार्थिकं यन्त्रम् ॥"

इति सिद्धान्तशिरोमणौ भास्कराचार्योक्तयन्त्रैर्वा कुशाग्रधिया निर्णीतस्य जन्मलग्नस्य पित्रादिदशाविशेषेण सूतिकागृहशयनदीपोपसूतिकादिवशाच्च पुनरपि स्फुटीकरणार्थं जन्मकाललक्षणमाह । तत्रादौ पितुः परोक्षस्य जातस्य लक्षणमुच्यते—

**पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति ।**
**विदेशस्थस्य चरभे मध्याद्भ्रष्टे दिवाकरे ॥ १ ॥**

इति । इन्दौ चन्द्रे लग्नं अपश्यति । दिवाकरे सूर्ये । मध्यात् दशमात् भ्रष्टे पतिते । अत्र मध्यशब्देन वियन्मध्यं गृह्यते । मध्याह्नात्परतोऽर्धरात्रात्पूर्वमित्यर्थः । परोक्षस्य पितुः । जातः भवति । अत्र विशेषमाह । चरभे मध्याद्भ्रष्टसूर्ये चरराशौ स्थिते जातो विदेशस्थस्य देशान्तरगतस्य पितुः पुत्रो भवति । प्रसवसमये पिता विदेशस्थितो भवतीत्यर्थः । चरभे इति स्थिरोभययोरप्युपलक्षणम् । एवं मध्याद्भ्रष्टसूर्ये स्थिरभे स्वदेशस्थस्य पितुः

परोक्षे जातो भवति । उभये सूर्ये पितुः स्वदेशविदेशयोर्मध्यवर्तित्वं वाच्यम् । प्रश्नेऽपि चरलग्नवशात् लग्नाधिपस्य मध्याद्भ्रष्टत्ववशाच्च यात्राविषयकत्वं प्रश्नस्य वक्तव्यम् । तथा च कृष्णीये—

"चरराशौ तु विलग्ने द्रेक्काणे वा चरांशकेऽभ्युदिते ।
मध्याच्च्युते ग्रहे वा प्रवासचिन्तां विजानीयात् ॥" इति ।

प्रवासस्य निरुपद्रवत्त्वादिकं तु लग्नस्थशुभाशुभग्रहैर्वाच्यमित्यपि सिद्धमेव । अत एव कृष्णीये—

"निरुपद्रवप्रवासः शुभग्रहैर्वाञ्छितार्थसिद्धिकरः ।
त्रासभयपरिक्लेशाः पापैरुदयस्थितैर्वाऽपि ॥" इति ।

'परोक्षस्य पितुः' इत्युक्त्या प्रत्यक्षपितुर्व्यतिरिक्ता दत्तादिपितरो निर्दिष्टा इति द्योत्यते । अनेनास्मिन् योगे वक्ष्यमाणयोगत्रये च ग्रहबलाबलवशाद्दत्तादिसुतत्वमपि वाच्यम् ।

अत्र लग्नमिन्दावपश्यतीति चन्द्रस्य क्वचित्पितृकारकत्वं व्यञ्जितम् । अतः सूर्यस्यापि क्वचिन्मातृकारकत्वं वाच्यम् । अतः सूर्यचन्द्रावेकराशावेकांशकगतौ चेद् जातो द्विमातृपितृको भवतीति व्यञ्जितम् । तथा चोक्तम्—

"रविचन्द्रौ यदेकस्थावेकांशकसमन्वितौ ।
द्विमातृभिरसौ बालो द्विपितृभ्यां प्रपोषितः ॥" इति ।

चरभ इति मृत्युगुलिकयोर्योगस्याप्युपलक्षणम् । सूर्ये मृत्युगुलिकयुते पितुर्निर्याणं वाच्यम् । सूर्यस्य केवलगुलिकयोगे पितू रोग एव वाच्यः ।

दिवाकरे इति प्रयोगसामर्थ्याद्दिवानिशाराशिवशात्पित्रादीनां सन्निधानासन्निधाने च वाच्ये इति व्यञ्जितम् । दिवाराशौ लग्ने मध्या-

द्भ्रष्टशनेः पितृव्यस्य सूर्यात्पितुः शुक्रान्मातुश्चन्द्रान्मातृष्वसुश्च, त्रिराशौ लग्ने शनेः पितुः सूर्यात्पितृव्यस्य चन्द्रान्मातुः शुक्रान्मातृष्वसुश्च सन्निधानासन्निधाने वक्तव्ये ।

भाण्डप्रश्ने प्रश्नलग्नात् तन्निर्माणकाललग्नाद्वा कुलालपतिं पितरं परिकल्प्य चक्रभ्रमणादि मातरं परिकल्प्य मध्याद्भ्रष्टदिवाकरात्तस्य सन्निधानासन्निधाने वाच्ये । एवमितरेषामप्यूह्यम् ।

लग्नमिन्दावपश्यतीत्यत्र लग्नदृष्टिरपि विवक्षिता । यथा श्रीरामस्य जातके लग्नचन्द्रयोरेकराशिस्थितिः । नवमीपुनर्वसूयोगात् सूर्यस्य मीनराशिस्थितिरपि वक्तव्येति पूर्वमेवोच्चराशिकथनश्लोकव्याख्यानावसर उक्तम् । अतोऽस्य जातके लग्नदृष्टयनङ्गीकारपक्षे लग्नस्य चन्द्रदृष्टयभावान्मीनस्थसूर्यस्यापि मध्याद्भ्रष्टत्वाच्च श्रीरामचन्द्रस्यापि पितृपरोक्षजातत्वं वाच्यम् । सूर्यस्योभयराशिस्थितिवशात् पितुः स्वदेशविदेशयोरन्तरालवर्तित्वमपि भवति । प्रतिक्षणं प्रियसुतजननं प्रतीक्षता चक्रवर्तिना अयोध्याया निर्गमनमसम्भाव्यमेव । परं तु सद्य एव जातकर्मादि तेन कृतमिति च श्रीमद्रामायण उक्तम् । अतोऽनेनापि कृष्णीययवनमतानुसारेण लग्नदृष्टिराचार्यसम्मतेत्येव मन्यामहे ।

अनुष्टुप्छन्दः । तच्च सूर्यदैवत्यम् । सूर्यश्च पितृकारकः । अनेन चन्द्रस्य 'लग्नमिन्दावपश्यति' इति व्यञ्जितपितृकारकत्वं क्वचिद्भवतीति सूचितम् । अनुष्टुप्छन्दसा आत्मकारकस्य सूर्यस्य चरादिराशिस्थितिवशाज्जातस्यापि विदेशादिनिरतत्वं वाच्यमिति सूचितम् ॥ १ ॥

अथ योगान्तराण्याह—

**उदयस्थेऽपि वा मन्दे कुजे वाऽस्तं समागते ।**
**स्थिते वाऽन्तः क्षपानाथे शशाङ्कसुतशुक्रयोः ॥ २ ॥**

इति । मध्याद्भ्रष्टे दिवाकरे सति मन्दे उदयस्थेऽपि वा लग्ने वा इत्येको योगः । मध्याद्भ्रष्टे दिवाकरे कुजे वा अस्तं समागते सप्तमस्थाने इति द्वितीयो योगः । मध्याद्भ्रष्टे दिवाकरे क्षपानाथे चन्द्रे शशाङ्कसुतशुक्रयोः बुधशुक्रयोः अन्तः मध्ये स्थिते वा इति तृतीयो योगः । एतेषु जातः पितुः परोक्षे जातः । पितुर्विदेशस्थत्वादिस्थितिस्तु सूर्यस्य चरादिगृहवशाद्वाच्या ।

लग्नमिन्दावपश्यत्येव योगत्रयस्यापि प्रवृत्तिं केचिदिच्छन्ति न तु मध्याद्भ्रष्टे दिवाकरे, तदयुक्तम् ।

प्रथमयोगे पितृकारको मन्दः क्लीबग्रहः, तस्य लग्नस्थत्वं परोक्षस्थ-दत्तादिपितॄन् सूचयति । द्वितीययोगे कुजस्य सप्तमस्थितिः स्वमातुरस्तं-गतत्वं प्रदर्श्य जातस्य दत्तादित्वं सूचयति । तृतीययोगे मातृकारकचन्द्रस्य नपुंसकबुधस्य शुक्ररूपशुक्रस्य च मध्ये स्थितिर्जातस्य द्विपितृत्वं दर्शयति । अतः पूर्वोक्तप्रकारेणैषु योगेष्वपि ग्रहाणां बलाबलवशाद् विशेषात्पितृस्थानस्य बलाबलवशाच्च जातस्य दत्तादिलक्षणं वक्तव्यम् ।

सूर्यदैवत्यमानुष्टुभं छन्दः । अनेन कुजस्य शनेश्च पितृपक्षीयत्वं व्यञ्जितम् ।

"स्थिते वाऽन्तः क्षपानाथे शशाङ्कसुतशुक्रयोः,"

इति क्षपानाथशब्दप्रयोगसामर्थ्याच्चन्द्रस्य मातृकारकत्वं तस्य पक्षवर्तिनोः शुक्रबुधयोर्मातृपक्षीयत्वं च व्यञ्जितम् । एवं पापयोः पितृपक्षीयत्वं शुभयोर्मातृ-पक्षीयत्वं च । एवं कथनाद्गुरोरपि मातृपक्षीयत्वं सूचितम् । गुरुः जीवः मातैव जननोन्मुखजीवं धारयति । अनेनापि गुरोर्मातृपक्षीयत्वं सिद्धम् । अत्र शनिः पितृव्य इति पूर्वमेवोक्तम् । कुजस्तु ज्ञातिरित्यूह्यम् । प्रथमार्धेन विषमस्थानयोः पुरुषग्रहोक्त्या द्वितीयार्धेन स्त्रीग्रहोक्त्या च ओजराश्यंशक-युतैर्ग्रहैस्तत्तत्पक्षीयाः पुरुषाः, युग्मराश्यंशकयुतैः स्त्रियश्च वक्तव्या इति व्यञ्जितम् । तथा च कृष्णीये—

" पितृपक्षौ भौमयमौ मातुः पक्षा बुधौशनाङ्गिरसः ।
पुंग्रहराश्योर्विषमाः स्त्रीग्रहराश्योः समाख्याताः ॥ "

इति । पुंग्रहस्त्रीग्रहराशिवशाद्वा पुंस्त्रीविभागः कर्तव्यः ॥ २ ॥

अथ सर्पवेष्टनलक्षणमाह—

**शशाङ्के पापलग्ने वा वृश्चिकेशत्रिभागगे ।**
**शुभैः स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा ॥ ३ ॥**

इति । शशाङ्के चन्द्रे पापलग्ने पापस्य राशौ लग्ने वृश्चिकेशत्रिभागगे भौमस्य द्रेक्काणे च स्थिते स्वायस्थितैः द्वितीयैकादशभावगैः शुभैः जातः सर्पः तद्वेष्टितोऽपि वा भवति । तथा च गार्गिः—

" भौमद्रेक्काणगे चन्द्रे शुभैरायधनस्थितैः ।
सर्पस्तद्वेष्टितस्तद्वत्पापलग्ने विनिर्दिशेत् ॥ " इति ।

अथवा शुभैः स्वायस्थितैः शशाङ्के पापलग्ने वा जातः सर्पस्तद्वेष्टितो वा भवति । शुभैः स्वायस्थितैः शशाङ्के वृश्चिकेशत्रिभागगे जातः सर्पस्तद्वेष्टितो वा भवति । उद्धृतगार्गिवचनेनाप्येवं भवति । यथा भौमद्रेक्काणगे चन्द्रे शुभैरायधनस्थितैः सर्पस्तद्वेष्टितः तद्वत् शुभैरायधनस्थितैः चन्द्रे पापलग्ने विनिर्दिशेदिति ।

यद्येकयोग एवोक्तः मेषस्य प्रथमद्रेक्काणः सिंहस्यान्त्यद्रेक्काणो वृश्चिकस्याद्यद्रेक्काणः क्षीणचन्द्रश्चेत् कटकस्य द्वितीयद्रेक्काणश्च विवक्षिताः । भूमिजस्य त्रिभागगे इत्यनेनैव भौमद्रेक्काणत्वे सिद्धे कुतोऽस्य स्थाने वृश्चिकेशत्रिभागगे इत्युक्तमिति चेदुच्यते । वृश्चिकस्य प्रथमद्वितीयौ द्रेक्काणौ मीनान्त्यद्रेक्काणश्च सर्पद्रेक्काणाः । अत्र वृश्चिकेश इत्युक्त्या वृश्चिकद्रेक्काणत्वेनैव सर्पत्वं कथितम् । शशाङ्कस्य पापलग्नगतत्वमपि सर्पत्वप्रदायकम् । अथवा शशाङ्कस्य राह्वादि-

पापयुतलग्नगतत्वं विवक्षितम् । अनेन वृश्चिकद्रेक्काणेन चन्द्रस्य पापलग्नगत्वेन वा सर्पत्वं तद्वेष्टितत्वं वा भवतीति वक्तव्यम् । "क्रूरग्रहैः सुबलिभिः" इत्युक्तलक्षणमस्ति चेद् वियोनित्वं संभवति । तदैव सर्पत्वं वक्तव्यम् । अन्यथा सर्पवेष्टितत्वं वाच्यम् । अपिशब्दप्रयोगान्नालवेष्टितो वा भवेदित्यूह्यम् । क्रूरग्रहैः सुबलिभिः विबलैः सौम्यैर्वा सर्पवेष्टितत्वं नालवेष्टितत्वं वा वाच्यम् । तथापि क्रूरग्रहैः सुबलिभिः सौम्यैर्विबलैश्चास्मिन् योगे जातस्य सर्पस्येव क्रूरस्वभावत्वं विषविद्याकौशलत्वं सर्पवेष्टितशरीरत्वप्रदर्शनसामर्थ्यं च भवतीति दर्शयितुमात्मभूतसूर्यदेवताकानुष्टुप्छन्दः प्रयुक्तमाचार्येण ।

वृश्चिके शत्रिभागगे इत्यपि पदच्छेदः । वृश्चिकशब्देन तदीशः कुजः गृह्यते । श इति "शकुबुगुशुचराद्या" इत्युक्तप्रकारेण शनिः । एवं कुजे शनिद्रेक्काणे स्थिते स्वायस्थैः शुभैः सर्पजननं सर्पवेष्टितत्त्वं च भवति ।

पुनः वृश्चिकेशत्रिभागगे इत्यत्र वृश्चिकोऽष्टमराशिः । वृश्चिकादीनां विषजन्तूनामीशत्वं राहोः । अतः वृश्चिकेशशब्देन रन्ध्रेशराह्वोर्युतिर्विवक्षिता । त्रिभागगे त्रि त्रयः, भ सप्तविंशतिः., अगः सप्त, सङ्कलनेन सप्तत्रिंशत् लग्नमित्यर्थः । अतः त्रिभागगे लग्ने इत्यर्थः । एवं रन्ध्रेशयुते राहौ लग्ने जातः सर्पवेष्टितो भवतीत्यर्थः । तथा च जातकपारिजाते—

"सराहौ रन्ध्रपे लग्ने जातः स्यात्सर्पवेष्टितः" इति ।

वृश्चिकेशत्रिभागगे इति सर्वद्रेक्काणानामुपलक्षणम् । प्रश्ने द्रेक्काणेन तदीशेन च चिन्त्यमिति सूचितम् । एतद्धातुमूलजीवद्रव्यचिन्तायां योज्यम् । उक्तं च कृष्णीये—

"चापास्त्रदण्डधारिषु भीषणवित्रासयत्सु भागेषु ।
समरास्त्रचोरचिन्तादर्शनमथवात्र चोराणाम् ॥"

" दण्डामिषयष्टिधराः शाखाफलमूलधारिणश्च तथा ।
द्रेक्काणा धान्यकरा वृक्षसमीपाश्रयाश्चैव ॥ "
" चन्द्रश्च चतुष्पदस्थो द्रेक्काणो दण्डपाणिरथ लग्ने ।
रविरपि चतुष्पदे स्याच्चतुष्पदानां भवेच्चिन्ता ॥ "
" द्विपदचतुष्पदविपदाः सङ्कुलपादाश्च चिन्तिता ज्ञेयाः ।
द्रेक्काणसदृशरूपा ग्रहरूपा बलाबलं ज्ञात्वा ॥ " इति ।

तद्वेष्टितोऽपि वा इत्यनेन नालवेष्टितत्वमपि वाच्यमिति पूर्वमेवोक्तम् । अनुष्टुप्छन्दः । अनेन पितृस्थानीयानां पितृमातृमातुलानां सूर्यस्य आत्मकारकतया स्वस्य च नालवेष्टनमनिष्टफलदमिति सूचितम् ।

शुभैः स्वायस्थितैः इत्यत्र स्व, आय इति द्वितीयैकादशौ । सु, आय, इत्यक्षरसङ्ख्यया सप्तमदशमौ । स्वाय इति चतुर्थलग्ने च । एवं धनायकेन्द्रव्यतिरिक्तस्थाः शुभा वियोनिं कुर्युरित्यर्थः । तथा च कृष्णीये—

" कुर्युः शुभा वियोनिं धनायकेन्द्राश्रिताः पुनर्न स्युः " इति ॥ ३ ॥

कोशवेष्टितयमललक्षणमाह—

**चतुष्पदगते भानौ शेषैर्वीर्यसमन्वितैः ।**
**द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ ॥ ४ ॥**

इति । भानौ सूर्ये, चतुष्पदगते चतुष्पाद्राशिगते, शेषैः इतरग्रहैः, वीर्यसमन्वितैः वीर्यसहितैः, द्वितनुस्थैश्च उभयराशिगतैश्च, कोशवेष्टितौ यमलौ भवतः जरायुवेष्टितौ यमलौ जायेते । जरायुणा सहैव जायेते इत्यर्थः । कोशवेष्टितौ इत्युक्तत्वाद् द्वावपि धनिनौ भवत इत्यपि सूचितम् ।

शेषैर्वीर्यसमन्वितैरिति वियोनिजन्मव्यावृत्त्यर्थम् । आनुष्टुभं छन्दः । पित्राद्यरिष्टं सूचयति । तन्निवारणाय कोशवेष्टनशान्तिः कर्तव्येति व्यञ्जितम् ॥ ४ ॥

अथ नालवेष्टनलक्षणमाह—

**छागसिंहवृषे लग्ने तत्स्थे सौरेऽथवा कुजे ।**
**राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ ५ ॥**

इति । छागसिंहवृषे लग्ने मेषे सिंहे वृषे वा लग्ने, सौरे शनौ, अथवा कुजे, तत्स्थे लग्नगते, जातः राश्यंशसदृशे लग्ननवांशराशिसदृशकालावयवे, नालवेष्टितः नाभिनालेन वेष्टितो भवति । नालवेष्टनमितरवेष्टनस्याप्युपलक्षणम् । स्वोच्चस्वक्षेत्रादिबलयुतेन कुजेन स्वर्णादिमेखलाबन्धो वाच्यः । बलयुक्तशनैश्चरेण तन्त्रानुष्ठानादिव्यापारसहितत्वं वाच्यम् ।

अत्र सौरे सूर्यजभूच्छायारूपराहौ लग्ने कुजे च स्थिते जातो नालवेष्टितः । अथवा कुजे भूच्छायारूपराहौ सौरे शनौ च लग्ने जातो नालवेष्टितः स्यात् । सूर्यदैवत्यानुष्टुभच्छन्दसा रवियुक्तराहुरपि लग्नस्थो नालवेष्टनं कुरुत इत्यूह्यम् । अथवा इत्यनेन सौरकुजादिवीक्षणेनापि लग्नस्थपापो नालवेष्टनं करोतीत्यपि सूचितम् । तथा च जातकपारिजाते—

"लग्ने सपापे बहुपापदृष्टे
राहुध्वजाभ्यां सहितेऽथ तत्र ।
पापग्रहाणां तु विलग्नभे वा
जातो नरो नालविवेष्टिताङ्गः ॥" इति ।

छागसिंहवृष इति प्रथमपञ्चमद्वितीयराशयः, सङ्कलनेन अष्टमो भवति । अतोऽनेन अनुष्टुप्छन्दसा च रन्ध्रेश्वरो गृह्यते । तस्मिन् लग्ने सौरादिपापयुते जातो नालवेष्टितो भवति । सर्पेण वा वेष्टितो भवति । तथा च जातकपारिजाते—

"रन्ध्रेश्वरे पापयुते विलग्ने
जातोऽहिभिर्वेष्टितदेहवान् स्यात् ॥" इति ।

मेषसिंहवृषे इत्येतत्स्थाने कुतश्छागसिंहवृषे इत्युक्तमिति चेदुच्यते। छ इति छत्रं तमागच्छति इति छागः। अतश्छाग इति छत्रराशिः। छाग इत्यजमेषादीनां तच्छत्रराशीनां च वशात्तज्जातीयजातिश्च। अतो नालवेष्टन-रूपबन्धने सूचितचतुष्पदानां च चिन्ता कर्तव्येति द्योत्यते। तथा च कृष्णीये—

"मेषस्याजो धनुषः खरोष्ट्रतुरगा वृषस्य गोजातिः।
मांसाशिमृगाः सिंहे चान्योन्यस्य समागमेऽप्येवम्॥
एतेषामुपरि गते मीने तुरगाष्टमे त्वजाविः स्यात्।
एणे मकरे द्रोणिः कुलीरके मानुषेषु तज्जातिः॥" इति।

छागसिंहवृष इति चतुष्पाद्राशिभिश्चतुष्पाच्चिन्ताविषयकमेतदिति सूचितम्। अनेनैव कुलीरमानुषेषु तज्जातिरित्यपि सिद्धम्। छागसिंहवृषे इति राशित्रयोक्त्या उदयेन धातुद्रव्यचिन्ता आरूढेन मूलद्रव्यचिन्ता छत्रेण मानुषचिन्ता च कर्तव्येति पक्षान्तरस्यापि ध्वनिः। छागसिंहवृषे लग्ने सौरेऽथवा कुजे इत्यनेनैवेष्टसम्पत्त्या तत्स्थे इति निर्देशो ग्रहाणां स्वक्षेत्र-स्थितिवशादपि पूर्वोक्तप्रकारेण चतुष्पदचिन्ता कर्तव्येति सूचनार्थम्। तस्मिन् तस्य स्थाने स्वक्षेत्रे तिष्ठतीति तत्स्थशब्दस्य व्याख्या कार्या। छागसिंह इति त्रिकोणं सिंहवृष इति केन्द्रश्चापि विवक्षितौ। अतः केन्द्रत्रिकोणे राशीश्वराणां स्वक्षेत्रस्थितिवशाच्च चतुष्पदचिन्ता कर्तव्येति सूचितम्। तथा च कृष्णीये—

"अस्मिन् योगे शशिनि स्वक्षेत्रगते खरोष्ट्रमहिषाणाम्।
सौम्ये खरस्य सूर्ये वानरमार्जारनकुलानाम्॥
"अश्वस्य गुरौ भौमेऽजाविकमृगमर्कजे च मृगजन्म।
पशुजन्म मृगे वाच्यं स्वर्क्षस्थेषु ग्रहेषूक्तम्॥" इति।

छाग इति प्रथमराशित्वाल्लग्नम्। अनुष्टुप्छन्दसा सिंह इति तेन मूलत्रिकोणवान् सूर्यः। वृष इति तेन मूलत्रिकोणवान् चन्द्रः। लग्नसूर्य-चन्द्राणां त्रयाणामपि लग्नत्वात् समुच्चयार्थं लग्नमित्युक्तम्। तदिति ब्रह्म। तत्स्थः जीवः नरः। तत्स्थे नरराशिगते बलवति चेत्यर्थः। नालवेष्टित इति बन्धसूचकतया चतुष्पादिति लब्धम्। अतः सौरेऽथवा कुजे इति निर्देशादनुक्तानां सौम्यानां विबलैश्च सौम्यैरिति दुर्बलत्वं व्यञ्जितम्। अनेन बलिषु लग्नार्कचन्द्रेषु नरराशिगतेषु, सौम्येषु दुर्बलेषु च चतुष्पाच्चिन्ता कर्तव्येति भावः।

तथा च कृष्णीये—

"होरेन्द्वर्का नरराशिगताः सौम्येषु दुर्बलस्थेषु।
कुर्वन्ति जन्म बलिनश्चतुष्पदानां विभागेन॥" इति।

नालवेष्टित इति प्रश्ने बन्धोऽपि क्रूरराश्यंशकद्रेक्काणैः भुजङ्गादिद्रेक्काणैः पापदृष्टिभिश्च वक्तव्य इति सूचितम्। तथा च कृष्णीये—

"सौरद्रेक्काणे वा भुजङ्गपरिवेष्टितेऽथवा लग्ने।
शशिसौराभ्यां दृष्टे बन्धनमिति वाच्यमादेशे॥
पापक्षेत्रेषु यमे त्रिकोणचतुरस्रसप्तमेषु गते।
क्रूरैर्निरीक्ष्यमाणे बन्धोऽस्तीत्यादिशेत्क्षिप्रम्॥" इति।

सदृशे दृशा समेते इत्यर्थः। दृशो नालवेष्टनमन्धत्वसूचकम्। सूर्यदैवत्यं छन्दः। रात्रिबलग्रहौ शनिकुजौ। तयोश्छागसिंहवृषलग्नस्थित्या अन्धत्वकथनेन छागसिंहवृषाणां महानिशान्धत्वं सूचितम्। पूर्वार्धेऽनुक्ता मिथुनकर्कटकन्याराशयो दिवान्धा इत्यूह्यम्।

उक्तं च जातकपारिजाते—

"महानिशान्धाः क्रियगोमृगेन्द्रा
मध्यन्दिने कर्कटयुग्मकन्याः ॥" इति ।
अनेनैव बधिरपङ्गुराशयोऽपि सूचिताः ॥

तथा च जातकपारिजाते—

"पूर्वाह्णकाले बधिरौ तुलाली
धन्वी मृगाख्यश्च तथाऽपराह्णे ।
मृगाननश्चापधरश्च पङ्गुः
सन्धिद्वये नाशकरौ भवेताम् ॥" इति ।

अनुष्टुप्छन्दसा अष्टमो ग्रहो राहुरपि सूचितः । राहौ लग्ने च नालवेष्टितत्वं वाच्यमिति व्यञ्जितम् ॥ ५ ॥

अथ जारजातलक्षणमाह—

**न लग्नमिन्दुं च गुरुर्निरीक्षते**
**न वा शशाङ्को रविणा समागतः ।**
**सपापकोऽर्केण युतोऽथवा शशी**
**परेण जातं प्रवदन्ति निश्चयात् ॥ ६ ॥**

इति । गुरुः लग्नमिन्दुं च लग्नं चन्द्रं वा न निरीक्षते न पश्यति, शशाङ्को वा रविणा सूर्येण न समागतः । तथापि शशी चन्द्रः सपापकः पापसहितः । अर्केण सूर्येण युतोऽथवा यदि जातं निश्चयात् परेण जारेण जातं प्रवदन्ति, मुनय इति शेषः । लग्नं गुरुदृष्टिरहितं चन्द्रश्च गुरुदृष्टिरहितः, चन्द्रश्च सूर्येण न युक्तो यदि भवेत् तदा जातो जारजः । लग्नं गुरुदृष्टश्चेन्न जारजः । इन्दुर्वा गुरुदृष्टश्चेन्न जारजः । गुरुदृष्ट्या

बीजस्य शुद्धिर्व्यज्यते । लग्नेन्द्वोर्गुरुदृष्टयभावेऽपि मातृकारकचन्द्रस्य पापसंबन्धं विना पितृकारकसूर्येण योगेनापि जारजत्वं निषिध्यते । सूर्यचन्द्रयोर्योगेऽपि चन्द्रस्य पापसंबन्धान्मातुः पापत्वं भवति । अत्र गुरुशब्देन पितृकारकः सूर्यो वा ग्राह्यः । अतः सूर्यदृष्टे मातृकारके चन्द्रेऽपि मातुः पितृसंयोग एव वाच्यः । अतश्चन्द्रस्य सूर्यदृष्टिरपि जारजत्वं निवर्तयति यदि चन्द्रः पापयुतो न भवति । गुरुशब्देन सूर्योऽप्याचार्येण विवक्षित इति दर्शयितुमेव बालारिष्टाध्याये आचार्येणोक्तस्य "गुरुणा निरीक्षितः" इत्यस्य स्थाने "रविणा निरीक्षितः" इति सारावलिकृतोक्तम् ।

गुरोर्लग्ने पूर्णदृष्टिः पूर्वमेवोक्ता । अतो गुरुचन्द्रयोगोऽपि निरीक्षणेन विवक्षितः । निश्चयादित्यस्य निर्गतचयादित्यर्थः । चय इत्यक्षरसङ्ख्यया षोडश भवति । षोडशवर्गेऽपि गुरुसम्बन्धरहिते लग्ने चन्द्रे च परजातत्वमिष्यते ।

अत एव जातकपारिजाते—

"गुरुक्षेत्रगते चन्द्रे तद्युक्ते वाऽन्यराशिगे ।
तद्द्रेक्काणे तदंशे वा न परैर्जात इष्यते ॥"
"लग्नं शशाङ्कं सुरराजमन्त्री
न वीक्षते नैकगृहस्थितो वा ।
न जीववर्गेग युतं तदानीं
जातं वदेदन्यसमागमेन ॥" इत्युक्तम् ।

पितृकारकस्य सूर्यस्य मातृकारकसम्बन्धेऽपि पापसंयोगवशाज्जारजत्वमिष्यते । पापशब्दप्रयोगात् कुजापेक्षया शनियोगस्य पापाधिक्यम् । तस्मादपि राहुकेत्वोः । मातृस्थानाधिपेनापि जारजत्वं चिन्त्यम् । तथा च जातकपारिजाते—

" परस्परक्षेत्रगतौ तु होरा-
रसातलेशौ यदि जन्मलग्नात् ।
लग्नेश्वरो वा हिबुकेश्वरो वा
ध्वजाहियुक्तो जननं परेण ॥ " इति ।

वृत्तं वंशस्थम् । जगतीच्छन्दः । अनेनौरसादयो द्वादश पुत्रा अप्येवं चिन्त्या इति सूचितम् । शुभराशिगुरुसंबन्धवशादौरसः, बुधशनिसंबन्धाद्दत्तः क्षेत्रजः पौनर्भवश्च, चन्द्रशुक्राभ्यां कर्णजनकसूर्येण च कानीन इत्यादयश्चिन्त्याः ।

तथा च जातकपारिजाते—

" लग्ने वा यदि शीतांशौ शुभखेचरराशिगे ।
औरसोऽयं भवेज्जातो गुरुवर्गसमन्विते ॥
जीवो न भौमसंदृष्टः स्ववर्गे सार्कचन्द्रमाः ।
क्षेत्रजोऽयं भवेज्जातः ससौम्यो वा बलान्वितः ॥
मन्दवर्गगते चन्द्रे मन्दयुक्ते तु पञ्चमे ।
भानुभार्गवसंदृष्टे पुत्रः पौनर्भवो भवेत् ॥
व्यये भास्करसंदृष्टे वर्गे भार्गवचन्द्रयोः ।
चन्द्रसूर्ययुते वाऽपि कानीनोऽयं भवेन्नरः ॥
चन्द्रदृष्टियुतो मान्दिर्भानुपुत्रसमन्वितः ।
तदीक्षणयुतो वाऽपि दत्तपुत्रो भवेन्नरः ॥
शन्यङ्गारकसंयुक्ते सप्तमे वाऽथ पञ्चमे ।
अन्यैरनीक्षिते खेटैः कृत्रिमं तु विनिर्दिशेत् ॥ " इति ।

जगतीच्छन्दः । अतो व्ययस्थचन्द्रेणापि जारजत्वं वाच्यम् । यदि चन्द्रो लग्नं वा गुरुसम्बन्धहीनं भवेत् । उक्तं च सारावल्याम्—

"चन्द्रे तथान्यजातो द्वादशगे नित्यपरिभूतः ॥" इति ।

सपापकोऽर्केण इत्यत्रापि चन्द्रस्यांशकेष्वपि पापयुतिर्गृह्यते । सपापकोऽर्केण युतश्चन्द्रो गुरुदृष्टश्चेद्भर्तुरनुज्ञयेति वाच्यम् । बलाधिकश्चेत्पापो मातुरपवाद एव वक्तव्यः । गर्भोत्पादकपितुर्जात्यादयोऽपि नवमनवमेशनवमस्थानां सूर्यस्य च बलाबलमालोक्य वक्तव्याः ।

"ओजर्क्षे पुरुषांशकेषु बलिषु" इति श्लोकेन लग्नार्कगुर्विन्दूनां पुरुषराश्यंशस्थित्या पुरुषत्वम्, स्त्रीराश्यंशवशात् स्त्रीत्वं चोक्तम् । अनेनैव नीचत्वे जातस्य नीचत्वमपि वक्तव्यम् । नीचत्वं तु जारजत्वम् । लग्नस्य नीचत्वाभावाद् रविगुरुशशिनां नीचत्वे जातस्य जारजत्वं वाच्यम् । मन्दस्य पितृत्वं पापत्वं च विद्येते । अतस्तस्य लग्नस्थित्या जातस्य जारजत्वं प्राप्तम् । तच्च लग्नस्य मातृकारकचन्द्रशुक्रयोश्च शुभवीक्षणेन जातस्य मातुश्च दोषाभावतया नश्यति । अतो लग्ने शनौ लग्नचन्द्रशुक्रेषु शुभदृष्टिहीनेषु जातस्य जारजत्वं वाच्यम् ।

तथा च सारावल्याम्—

"गुरुरविशशिनो नीचे सूतौ लग्नेऽथवार्कसूनुश्च ।
लग्नोडुपभृगुपुत्राः शुभैरदृष्टास्तथान्यजातश्च ॥" इति ।

सपापकोऽर्केण युतः । पापः अक्षरसङ्ख्यया एकमेकम् । सङ्कलनेन द्वौ भवति । द्वितीयेत्यर्थः । कः मारुतः । मारुतदैवत्यं स्वातीनक्षत्रमनेन गृह्यते । पापश्च कश्च पापकौ ताभ्यां युतः सपापकः । द्वितीयास्वातीभ्यां युक्तः शशी अर्केण रविवारेण युतो यदि जातो जारजो भवति ।

पापकः पापत्वाल्पतया बुधः । अर्केणेति अर्कदेवताका सप्तमी, अर्कभेदपूषदैवत्यं रेवतीनक्षत्रं च गृह्येते । एवं सप्तमीरेवतीबुधवारयोगो जारजत्वप्रदः ।

पापकः । कः ब्रह्मा

"मारुते वेधसि ब्रध्ने पुंसि कः"

इत्यमरः । तद्दैवत्यः शनिः । सपापकः शनैश्चरनाथकमकरकुम्भराशिगतं श्रविष्ठानक्षत्रम् । अर्केण युतः द्वादशीतिथियुक्तः । द्वादशीश्रविष्ठाशनिवारयोगेन परजातत्वं वाच्यम् ।

परेण त्रिपादेकपादात्मकस्थितपरमपुरुषवत् स्थितेन त्रिपादेकपादात्मकत्रिपान्नक्षत्रेण युक्तः सपापकः पापफलप्रदपापवासरभद्राख्यतिथियुक्तश्च शशी भवेद्यदि परेण जातं प्रवदन्ति निश्चयात् ।

तथा च जातकपारिजाते—

"स्वातीद्वितीया रविवारयुक्ता ससप्तमीसोमजरेवती च ।
सद्वादशीभानुसुतश्रविष्ठा चैतेषु जातं परतो वदन्ति ॥
भद्राख्यतिथियुक्तेषु त्रिपादर्क्षान्वितेषु च ।
मन्दार्कभौमवारेषु जातमन्योद्भवं विदुः ॥"

इति ॥ ६ ॥

अथ जन्मकालग्रहस्थितिवशात्पितुर्बन्धनमाह—

**क्रूरर्क्षगतावशोभनौ सूर्याद् द्यूननवात्मजस्थितौ ।**
**बद्धस्तु पिता विदेशगः स्वे वा राशिवशात्तथा पथि ॥ ७ ॥**

इति । अशोभनौ शनिकुजौ । क्रूरर्क्षगतौ क्रूरराशिगतौ सूर्यात् द्यूननवात्मजस्थितौ सप्तमे नवमे पञ्चमे वा स्थितौ चेत् । जातस्य पिता जनकः । बद्धः बन्धनभाक् भवति । राशिवशात् चरस्थिरोभयराशिवशात् । विदेशगः चरस्थे सूर्ये परदेशे बद्धः । स्वे वा स्थिरराशिगते सूर्ये स्वदेशे बद्धः । तथा तथैव उभयराशिगते । पथि मार्गे बद्धो भवति । पिता तु

बद्ध इति तुशब्देन एवं चन्द्राद्यूननवात्मजस्थितावशोभनौ चेन्मातुरप्येवंविधानिष्टं वदेदिति सूचितम्। बन्धनस्था प्रसूयते इति द्योत्यते।

राशिवशद्वा स्वे पथि बद्ध इति वाशब्देन कश्चिद्विशेषार्थो द्योतितः। सूर्याद् द्यूने पापयुते पिता विदेशे बद्धो, नवमे पापयुते स्वदेशे बद्धः, पञ्चमे पापयुते मार्गे बद्ध इति।

वैतालीयं छन्दः। अनेनात्मनोऽप्यनिष्टं सूचितम्। आत्मकारकसूर्याद् द्यूननवात्मजस्थितयोः कुजशन्योर्जातो बद्धो भवतीत्यपि सूचितम्॥ ७॥

अथ प्रसूतिदेशमाह। तत्रादौ जलमयप्रसवलक्षणमाह—

**पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे।**
**लग्ने जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते॥ ८॥**

इति। पूर्णे शशिनि पूर्णचन्द्रे स्वराशिगे कटकगते। पूर्णचन्द्र इत्युक्तत्वात् सूर्ये मकरे इत्यप्यर्थः। सौम्ये बुधे लग्नगते सूर्यस्य मकरस्थित्या बुधस्य धनुर्मकरकुम्भेष्वन्यतमराशिस्थितिरेव संभवति। अतो धनुर्मकरकुम्भेष्वन्यतमे लग्न इत्यपि सिद्धम्। सुखे चतुर्थभावे शुभे गुरौ शुक्रे वा। शुक्रस्य केन्द्रस्थितिर्धनुःकुम्भलग्नयोरेव संभवति। अस्मिन् योगे पोतगता प्रसूयते जलयाने प्रसूयते। जलावृतप्रदेशे प्रसवो वाच्यः। अथ योगान्तरमाह—

लग्ने जलजे जलजराशौ कर्कटकमीनमकरान्त्याद्येष्वन्यतमे लग्ने चन्द्रेऽस्तगेऽपि वा चन्द्रे सप्तमे च जातः, पोते प्रसूयते जलावृतदेशे प्रसूयते। एतद्योगजस्य समुद्रगमनादिकं वाच्यम्। अत्र प्रथमयोगे जलराशौ शुष्कग्रहस्य सूर्यस्थित्या जलोपरिस्थितस्थले प्रसवकथनाज्जलप्रश्ने जलराशौ शुष्कग्रहस्थित्याऽधस्ताज्जलं वाच्यम्। स्थलराशिस्थजलग्रहेणो-

परिष्टाज्जलं वाच्यम् । जलराशौ जलग्रहस्थित्या प्रभूतमुदकं वाच्यमित्यादि व्यज्यते ।

तथा च कृष्णीये—

"जलवत्यजलेन गतेऽधस्ताज्जलमुपरि भवति विपरीते ।
सजलद्वयसंपाते प्रभूतमुदकं विनिर्देश्यम् ॥" इति ।

जीवद्रव्यचिन्तायां च जलग्रहस्य जलराशिस्थित्या जलजा वाच्या इति सूचितम् । एवमितरेषामपि ।

तथा च कृष्णीये—

"स्थलजे तथाऽम्बुजे वा तिर्यग्राशौ ग्रहा यदा बलिनः ।
द्विपदे चतुष्पदे वा चिन्ता स्यात्तत्र तद्रूपा ॥" इति ।

वैतालीयं छन्दः । अनेनास्मिन् योगे जातस्य लग्नस्य चन्द्रस्य च पापयोगदृष्टिवशाज्जलकृतमृतिर्वाच्येति सूचितम् ॥ ८ ॥

अथ योगान्तरमाह—

**आप्योदयमाप्यगः शशी संपूर्णः समवेक्षतेऽथवा ।**
**मेषूरणबन्धुलग्नगः स्यात्सूतिः सलिले न संशयः ॥ ९ ॥**

इति । संपूर्णः शशी पूर्णचन्द्रः । आप्यगः जलराशिस्थितः आप्योदयं जलराशिलग्नम् । अप्शब्देन अम्मयस्य शुक्रस्य ग्रहणे आप्योदय इति वृषस्तुलाधरो वा भवति । जलराशिलग्नं वृषलग्नं तुलालग्नं वेत्यर्थः । समवेक्षते वीक्षते इत्येको योगः । अथवा संपूर्णः शशी मेषूरणबन्धुलग्नगः दशमे चतुर्थे लग्ने वा स्थितो यदि । सूतिः प्रसवः । सलिले जलप्रदेश एव । स्यात् भवेत् । न संशयः अत्र संशयो मा भूत् ।

पूर्वश्लोकेनानेन श्लोकेन चोक्ताश्चत्वारो योगा अपि कूपप्रश्नादौ योज्याः। जातस्य वापीकूपतटाकादिनिर्माणकत्वं वाच्यम्। राश्यनुरूपेण कृष्यादिप्रवृत्तिः समुद्रस्नानादि च वाच्यम्।

अर्थान्तरस्याऽपि ध्वनिः। आग्नेयराशौ लग्ने तस्मिन् पापयुतेऽग्निसमीपे प्रसवो भवति।

वैतालीयं छन्दः। सलिलेन संशयः इत्यपि पदच्छेदः। उक्तयोगयोर्जलेन जीवितसंशयः मृतिर्भवेदिति सूचितम् ॥ ९ ॥

अथ पुनरपि प्रसवस्थलविशेषमाह—

**उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे।**
**अलिकर्कियुते विलग्नगे सौरे शीतकरेक्षितेऽवटे ॥ १० ॥**

इति। यमे शनौ उदयोडुपयोः लग्नस्य चन्द्रस्य एकस्थयोर्लग्नचन्द्रयोर्वा, व्ययस्थितौ द्वादशस्थानगते, पापनिरीक्षिते पापदृष्टे च, गुप्त्यां कारागृहे, सूयत इति शेषः। सौरे शनौ, अलिकर्कियुते विलग्नगे वृश्चिकलग्ने कटकलग्ने वा स्थिते, शीतकरेक्षिते चन्द्रेण दृष्टे च, अवटे गर्ते प्रसूयते। अस्मिन् योगे जातो वापीकूपतटाकादिव्यापारैर्जीवति।

अनेन गुप्तिजननयोगेन पूर्वोक्तनालवेष्टनसर्पवेष्टनयोगैश्च लग्नस्य भुजङ्गादिद्रेक्काणाच्छनेः पापदृष्टियोगाभ्यां च प्रश्ने बन्धनं वक्तव्यमिति सूचितम्।

तथा च कृष्णीये—

"सौरद्रेक्काणे वा भुजङ्गपरिवेष्टितेऽथवा लग्ने।
शशिसौराभ्यां दृष्टे बन्धनमिति वाच्यमादेशे ॥
पापक्षेत्रेषु यमे त्रिकोणचतुरश्रसप्तमेषु गते।
क्रूरैर्निरीक्ष्यमाणे बन्धोऽस्तीत्यादिशेत् क्षिप्रम् ॥" इति

वैतालीयं छन्दः। अनेनानयोर्योगयोर्जातानामपि तत्तत्स्थानवासो भवतीति सूचितम् ॥ १० ॥

अथ शनेर्बुधादिदृष्टिवशात् प्रसवस्थलविशेषमाह—

**मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात्।**
**क्रीडाभवने सुरालये प्रसवं सोषरभूमिषूद्दिशेत् ॥ ११ ॥**

इति। मन्दे शनौ। अब्जगे जलराशिगते। विलग्नगे लग्नस्थिते च। बुधसूर्येन्दुनिरीक्षिते बुधेन सूर्येण चन्द्रेण वा दृष्टे। क्रमात् यथाक्रमम्। क्रीडाभवने बुधदृष्टे क्रीडास्थाने। सुरालये सूर्यदृष्टे देवालये। सोषरभूमिषु चन्द्रदृष्टे सोषरप्रदेशेषु च। प्रसवं उद्दिशेत् वदेत्। एतद्भूतनष्टसुरतप्रश्नेऽपि योज्यम्।

क्रीडाभवनमिति दम्पतीशयनगृहं वा। उच्चादिबलयुक्तबुधेन हंसतूलिकादियुक्तमञ्चगृहं चन्दनागरुधूपादिवासितं वाच्यम्। बलहीनेन बुधेन नाटकशाला बालक्रीडास्थानमित्यादि वाच्यम्।

सुरालये इत्यनेन सुराविक्रयस्थानमपि विवक्षितम्। अतो बलयुक्तेन सूर्येण देवालयं बलहीनेन जीर्णभूसुरगृहं मद्यविक्रयस्थानं वा प्रसवस्थानं भवति।

एवं बलिना चन्द्रेण समुद्रतीरसिकतासु बलहीनेन केवलोषरभूमौ च प्रसवो वाच्यः। अब्जशब्देन कर्कटमेव वाञ्छन्त्यभिज्ञाः।

वैतालीयं छन्दः। अनेन मरणकारकस्य शनेर्बुधादिदृष्टिवशात् क्रीडाभवनादिषु जातस्य मृत्युरपि वाच्य इति सूचितम् ॥ ११ ॥

अथ पुनरपि प्रसूतिदेशविशेषमाह—

**नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे।**
**रविर्नरेन्द्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति ॥ १२ ॥**

इति। अब्जगतशनेर्बुधादिदृष्टया फलमुक्तम् । अत्र नरराशिगतस्य मन्दस्ये-तरग्रहदृष्टिवशात् फलनिर्देशः क्रियते । नृलग्नगं नरराशिलग्नस्थं मन्दम् । कुजः प्रेक्ष्य दृष्ट्वा । श्मशाने शवदाहस्थले प्रसवं प्रसूतिं करोति । सितेन्दू शुक्रचन्द्रौ, नृलग्नगं मन्दं प्रेक्ष्य, रम्ये रमणीयस्थले प्रसवं कुरुतः । गुरुः नृलग्नगतं मन्दं प्रेक्ष्य, अग्निहोत्रे द्विजगृहे अग्निहोत्रादिवैदिक-कर्मानुष्ठानस्थाने प्रसवं करोति । नृलग्नगं मन्दं रविः प्रेक्ष्य नरेन्द्रामरगोकुलेषु राजगृहे देवालये गोशालायां वा प्रसवं करोति । राशिवशाद्बलवशाच्च राजगृहादिषु निर्णयः कार्यः । आदित्यदृष्टेरेव स्थानत्रयस्य कथनात्प्रथम-द्रेक्काणे रवौ नरेन्द्रगृहं द्वितीये देवालयं तृतीये गोगृहं च वदेदिति केषाञ्चि-न्मतम् । नृलग्नगं मन्दं ज्ञः बुधः प्रेक्ष्य शिल्पालये शिल्पिशालायां प्रसवं करोति । शिल्पालयः शिल्पिगृहस्याप्युपलक्षणम् । श्मशान इति जातस्य कुजकृतयोगेन शवदाहकत्ववृत्तिर्वक्तव्या । एवं सितेन्दुभ्यां रम्यदेशवासः, गुरुणा वैदिककार्यश्रद्धालुत्वं, रविणा राजभवनादिषु स्थितिर्जीवनं, ज्ञेन शिल्पमन्दिरे स्थितिर्जीवनं वा वक्तव्यम् ।

वृत्तं विपरीताख्यानिका । इन्द्रवज्रोपेन्द्रमिश्रा हंसी नाम्न्युपजातिः । तेनोक्तस्थानसजातीयस्थानान्यपि देशकालानुसारेण वक्तव्यानीति सूचितम् । श्लोकद्वयोक्तविधयो हृतनष्टसुरतप्रश्नेष्वपि योज्याः । पूर्वश्लोकस्थो मन्द-शब्दोऽत्र यथाऽऽकृष्यते तद्वद् वैतालीयछन्दसः प्रयोजनमप्याकृष्य मरण-स्थानविशेषोऽप्येवं चिन्त्यः ॥ १२ ॥

प्रसूतिदेशविशेषविषयकान्विशेषविधीनुक्त्वाधुना तेषामभावे वक्तव्य-विधिमाह—

**राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे ।**
**स्वर्क्षांशगते स्वमन्दिरे बलयोगात्फलमंशकर्क्षयोः ॥ १३ ॥**

इति । राश्यंशसमानगोचरे राशेरंशकस्य वा ‘स्वचराश्च सर्वे’ इति संज्ञाध्याय-निर्दिष्टस्थाने जन्म, वाच्यमिति शेषः । चरे चरराशौ चरांशके वा लग्ने, मार्गे पथि जन्म वक्तव्यम् । स्थिरे गृहे जन्म वक्तव्यम् । राश्यंशसमानगोचरे इत्यनेनैव मार्गे जन्म चरे, स्थिरे गृहे इति सिद्धे उभयराशावपि चरासन्न-स्यार्धस्य चरवत्फलं स्थिरराश्यासन्नस्यार्धस्य स्थिरवत्फलमिति सूचयितुं मार्गे जन्मेत्याद्युक्तम् । अथवा उभयराशिवशाद्गृहाद्बहिःस्थितं गृहाङ्गभूतं स्थानं वा वाच्यम् । अथ राश्यधिपतिस्थितिवशादाह—स्वर्क्षांशगते राश्यधिपे स्वक्षेत्रे स्वनवांशके वा स्थिते स्वमन्दिरे स्वगृहे प्रसूतिर्वाच्या । नवां-शाधिपे स्वक्षेत्रे स्वनवांशे वा स्थितेऽपि स्वमन्दिरे प्रसवो वक्तव्य इति द्योतयितुं स्वर्क्षांशगते इति तन्त्रेणोक्तम् । वक्ष्यमाण “लग्ननवांशपतुल्यतनुः स्याद्” इत्यनेन नवांशपस्य बलवशादपि चिन्त्यमिति सिद्धम् । स्वर्क्षांशगते स्वमन्दिरे इत्युक्तत्वान्मित्रक्षेत्रांशके बन्धुगृहे शत्रुक्षेत्रांशके शत्रुगृहे नीचक्षेत्रांशके नीचगृहे इत्याद्यूह्यम् । अंशकर्क्षयोरंशकाधिपस्य राश्यधिपस्य च बलयोगात् बलवशात् फलं राश्यंशसमानगोचरे स्वर्क्षांशगते स्वमन्दिरे इत्यादिफलं वाच्यम् । बलवति राशौ राशिसमानगोचरे राशीशस्य स्वर्क्षादिवशाच्च प्रसूतिदेशविशेषो वक्तव्यः । बलवति नवांशके नवांश-राशिवशान्नवांशेशस्य स्वर्क्षादिस्थितिवशाच्च प्रसूतिदेशविशेषो निर्णेतव्यः । स्वर्क्षांशगते स्वमन्दिरे इत्यनेन लग्नस्य स्वांशकेन संपादितवर्गोत्तमत्वेऽपि स्वगृहे प्रसवो भवति ।

तथा च सारावल्याम्—

“स्वगृहनवांशे लग्ने स्वगृहेऽन्यस्मिन्यदि प्रथमहर्म्ये ॥” इति ।

“मेषस्य धात्वाकररत्नभूमिः कुल्याप्रदेशो भुजगालयश्च ।
पूर्वप्रदेशो वृषभस्य पश्चात् कृषीवलक्षेत्रसुरम्यभूमिः ॥

आरामदेवालयनृत्तभूमिर्यमस्य रम्यं प्रवदन्ति तज्ज्ञाः ।
देवाङ्गनावासतटाकरम्यं जलान्तिकं कर्कटकस्य राशेः ॥
स्थानं मृगेन्द्रस्य तु तुङ्गदेशो गोक्षेत्रदेवद्विजवासभूमिः ।
देवालयाश्वद्विपमन्दिराब्धिक्षेत्रेषु वासो वनितागृहस्य ॥
जूकस्य वीथ्यापणकाननेषु कीटस्य वल्मीकतटाकयोश्च ।
आरामसेनागृहयुद्धभूमिसालेषु वासो नवमस्य राशेः ॥
नदीमुखारण्यनिषादवासेष्वेणाख्यराशेर्घटमस्य तद्वत् ।
श्वभ्राम्बुपूर्णामरमन्दिरेषु झषस्य वासः कथितो मुनीन्द्रैः ॥

इत्युक्तस्थानान्याचार्येण न व्यक्तमुक्तानि । राशीनामाकारकथनेन क्रूरसौम्यादिधातुजीवमूलादिविभागेन च सिद्धत्वात् । जातकपारिजाते तु—

"कुम्भस्य तोयघटभाण्डगृहस्थलानि"

इति कुम्भस्य स्थानान्युक्तानि ।

उक्तदेशविशेषो नष्टद्रव्यादिचिन्तायामपि योज्यः । स्थिरराश्यंशवशाद्वर्गोत्तमांशस्थलग्नवशाच्च स्वगृहे नष्टद्रव्यस्थितिर्वाच्या । एवं चरस्थिरोभयमित्रशत्रुनीचोच्चराशिवशान्नष्टद्रव्यस्य स्थितिर्वक्तव्या । राशिवशाच्चोरो वक्तव्यः । चरादिविभागेन चोरस्य स्थानमपि वक्तव्यम् । "राश्यंशसमानगोचरे" इत्युक्त्या बलवच्चोरग्रहस्य लग्नतृतीयचतुर्थपञ्चमषष्ठसप्तमादिभावस्थितिवशाद् आत्मसहोदरबन्धुपुत्रशत्रुकलत्राणि चोरा इत्यस्यापि ध्वनिः । तत्राप्यन्यवर्गस्थितिवशात् तेषां संबन्धिनश्चोरा इत्यप्यूह्यम् । तथा च कृष्णीये—

"स्थिरराश्यंशविलग्ने वर्गोत्तमसंज्ञितेऽथवा लग्ने ।
नष्टं स्वगृहे भूयात् तत्स्वामिवशाद्वदेच्चोरम् ॥

चरराशावंशे वा प्रोषितमुदयेन सङ्गतं ब्रूयात् ।
बाह्योपगतश्चोरो यमलेषु सहोषितश्चोरः ॥"
"लग्ने ग्रहे स्वयं स्याद्दुश्चिक्ये भ्रातरं वदेच्चोरः ।
हिबुके मातृस्वजनौ माता वा पञ्चमेऽपत्यम् ॥
षष्ठे चोरः शत्रुर्भार्या स्वजनोऽथवाऽस्तमये ।
नवमे पितैव चोरस्तत्स्वजनोऽथवा हर्ता ॥" इति ।

पुनरपि "राश्यंशसमानगोचरे" इत्यनेन ओजयुग्मग्रहवशाच्चोरस्य स्त्रीत्वपुरुषत्वादि च वक्तव्यम् । तत्र 'ओजर्क्षे पुरुषांशकेषु बलिषु' इत्यादि-स्त्रीपुंविभागलक्षणश्लोकद्वयेन बहुग्रहाणाम् ओजादिराश्यंशकस्थितिवशादपि स्त्रीपुंविभागः कार्यः । तथा च कृष्णीये—

"स्त्रीसंज्ञे वा लग्ने युग्मक्षेत्रेषु वा ग्रहा बहवः ।
चोरः स्त्रीति ब्रूयाद्विषमेषु पुमान् ग्रहे पुंसि ॥" इति ।

अत्र "कट्यां सितवस्त्रवेष्टितः" इति द्रेक्काणाध्यायप्रथमश्लोकरीत्या बृहतीपङ्क्तिछन्दस्संयुक्तार्धसमवृत्तं प्रयुक्तम् । अनेन द्रेक्काणवशादपि चोराश्चिन्त्या इति सूचितम् । 'चरे स्थिरे' इति केन्द्रराशिनिर्देशात् केन्द्रस्थग्रहादपि चोरस्वरूपतत्सख्यादिकं च ज्ञेयमित्यूह्यम् । तथा च कृष्णीये—

"यादृग्भवति विलग्ने द्रेक्काणस्तादृशो भवति चोरः ।
केन्द्रगतो वा यादृग्ग्रहस्तु तादृग्विनिर्देश्यः ॥" इति ।

द्रेक्काणस्य नागरिकत्वादिभेदेन चोरस्यापि नागरिकत्वादिभेदो जलादिसमीपस्थितिवशाज्जलादिसमीपवर्तित्वमप्यूह्यम् ।

तथा च कृष्णीये—

" नागरिकद्रेक्काणे नागरिको वीक्षते ग्रहः कश्चित् ।
चोरो नागरिकः स्यात् शेषोऽपि चैवमूह्यन्ते ॥
मनुजसमानाकारा द्रेक्काणास्तूत्तमा नरा ज्ञेयाः ।
वानरतुरगवराहश्वमुखाः सर्पाकृता अधमाः ॥
श्वभ्राम्बुसमीपगताः स्थिताश्च चोराः प्रवासिनो ग्राम्याः ।
द्रेक्काणसदृशरूपा ज्ञेया वस्त्रादिभूषणैर्युक्ताः ॥ " इति ।

पुनरपि स्वर्क्षांशगते इत्यनेन नष्टद्रव्यस्य स्वामी च सूचितः । स्वर्क्षांशवशान्नष्टद्रव्यं प्रष्टुरिति वाच्यम् । अन्यथेतरस्येति वक्तव्यम् । तत्र स्वक्षेत्रे स्वांशके च ग्रहः स्थितश्चेत्प्रष्टुः संबन्धिनश्चोरा इति वक्तव्यम् ।

तथा च कृष्णीये—

" स्वांशक्षेत्रगतेषु ग्रहेषु वाऽऽत्मीयमादिशेद्द्रव्यम् ।
स्वांशेतरराशिगतैश्चित्रं द्रव्यं समादेश्यम् ॥
संबन्धिना स्वराशावन्यांशे द्रव्यमुच्यते सद्भिः ।
परराश्यंशकयुक्ते परकीयैर्द्रव्यमिति वाच्यम् ॥ " इति ।

बन्धमोचनप्रश्नेऽपि योज्यमेतत् । बन्धकारकग्रहस्य चरादिराशिस्थित्या बन्धमोक्षो वाच्यः ।

तथा च कृष्णीये—

" अचिरेण चरे मोक्षः स्थिरे तु मोक्षस्तु दीर्घकालेन ।
द्विशरीरगते सौरे मध्यमकालेन मोक्षः स्यात् ॥ " इति ।

वैतालीयं छन्दो वा । अनेन मृत्युरप्येवं चिन्त्य इति सूचितम् ॥ १३ ॥

अथ जनन्या परित्यागलक्षणमाह—

**आरार्कजयोस्त्रिकोणगे चन्द्रेऽर्के च विसृज्यतेऽम्बया ।**
**दृष्टेऽमरराजमन्त्रिणा दीर्घायुः सुखभाक् च स स्मृतः ॥ १४ ॥**

इति । चन्द्रे अर्के च पृथङ्निर्देशसामर्थ्यात् चन्द्रे सूर्ये वा इत्यर्थः । सूर्यचन्द्रयोरन्यतरे आरार्कजयोः कुजशन्योः त्रिकोणगे पञ्चमे नवमे स्थिते सति जातः अम्बया जनन्या विसृज्यते । पापर्क्षगयोः कुजार्कजयोस्त्रिकोणस्थे सूर्ये पिता विदेशे बद्धो भवतीति

" क्रूरर्क्षगतावशोभनौ सूर्याद्द्यूननवात्मजस्थितौ ।"

इति श्लोकेन पूर्वमेवोक्तम् । अत उक्तप्रकारस्थितस्य सूर्यस्य पित्रा विसर्जनकारकत्वं वाच्यम् । अत एवं स्थिते चन्द्रे मात्रा विसृज्यते, सूर्ये पित्रा विसृज्यते इति बोध्यम् । अथवा क्वचिच्चन्द्रस्य पितृकारकत्वसत्त्वाद् द्वयोरपि पितृमातृकारकत्वमपि सिद्धम् । अतः अम्बया इत्यस्य अम्बया पित्रा वा इत्यर्थः स्यात् । बृहतीपङ्क्तिश्छन्दसोरत्र ग्रहणान्नवमस्थानदशमस्थानसूचितपित्रा विसर्जनमपि वक्तव्यमिति वा व्यञ्जितम् ।

अथास्यापवादमाह— अमरराजमन्त्रिणा गुरुणा दृष्टे चन्द्रे अर्के वा दृष्टे । स जातः दीर्घायुः आयुष्मान् सुखभाक् सुखी च । स्मृतः ऋषिभिरिति शेषः । दृष्टेऽमरराजमन्त्रिणा अमराश्च राजा च मन्त्रिणौ च एतेषां समाहारः अमरराजमन्त्रि तेन, राजा सूर्यः मन्त्रिणौ गुरुशुक्रौ इतरे अमरा देवत्वात् । सर्वैर्ग्रहैः दृष्टे इत्यर्थः । चन्द्रे सर्वैर्ग्रहैर्दृष्टे सर्वारिष्टशान्तिर्जायत इति भावः । अर्केणापि दृष्टत्वाच्चन्द्रस्य पूर्णत्वमपि विवक्षितम् ।

तथा च सारावल्याम्—

" सर्वैर्गगनभ्रमणैर्दृष्टश्चन्द्रो विनाशयति रिष्टम् ।
आपूर्यमाणमूर्तिर्यथा नृपः सन्नयेद्द्वेषम् ॥ " इति ।

दृष्टे मरराजमन्त्रिणा इत्यपि पदच्छेदः । मर इत्यक्षरसङ्ख्यया पञ्चविंशतिः । मण्डलद्वयशोधनाल्लग्नं भवति । एवं मरराजः लग्नेशः मन्त्री गुरुः लग्नेशेन गुरुणा वा दृष्टः चन्द्रः अरिष्टशान्तिं कुरुते । आरार्कजयोः कुजमन्दयोः क्षेत्राणि अर्के सूर्यक्षेत्रे च विसृज्य हित्वा चन्द्रस्तिष्ठति यदि । विसृज्य मरराजमन्त्रिणा दृष्टे इति अनेन अन्यैरदृष्टे इत्यपि व्यञ्जितम् । पापक्षेत्रं हित्वा शुभक्षेत्रगतश्चन्द्रः लग्नेशेन गुरुणा वा दृष्टे इतरैरदृष्टे च अरिष्टशान्तिर्भवतीति भावः ।

तथा च सारावल्याम्--

"सौम्यक्षेत्रे चन्द्रो होरापतिना विलोकितो हन्ति ।
रिष्टं न वीक्षितोऽन्यैः कुलाङ्गना कुलमिवान्यगता ॥" इति ।

दृष्टेऽमरराजमन्त्रिणा अमरराज इति इन्द्रः तद्देवताको बृहस्पतिश्च । सः बृहस्पतिः मन्त्री यस्य नवग्रहराजस्य सः । सूर्य इत्यर्थः । एवं चन्द्रे सूर्येण दृष्टे इति लब्धम् । अतः पूर्णचन्द्रः सूचितः । अर्के च द्वादशभागे च । आरार्कजयोः अर्के च विसृज्य इत्यनेन शुभद्वादशभागस्थत्वं सूचितम् । शुभद्वादशांशस्थे पूर्णचन्द्रे जातो दीर्घायुः सुखभाक् च भवति ।

तथा च सारावल्याम्—

"आपूर्यमाणमूर्तिर्द्वादशभागे शुभस्य यदि चन्द्रः ।
रिष्टं नयति विनाशं तक्राभ्यासो यथा गुदजम् ॥" इति ।

अमरराजमन्त्रिणा इति जातो यदि जीवति सः योगकारकग्रह-बलवशात् अमरो वा राजा वा मन्त्री वा भवति । अमरत्वं योगरसायनादि-साधनलब्धदीर्घायुष्ट्वव्यञ्जकम् । चन्द्रे अर्के सूर्ये स्थितेऽपि क्षीणेऽपीति यावत् । आरार्कजयोः अर्के च विसृज्य स्थिते पापवर्गं विहाय शुभवर्गस्थे

दृष्टेऽमरराजमन्त्रिणा अमरराजमन्त्री गुरुः मरराजमन्त्री शुक्रः राजकुमारत्वात् बुधोऽपि अमरराजमन्त्री एव। अत एवं स्थिते चन्द्रे शुभदृष्टे सर्वारिष्टस्य शान्तिर्भवतीति भावः।

तथा च सारावल्याम्—

"चन्द्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितो हरति रिष्टम्।
सम्यग्विरेकवमनं कफपित्तानां यथा दोषम्॥" इति।

त्रिकोणगे तृतीयात् पञ्चमगे अथवा सप्तमगे इत्यर्थः। अतः कुजसौरयोः चन्द्रद्यूनस्थितयोश्च मात्रा विसर्जनं वाच्यम्।

तथा च सारावल्याम्—

"कुजसौरयोस्त्रिकोणे चन्द्रेऽस्तगते वियुज्यते मात्रा।
दृष्टे सुरेन्द्रगुरुणा सुखान्वितो दीर्घजीवी च॥" इति।

आरार्कजयोस्त्रिकोणगे इत्यत्र आरार्कजयोरन्यतरस्य सप्तमे अर्के चन्द्रे वा पित्रा मात्रा वा विसृज्यते इति वार्थः। अत्र मरणेन विसर्जनम्। अत्र मन्दोऽपि पितृकारकः। अतो दिवा अर्के कुजदृष्टे पितृमरणमादिशेत्। रात्रौ मन्दे कुजदृष्टे पितृमरणमादिशेत्। एवं शुक्रचन्द्रयोर्दिवारात्रिभेदेन कुजदृष्ट्या मातृमरणमपि वाच्यम्। पूर्वोक्तप्रकारेण सूर्यादीनां चरादिराशिवशात् परदेशे स्वदेशे मार्गे वा मरणं वक्तव्यम्।

तथा च सारावल्याम्—

"द्युनिशोरर्कसितयोः कुजेन संदृष्टयोः पिताऽप्यभवत्।
चरराशौ परदेशे युक्तेक्षितयोस्तु तत्र मृतः॥" इति।

वैतालीयं छन्दः। अनेनास्मिन्योगे अमरराजमन्त्रिणा अदृष्टे चन्द्रेऽर्के च जातोऽचिरेण म्रियते इति सूचितम्।

सो भवेदिति वक्तव्ये स स्मृत इत्याचार्येण कुत उक्तम्? इतिहासपुराणादिषु स्मृतमिति सूचयितुम्। इदमर्थमेव मन्त्रिणेत्यनेनैवेष्टसिद्धौ अमरराजमन्त्रिणेत्युक्तम्। अमरराजः इन्द्रः मन्त्री बृहस्पतिः। अनेनेन्द्रयुक्तबृहस्पतिरथवा सूतः स्मारितः। उक्ता च सूतोत्पत्तिर्वायुपुराणे—

"सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतः।
ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः।
जुहावेन्द्राय देवाय ततः सूतो व्यजायत॥"

इति। एषा पौराणिकस्य सूतस्य।

"विप्रायां क्षत्रियाज्जातः सूत इत्युच्यते बुधैः।
चौर्येणास्यामनेनोत्थो रथकार इति स्मृतः॥"

इति सूतसंहितानिर्वचनं सूतस्य रथकारस्य च। अतः अमरराजमन्त्रिणा सूतेन दृष्टे सः दीर्घायुः सुखभाक् च भवेदिति पुराणकथा स्मृतः स्मर्तव्येत्यर्थः। कुन्तीपुत्रस्य कर्णस्य जातकस्य विमर्शनेनैतच्छ्लोकसारोऽवगन्तव्य इति सूचितम्।

कर्णस्य जातके लग्नं मकरः। तस्मिन् रविकुजशनयः। कटके गुरुः। वृषे चन्द्रः। तत्रारार्कजयोः त्रिकोणे लग्नं चन्द्रः सूर्यश्च दृश्यन्ते। स च कर्णः प्रथमं पित्रा विसृष्टः। ततो मात्रा। रवेर्लग्नस्य च गुरुदृष्टिर्वर्तते। पित्रा विसृष्टोऽपि नोपेक्षितः। अतः श्लोक एवं व्याख्येयः। आरार्कजयोस्त्रिकोणगे चन्द्रे अर्के अम्बया च विसृज्यते। पित्रा मात्रा च विसृज्यते इत्यर्थः। आरपञ्चमे चन्द्रे जनन्या विसृज्यते। शनिनवमे सूर्ये पित्रा विसृज्यते। चन्द्रे कें इति वा पदच्छेदः। कें इत्यक्षरसंख्यया लग्ने इत्यर्थः। आरार्कजयोस्त्रिकोणगे लग्ने आरार्कजयुक्ते लग्ने। अम्बया देव्या प्राणशक्त्या विसृज्यते।

अमरराजमन्त्रिणा अमरराजः देवदेवः हरिः अथवा हरिर्दैवत्यो बुधः। मन्त्री गुरुः। जीवग्रहेण बुधेन गुरुणा वा। मरराजः लग्नाधिपः। लग्नाधिपेन वा। दृष्टे वीक्षिते। लग्नदृष्टिरप्यत्र विवक्षिता। लग्नचन्द्र-सूर्याणामन्यतमे। दीर्घायुः सुखभाक् च भवति। आरार्कजयोस्त्रिकोणे चन्द्रे, सूर्ये, लग्ने वा मात्रा, पित्रा, प्राणैर्वा विसृज्यते। तत्र आरपञ्चमग-श्चन्द्रः शनिनवमगः सूर्यः आरार्कजयुतं लग्नं च विशेषतः एवंविधफलं कुर्वते। लग्नचन्द्रसूर्याणामन्यतमे स्वाश्रितराशीशगुरुबुधानामन्यतमेन दृष्टे जातो दीर्घायुः सुखभाक् च भवतीति सारः॥ १४॥

अथ योगान्तरमाह—

**पापेक्षिते तुहिनगावुदये कुजेऽस्ते**
**त्यक्तो विनश्यति कुजार्कजयोस्तथाये।**
**सौम्येऽभिपश्यति तथाविधहस्तमेति**
**सौम्येतरेषु परहस्तगतोऽप्यनायुः॥ १५॥**

इति। तुहिनगौ चन्द्रे उदये लग्ने पापेक्षिते रविशनिभ्यामीक्षिते कुजे अस्ते सप्तमे च स्थिते जातः त्यक्तः मात्रा त्यक्तः विनश्यति। तथा तुहिनगौ उदये पापेक्षिते कुजार्कजयोः कुजशन्योः आये लाभे स्थितयोश्च जातः मात्रा त्यक्तः विनश्यति। अत्र कुजार्कजयोर्लाभस्थितया सप्तमस्थसूर्यदृष्टिरेव विवक्षिता। एवं योगद्वयेऽपि लग्नस्थचन्द्रस्य त्रयाणां पापानामपि दृष्टिः संभवति। योगद्वयेऽपि विशेषमाह—लग्नगं चन्द्रं सौम्ये बुधगुरुशुक्रेष्व-न्यतमेऽभिपश्यति पश्यति सति जातः। तथाविधहस्तं वीक्षमाणशुभग्रहा-श्रितराश्यंशादिबलवशात् सूचितजात्यादियुक्तस्य हस्तमेति। पूर्वोक्तप्रकारेण दीर्घायुः सुखभाक् च भवति। सौम्येतरेषु पापेषु पश्यत्सु परहस्तगतोऽपि

तद्ग्रहाश्रितराश्यंशसदृशजात्यादियुक्तहस्तगतोऽपि अनायुः म्रियते । तथा च सारावल्याम्—

" म्रियते च पापदृष्टे शशिनि विलग्ने कुजेऽस्तगे त्यक्तः ।
लग्नाच्च लाभगतयोर्वसुधासुतमन्दयोरेवम् ॥
पश्यति सौम्यो जातं यादृग्गृह्णाति तादृशो जातम् ।
शुभपापग्रहदृष्टे परैर्गृहीतोऽपि स म्रियते ॥
सर्वेष्वेतेषु यदा योगेषु शशी सुरेड्यसंदृष्टः ।
भवति तदा दीर्घायुर्हस्तगतः सर्ववर्णेषु ॥ " इति ।

परहस्तगत इति निर्देशेनात्र जातो जन्मभूमिं त्यजतीति सूचितम् ।

अर्थान्तरस्यापि ध्वनिः । पापेक्षिते सूर्ये उदये कुजेऽस्ते पित्रा-त्यक्तो भवतीत्याद्यूह्यम् । एवं तत्तत्कारकग्रहवशात्पितृष्वस्रादित्यक्तत्वं सौम्य-पापदृष्टिवशात्परहस्तगतत्वं तथाप्यनायुस्त्वं च वाच्यम् ।

वृत्तं वसन्ततिलकम् । सिंहोन्नता वा । अनेन पापदृष्टे पूर्णचन्द्रे शुभैरपि दृष्टे जातो राजा भवतीति सूचितम् ॥ १५ ॥

अथ पित्रादिगृहप्रसवलक्षणमाह—

**पितृमातृगृहेषु तद्बलात् तरुसालादिषु नीचगैः शुभैः ।**
**यदि नैकगतैस्तु वीक्षितौ लग्नेन्दू विजने प्रसूयते ॥ १६ ॥**

इति । तद्बलात् पितृमातृकारकभावेशबलात् पितृमातृगृहेषु पितृगृहेषु मातृ-गृहेषु वा प्रसूयते । पितृकारकस्य रवेः नवमाधिपस्य वा बलाधिक्येन पितृ-गृहेषु प्रसवः संभवति । मातृकारकस्य चन्द्रस्य चतुर्थभावेशस्य वा बलाधिक्येन मातृगृहे प्रसवः संभवति । शुभैः बुधगुरुचन्द्रैः अथवा शुक्रगुरुचन्द्रैः । बुधशुक्रयोर्युगपन्नीचस्थित्यसम्भवाद् बहुवचनोक्त्या च

चन्द्रोऽपि विवक्षितः। नीचगैः नीचस्थानगतैः तरुसालादिषु वृक्षमूले प्राकारे अरण्यपर्वतनदीतीराद्यनाथसेवितस्थानेषु प्रसूयते। लग्नेन्दू एकगतैः एकराशिमाश्रितैः ग्रहैस्तु न वीक्षितौ यदि। विजने जनरहिते देशे काननादिप्रदेशे प्रसूयते। तथा च सारावल्याम्—

"पितृमातृगृहे वर्गे तत्तत्स्वजनगृहेषु बलयोगात्।
प्राकारतरुनदीषु च सूतिर्नीचाश्रितैः सौम्यैः॥
नेक्षन्ते लग्नेन्दू यद्येकस्था ग्रहास्तदाटव्याम्॥" इति।

एकशेषेणैव सिद्धे मातृशब्दस्य पृथङ्निर्देशेन किं प्रयोजनम्? उच्यते। अत्र पितृशब्दः पितृव्यादीनामप्युपलक्षणम्। मातृशब्दो मातृष्वस्रादीनामप्युपलक्षणम्।

"राश्यंशसमानगोचरे" इत्यनेन राश्यंशकवशात् प्रसूतिस्थानमुक्तम्। अत्र तु वीर्ययुतग्रहवशादुक्तम्। पितृमातृगृहेषु इति बहुवचनप्रयोगसामर्थ्याद् औरसादिद्वादशपुत्रवत्तदनुगुणद्वादशपितॄणामपि सत्वाज्जातस्य जनकदत्तकृत्रिमादिपितृसङ्ख्या तद्वन्मातृसंख्या च पितृमातृस्थानपबलवशाद्वक्तव्या। "स्वतुङ्गवक्रोपगतैः" इति श्लोकोक्तगुणकारैः स्वतुङ्गवक्रादिवशात् त्र्यादयः पितरो मातरो वा वाच्याः।

वैतालीयं छन्दः। अनेनास्य मृतिस्थानमप्येवंविधं भवतीति सूचितम्॥ १६॥

अथ प्रसूतिकाले शयनादिलक्षणमाह—

**मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा**
**तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ।**
**यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षश्च तद्वत्**
**पापैश्चन्द्रस्मरसुखगतैः क्लेशमाहुर्जनन्याः॥ १७॥**

इति । शशिनि चन्द्रे मन्दर्क्षांशे मन्दराश्यंशके मकरनवांशे कुम्भनवांशे वा स्थिते इत्येको योगः । शशिनि हिबुके चतुर्थे वा इति द्वितीयो योगः । शशिनि यत्र कुत्र राशौ स्थिते चन्द्रे मन्ददृष्टे शनिदृष्टे इति तृतीयो योगः । शशिनि अब्जगे जलराशिगते वा इति चतुर्थो योगः । शशिनि तद्युक्ते वा शनियुक्ते वा इति पञ्चमो योगः । एतेष्वन्यतमे जातस्य शयनं प्रसवकाले जनन्याः शयनं तमसि वाच्यम् । "मन्दर्क्षांशे शशिनि हिबुके" 'शशिनि मन्ददृष्टेऽब्जगे वा' 'शशिनि तद्युक्ते' इति योगत्रयं केचिदाहुः । मन्दर्क्षांशे शशिनि इत्यत्र शशिनि मकरकुम्भयोरन्यतरांशके शनियुक्ते इति केचिद्व्याचक्षते । पूर्वोक्तपक्षस्तु वरीयान् । यस्मात् सारावल्याम्—

"सौरांशेऽथ जलांशे चन्द्रेऽर्कजसंयुतेऽथवा हिबुके ।
तद्दृष्टे वा कुर्यात् तमसि प्रसवं न सन्देहः ॥" इत्युक्तम् ।

वृत्तं मन्दाक्रान्ता । श्लोकोऽपि मन्दशब्देनारब्धः । मन्दस्तमः-स्वरूपः । वृत्तेनानेन तमोरूपस्य मन्दस्य प्रकाशग्रहेणाक्रान्तत्वं व्यञ्जितम् । अतः सूर्यदृष्ट्यभाव एवैवं वाच्यमिति सूचितम् । उक्तं च यवनेश्वरेण— "जातस्तमिस्रे यदि नार्कदृष्टे" इति ।

नीचसंस्थैश्च बहुवचनसामर्थ्यात्त्र्यादिभिर्ग्रहैर्नीचगतैरित्यर्थः । अत्र योगे भूमौ प्रसूतिकाले जनन्याः भूमौ शयनं भवति । अथवा नीचसंस्थैश्च त्रिभिः शुभैर्नीचगैः भूमौ शयनं वाच्यम् । अथवा शयनस्थानाधिपे नीचगते भूमौ शयनं भवति । अथवा चन्द्रे नीचे भूमौ शयनम् । अत्र नीचशब्देन लग्नचतुर्थावपि गृह्येते । चतुर्षु केन्द्रेषु उदयश्चतुर्थश्च आरोहिणौ भवतः । अतस्तयोर्नीचसंस्थत्वम् । दशमसप्तमौ त्ववरोहिणौ । अतस्तयोरुच्चसंस्थत्वम् । एवं चन्द्रे नीचे उदये चतुर्थे वा भूमौ शयनं वाच्यम् । तथा च सारावल्याम्—

"नीचस्थे भूशयनं चन्द्रेऽप्यथवा सुखे विलग्ने वा ॥" इति ।

एते भोजनसुरतप्रश्नादिष्वाधानकाले च चिन्त्याः । नीचसंस्थैः भूशयनमित्युक्त्या उच्चादिसंस्थैः पर्यङ्कादिषु वाच्यम् । राशिः लग्नराशिः यद्वद् यथा हरिजं पूर्वक्षितिजं व्रजति प्राप्नोति तथा गर्भमोक्षः प्रसवः स्यात् । शीर्षोदयराशिश्चेत् शिरसा गर्भमोक्षः, पृष्ठोदयश्चेत्पद्भ्यां गर्भमोक्षः, उभयोदयश्चेद्भुजाभ्यां गर्भमोक्षो भवति । तथा च सारावल्याम्—

"शीर्षोदये विलग्ने मूर्ध्ना प्रसवोऽन्यथोदये चरणैः ।
उभयोदये च हस्तैः शुभदृष्टे शोभनोऽन्यथा कष्टः ॥" इति ।

यद्वद्राशिः यद्वद् इति नित्ययोगे मतुप्स्थानीयवतुप् । यो नाथतयाऽस्यास्ति स यद्वान् । तद्वद् गर्भमोक्षो भवति । राशिनाथवशादपि गर्भमोक्षो वाच्य इत्यर्थः । व्रजति हरिजमित्यनेन लग्नांशकस्यापि ग्रहणम् । लग्नेशो अंशकलग्नेशो वा वक्रगतश्चेद् गर्भमोक्षोऽपि विपरीततो भवति । यद्वद्राशिर्व्रजति हरिजं येन युतो राशिः पूर्वक्षितिजं प्राप्नोति तद्वद्गर्भमोक्षो भवति । लग्नस्थग्रहेणापि गर्भमोक्षविधिश्चिन्त्यः । लग्नस्थो वक्रगतश्चेद् गर्भमोक्षोऽपि वैपरीत्येन भवति । तथा च मणित्थः—

"लग्नाधिपेंऽशकपतौ लग्नस्थे वक्रिते ग्रहे वाऽपि ।
विपरीतमतो मोक्षो वाच्यो गर्भस्य स क्रमशः ॥" इति ।

चन्द्रस्मरसुखगतैः चन्द्रात् सप्तमचतुर्थगैः पापैः जनन्याः मातुः क्लेशमाहुः मुनीन्द्रा इति शेषः । पितृकारकसूर्यात् सप्तमत्रिकोणस्थैः पापैः पितुः क्लेशः । मातृकारकचन्द्रात् सप्तमचतुर्थगैः पापैर्मातुः क्लेशः । एवमितरेषां भावानामपि तत्तत्कारकवशाद्वक्तव्यमिति सूचितम् । अथवा चन्द्रस्मरसुखगतैः पापैः लग्नात् सप्तमचतुर्थगतैश्चन्द्रयुक्तैश्च पापैर्जनन्याः क्लेशमाहुः । तथा च सारावल्याम्—

"क्लेशो मातुः क्रूरैर्बन्ध्वस्तगतैः शशाङ्कयुक्तैर्वा ॥" इति ।

जनन्याः क्लेशमाहुः जननीतो जातस्य क्लेशमाहुरस्मिन्योगे इत्यपि द्योत्यते । मातृनिमित्तं द्रव्यव्ययादिकं संभवति ॥ १७ ॥

अथ प्रसूतिगृहस्थदीपादिस्थानज्ञानमाह—

**स्नेहः शशाङ्कादुदयाच्च वर्तिर्दीपोऽर्कयुक्तर्क्षवशाच्चराद्यैः ।**
**द्वारं च तद्वास्तुनि केन्द्रसंस्थैर्वाच्यं ग्रहैर्वीर्यसमन्वितैर्वा ॥ १८ ॥**

इति । तमःशयनलक्षणमुक्त्वा तदभावे प्रकाशार्थं मङ्गलार्थं च निहितस्य दीपस्य स्नेहः तैलादिद्रव्यं शशाङ्कात् चन्द्राद् वदेदिति शेषः । चन्द्रस्य गुलिकयोगेन स्नेहस्य कृमिकीटयुतत्वं राहुकेतुयोगवीक्षणेन स्नेहद्वयमिश्रितत्वं च वाच्यम् । शशाङ्क इति द्विशकाराङ्कितत्वं चन्द्राश्रितहोरायाः कथितव्यमिति सूचयति । चन्द्रहोरागतचन्द्रेण गोमहिषादिसंभूतघृतादयो वाच्याः । सूर्यहोरागतचन्द्रेण तिलादिसंभूततैलादयो वक्तव्याः । वृत्तमिन्द्रवज्रा, अतो गुरुवर्गस्थेन गुरुयुतेन गुरुवीक्षितेन वा चन्द्रेण घृततैलादिषु उत्कृष्टद्रव्यं वाच्यम् । एवमितरेषां ग्रहाणां वर्गयोगेक्षणैश्च चिन्त्यम् । शशाङ्काश्रितराशौ यावान् भागो भुक्तस्तावद्भागो दीपभाजनस्य स्नेहो नष्ट इति वक्तव्यम् । शशाङ्कस्य पूर्णत्वेन दीपभाजने स्नेहस्य पूर्णत्वं क्षीणत्वेन न्यूनत्वं च वक्तव्ये । तथा च सारावल्याम्—

"दीपः पूर्णः पूर्णे शशिनि क्षीणे क्षयस्तु तैलस्य ॥" इति ।

उदयाच्च लग्नाद् वर्तिर्वाच्या । लग्नलग्नस्थलग्नाधिपवशात् तत्तद्ग्रहोक्तवस्त्रेषु बलिनो वस्त्रं वाच्यम् । तत्रापि राश्यंशकवशाद् वर्णो वाच्यः । बलयोगात्फलमंशकर्क्षयोरिति न्यायोऽत्राप्यनुसरणीयः । बलसाम्ये विचित्रवर्णो वाच्यः । लग्नभुक्तभागेन वर्तेर्दग्धभागश्च वाच्यः, अभुक्तभागेनेतरभागश्च । तथा च सारावल्याम्—

"यावल्लग्नादुदितं वर्तिर्दग्धा तु तावती भवति ॥" इति ।

दीपः अर्कयुतर्क्षवशात् सूर्याक्रान्तराशिवशाच्चिन्त्यः। अर्काधिष्ठित-राशिर्बलयुक्तश्चेत् "प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः" इत्युक्त-प्रकारेण तद्राश्युक्तदिशि दीपो वक्तव्यः। अथवा "प्राच्यादिगृहे क्रियादयः" इति वक्ष्यमाणप्रकारेण चरचक्रे यत्र सूर्यः स्थितः स्थिरचक्रे तद्राशिस्थानभूतदेशविशेषे दीपस्थितिर्वाच्या। चराद्यैश्चरस्थिरोभयराशि-वशाद् दीपविशेषः कथितव्यः। सूर्यश्चरराशिगतश्चेत् चरदीपः, स्थिरगश्चे-त्स्थिरदीपः, उभयराशिगतश्चेन्मिश्रस्वरूपो डोलायमानो भवति। अर्काधि-ष्ठितराश्यधिपवशाद् दीपस्य काञ्चनराजतादिभेदोऽपि वक्तव्यः। वह्निभूत-वशित्वं सूर्यस्य कुजस्य चोक्तम्। तत्र सूर्येण दीपस्थितिश्चेद् बलवति सूर्ये कुजदृष्टे दीपबहुत्वमपि वाच्यम्। द्रष्टृबहुत्वेनापि बहवो दीपा वाच्याः। निर्वीर्यैरितरग्रहैः सूर्यो दृष्टश्चेद् बहुदीपत्वं बहुतृणदाहेनैव संभवति। तथा च सारावल्याम्—

"बलवति सूर्ये दृष्टे बहून्प्रदीपान्वदेत्कुपुत्रेण।
अन्यैरपि गतवीर्यैः सूतौ ज्योतिस्तृणैर्भवति॥" इति।

आदित्यस्य ग्रहयोगदृष्ट्याऽपि दीपविशेषश्चिन्तनीयः। यथा पाप-योगेन भिन्नत्वं दीपस्य वक्तव्यम्। दीपः केयुक्तर्क्षवशादित्यपि पदच्छेदः। के इत्यक्षरसङ्ख्यया एकमथवा लग्नं भवति। लग्नादपि दीपविशेषश्चिन्त्यः। अथवा उदयाच्च वर्तिरिति चकारेण उदयाद्दीपोऽपि चिन्त्य इति व्यञ्जितम्। यथा लग्नस्य बुधयोगदृष्ट्या कांस्यत्वं शुक्रयोगदृष्ट्या सितत्वं राजतत्वं वा कुजयोगदृष्ट्या ताम्रत्वं सौवर्णत्वं वा गुरुयोगदृष्ट्या राजतत्वं हैमत्वं वा शनियोगदृष्ट्या आयसत्वं च दीपस्य ग्रहबलाबलवशाच्चिन्त्यम्।

अर्थान्तरस्यापि ध्वनिः। दीपः दी इत्यक्षरसङ्ख्यया अष्टौ। दीपः अष्टमांशेशः गुलिकः। उदयाद्वर्तिरिति तस्य पादोनचतुर्नाडीयुक्तकालोऽपि

उदयाद्वर्ति उदयात् अर्कोदयात्सम्भवति । अर्कयुक्तर्क्षवशात् सूर्ययुक्तदिवसवशात् सूर्यवारादित इत्यर्थः । चरैः चर इत्यक्षरसंख्यासूचितषड्विंशतिनाड्यादिभिर्भवति । सूर्यवासरे गुलिककालः षड्विंशतिनाडिकाः । अर्कदिनस्य षड्विंशतिरिति त्रिंशतश्चतुरूनोक्त्या चन्द्रवारे द्वाविंशतिः । भौमवारे अष्टादश । बुधवारे चतुर्दश । गुरुवारे दश । शुक्रवारे षट् । शनिवारे द्वे । इत्यपि व्यञ्जितम् । रात्रौ पञ्चमवारत इति पूर्वमेव प्रदर्शितम् । तथा चोक्तम् —

"चन्द्रो रुद्रो जयो विद्या नयः स्तेनः खनी रवेः ।
त्रिंशन्नाड्यह्नि गुलिको दिनपञ्चवशान्निशि ॥" इति ।

तद्वास्तुनि तद्गृहभूमौ केन्द्रसंस्थैः केन्द्रस्थैः तत्र ग्रहाभावे वीर्यसमन्वितैर्वा वीर्ययुतग्रहैर्द्वारं वाच्यम् । "प्रागाद्या रविशुक्र" इत्युक्तप्रकारेण तत्तद्ग्रहदिशि द्वारं वाच्यम् । बहवो ग्रहाः केन्द्रगताश्चेत् तेषां वीर्यमालोच्य वक्तव्यम् । द्वौ बलिनौ चेद्द्वारद्वयं त्रयश्चेद्द्वारत्रयमित्यादि च वाच्यम् । अथवा लग्ने ग्रहे प्राच्यां द्वारं चतुर्थे ग्रहे उदीच्यां सप्तमे ग्रहे प्रतीच्यां दशमे ग्रहे दक्षिणस्यां च भवति ।

"लग्नार्कगुर्विन्दुभिः" इति लग्नार्कगुर्विन्दूनां प्राधान्यं सूचितम् । अत्र स्नेहः शशाङ्काद् उदयाच्च वर्तिः दीपोऽर्काच्च निरूपिताः । वृत्तं च इन्द्रवज्रा । अत इन्द्रदेवताकगुरोरपि किञ्चिच्चिन्त्यमस्ति । केन्द्रसंस्थैः वास्तुनि द्वारं वक्तव्यम् । गुरुणा गृहस्य द्वित्र्यादिभूमिकावत्वमपि वक्तव्यमित्यूह्यम् । तथा च सारावल्याम् —

"स्वोच्चे दशमे जीवे द्वित्रिचतुर्भूमिके गृहे प्रसवः ॥" इति ।

गुरौ परमोच्चे चतुर्भूमिकावत्वं चोह्यम् । एवमेवोभयराशिस्थितिवशाद्द्विभूमिकावत्वं वाच्यम् । तत्रापि मूलत्रिकोणभूतधनुषि गुरौ स्थिते

त्रिभूमिकावत्वं वक्तव्यम्। सुरतभोजनादावपि सर्वं योज्यम्। केन्द्रसंस्थैः त्रिष्टुप्छन्दस्त्वाद् एकादशोऽपि विवक्षितः। केन्द्रलाभस्थैः शुभैर्गृहस्य निधिधनवत्वं वाच्यम्। पापैर्धनधान्यराहित्यं च। धर्मस्थानस्थशुभेन निधिप्राप्तिरपि वक्तव्या। स्थिरचक्रे सौम्याक्रान्तराशौ द्रव्यं पापाक्रान्तराशौ शल्यं च वक्तव्ये। तथा च कृष्णीये—

"यदि केन्द्रगताः सौम्या लग्नादेकादशेऽथवा नियतम्।
कुर्युर्धनवद्गेहं द्वारं स्वस्यां दिशि प्रोक्तम्॥
यस्मिन् भागे सौम्यो ग्रहेषु तद्द्रव्यमादिशेत्तत्र।
यस्मिन् भागे पापस्तस्मिन् शल्यं विनिर्देश्यम्॥" इति।

ग्रहस्य पापर्क्षनीचर्क्षवशान्निधिस्थाने वल्मीकदुष्टजन्त्वादि वाच्यम्। ॥ १८ ॥

**जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ**
**काष्ठाढ्यं न दृढं रवौ शशिसुते चानेकशिल्प्युद्भवम्।**
**रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं**
**चक्रस्थैश्च यथोपदेशरचनान् सामन्तपूर्वान्वदेत्॥ १९॥**

इति। अर्कजे शनौ, गृहभावद्रष्टरि गृहभावेशे गृहभावस्थे वीर्याधिके वा, जीर्णं संस्कृतं च गृहं वदेत् पुरातनं गृहं वासयोग्यं कृतमित्यर्थः। क्षितिसुते कुजे गृहकारके, दग्धं अग्निना दग्धैकशेषं गृहं वदेत्। शीतगौ चन्द्रे गृहकारके, नवं नूतनं गृहं वदेत्। रवौ सूर्ये गृहकारके, काष्ठाढ्यं काष्ठबहुलं, न दृढं न सम्यग्योजितसन्धिबन्धं गृहं वदेत्। शशिसुते बुधे गृहकारके, अनेकशिल्प्युद्भवं अनेकशिल्पान्वितं गृहं वदेत्। भृगुजे शुक्रे गृहकारके रम्यं मनोहरं, चित्रयुतं चित्रैरलङ्कृतं, नवं नूतनं च गृहं

वदेत्। जीवे गुरौ गृहकारके, दृढं मन्दिरं सम्यग्योजितसन्धिबन्धं गृहं वदेत्। चन्द्रस्य दृढं, गुरोश्चित्रयुतं इति पक्षान्तरम्। तथा च सारावल्याम्—

"दग्धं गृहमुर्वीजे नवं तु भृगुजे तु चित्रकर्मयुतम्।
चन्द्रे दृढं पुराणं बहुविधशिल्पान्वितं सौम्ये॥
जीवे चित्रविचित्रं काष्ठप्रायं रवौ विशीर्णं च।
रविजे शीर्णविशीर्णं काष्ठप्रायं तु वा वाच्यम्" ॥ इति।

जीर्णसंस्कृतगृहं प्रेष्यादीनां गवादीनां शाला भवति। दग्धमिति पाकशालोपलक्षणम्। नवं इति दिव्यं वा। अनेकशिल्प्युद्भवं इत्यालेख्यगृहं क्रीडागृहं वा। काष्ठाढ्यमितीन्धनबाहुल्यसूचनात्पाकशाला। तत्र न दृढमिति स्नानगृहं वा। भृगुजे अजीवे अदृढं मन्दिरमिति बलहीनस्य शुक्रस्य जीर्णगृहं वा। जीवे दृढं मन्दिरमिति पाठशालादयो वा। अनेन शनेर्गोशालादि, कुजस्य पाकशाला, चन्द्रस्य दिव्यं, सूर्यस्य जलराशिस्थितिवशात्स्नानगृहम्, अन्यथा पाकशाला च, बुधस्य चित्रशाला क्रीडागृहं वा, बलहीनभृगुजस्य जीर्णगृहं, गुरोः पाठशालादयो वाच्या इत्यपि सिद्धम्। शनिवद्राहुरिति राहोः जीर्णं संस्कृतं गृहम्। जीर्णावशिष्टक्षेपणस्थानं वर्चोगृहमित्यर्थः। तथा च कृष्णीये—

"भौमस्य पाकशालामन्ये पाठ्यालयं वदन्ति गुरोः।
सौम्यस्यालेख्यगृहं भानोरपि पाकशालेति॥
इन्दोर्वेश्म तु दिव्यं दैत्यगुरोर्जीर्णमुच्यते वेश्म।
गोशाला रविसूनो राहोर्वर्चोगृहं ब्रुवते॥" इति।

जीर्णं संस्कृतमिति बलहीनशनेर्जीर्णगृहं बलयुक्तस्य संस्कृतं वा वाच्यम्। अदग्धं नवं शीतगौ इति वा पदच्छेदः। दग्धुं योग्यं किंतु न दग्धमित्यदग्धमिति पुरातनं गृहं चन्द्रस्य। कृष्णपक्षचन्द्रस्य

पुरातनगृहं वाच्यम्। शुक्लपक्षचन्द्रस्य नवं दृढं वा गृहं वाच्यमिति कृष्णीयशास्त्रानुसारेण वा व्याख्येयम्। अनेन ग्रहस्योच्चादिबलवशादुत्तमादिस्थानान्यपि वक्तव्यानीति सिद्धम्।

चक्रस्थैश्च प्रसवगृहकारकस्य आधिपत्यस्थितिदृष्टिवीर्यलब्धकारकत्वयुतग्रहस्य केन्द्रपणफरापोक्लिमगैः ग्रहैः सामन्तपूर्वान् समन्तभवाः सामन्ताः सामन्ताः पूर्वे येषां ते सामन्तपूर्वाः, आसन्नगृहान् यथोपदेशरचनान् "जीर्णं संस्कृतम्" इत्याद्युपदिष्टप्रकारेण वदेत्। सामन्तपूर्वानिति केन्द्रस्थैः समीपवर्तीनि पणफरस्थैर्नातिसमीपवर्तीनि नातिदूरस्थानि, आपोक्लिमगैः दूरस्थानि च गृहाणि वाच्यानि। तानि च राशिदिक्षु गृहदिक्षु वा भवेयुः। चक्रस्थैः चक्रस्थितेषु चतुर्षु खण्डेषु स्थितैः ग्रहैः सामन्तपूर्वान् सूतिकागृहात् पूर्वादिदिक्स्थितानि गृहाणि वदेत्। गृहकारकग्रहैः लग्नद्वितीयतृतीयभावगतैः पूर्वदिक्स्थगृहाणि, चतुर्थपञ्चमषष्ठभावगतैर्दक्षिणदिक्स्थगृहाणि, सप्तमाष्टमनवमभावगतैः पश्चिमदिक्स्थगृहाणि, शेषभावस्थितैरुत्तरदिक्स्थगृहाणि च वक्तव्यानि।

बलाधिकग्रहात्स्वद्वितीयतृतीयस्थग्रहेण सूतिकागृहात्पूर्वस्यां दिशि, चतुर्थपञ्चमषष्ठस्थेन दक्षिणस्यां, सप्तमाष्टमनवमस्थेन प्रतीच्यां, दशमैकादशद्वादशस्थेनोत्तरस्यां च समीपवर्ति गृहं 'जीर्णं संस्कृतम्' इत्यादिना ज्ञेयम् इति केचित्। तत्रापि रविणा देवालयं, चन्द्रेण जलाशयं, कुजेनाग्निस्थानमग्निहतं गृहं वा, बुधेन क्रीडाभवनं, गुरुणा द्रव्यस्थानं, शुक्रेण रतिस्थानं, शनिना वर्चोगृहं च वाच्यम्।

ग्रहाणां वीर्यमवलोक्य गृहाणामप्युत्तमाधममध्यमत्वं सङ्ख्यां च वदेत्। द्विशालादिवत्त्वमपि तथा चिन्त्यम्। तत्र झषस्य युग्मत्वाद् मृगाश्व्योर्द्विरूपवत्त्वात् तेषां द्विशालादित्वं विशेषतो वाच्यम्। तथा च सारावल्याम्—

" दिग्भागराशिमण्डलकेन्द्रेषु खगेषु तच्छाला ।
झषमृगहयबलवत्त्वे गृहं द्विशालं त्रिशालं च ॥ " इति ।

एतेषां ग्रहाणां लग्नाधिपेन मैत्र्यादिभावेन तत्तद्गृहवास्तव्यानामपि सूतिकागृहस्थैर्मैत्र्यादि वदेत् । एतैर्ग्रहैस्तत्तद्गृहवास्तव्यानां जात्यादयोऽपि चिन्तनीयाः ।

वृत्तं शार्दूलविक्रीडितम् । अतिधृतिश्छन्दः । अनेनैकोनविंशति-संवत्सरैर्भगणं भुञ्जानाद्राहोरपि गृहविशेषश्चिन्त्य इति सूचितम् । राहो-र्गृहमपि शनेरिव जीर्णं संस्कृतं भवति । वृत्तं सूर्याश्वयतियुतम् । अतः सप्तग्रहेभ्य इव द्वादशराशिभ्योऽपि गृहविशेषश्चिन्त्यः । उक्तश्च तत्प्रकारः कृष्णीये—

" अलिकर्क्यजतौलिगवां यमगुरुभूसूनुशुक्रसूर्याणाम् ।
झषयुगकन्याधनुषां स्वे दिशि वाच्यं बुधस्य गृहम् ॥
समवृत्तं मकरगृहं कुम्भधरस्यापि राहुवेश्म स्यात् ।
सिंहस्यालयमाहुर्गोष्ठागारं त्रिकालज्ञाः ॥ " इति ।

भोजनसुरतप्रश्नादिष्वप्येवं चिन्त्यम् ॥ १९ ॥

अथोक्तप्रकारस्थितसूतिकागृहे कस्मिन् भागे प्रसव इति चेदाह—

**मेषकुलीरतुलालिघटैः प्रागुत्तरतो गुरुसौम्यगृहैश्च ।**
**पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ ॥ २० ॥**

इति । मेषकुलीरतुलालिघटैः मेषकटकतुलाकुम्भराशिभिः, प्राक् गृहस्य प्राग्भागे, प्रसवो वाच्यः । गुरुसौम्यगृहैः धनुर्मीनमिथुनकन्याभिः, उत्तरतः उत्तरभागे प्रसवः । वृषेण वृषभेण पश्चिमतश्च प्रतीच्यां प्रसवो वाच्यः । मृगसिंहौ मकरसिंहौ, दक्षिणभागकरौ दक्षिणदिग्भागे प्रसवकरौ भवतः ।

'प्रागाद्या रविशुक्र' इत्यस्य 'प्रागादीशाः क्रियवृषनृयुक्कर्कटाः' इत्यस्य चापवादोऽयं विधिः। ग्रहबलाधिक्येन दिङ्निर्णये 'प्रागाद्याः' इत्यस्य प्रवृत्तिः। 'कुत्र जलम्' 'कुत्रान्वेष्टव्यः' इत्यादीनां प्रष्टृचोद्यानां 'प्रागादीशाः' इति विधिनोत्तरं दद्याद्दैवज्ञः। चौरप्रश्ने भवनस्य कस्मिन् भागे द्रव्यस्थितिर्वाच्या, अद्भुतप्रश्ने कतमगोपुरद्वारा गच्छेदित्यादिषु 'मेषकुलीर' इत्यस्य प्रवृत्तिः।

चारणगीतं वृत्तम्। केवलराशय एवात्रोक्ताः। अत एकैको ग्रहः एकैकस्मिन् राशौ स्थितश्चेज्जातो राजा भवति। एष योग एकावल्यभिधः। तथा च भावकुतूहले—

"एकैकेन खगेन जन्मसमये सैकावली कीर्तिता
मुक्तालीव समस्तभूपमकुटालङ्कारचूडामणिः।
तज्जातो रिपुपुञ्जमज्जनकरो गन्धर्वदिव्याङ्गना-
बृन्दानन्दपरो गुणव्रजधरो विद्याकरो मानवः॥"

इति। केवलं ग्रहाणां राशिस्थित्यैव राजयोगः कथितव्य इत्यपि सूचितम्। तथा च जातकपारिजाते—

"कन्यामीननृयुग्मगोहरिधनुःकुम्भस्थितैः खेचरैः
सेनामत्तमतङ्गवाजिविपुलो राजा यशस्वी भवेत्॥" इत्यादि।

उदयलग्नारूढच्छत्रैरेव बलवशात् प्रसूतिविशेषो वाच्य इति चारणगीतत्वद्योतितराजलक्षणच्छत्रस्मारकत्वात् सूचितम्॥ २०॥

अथ स्थिरचक्रे दिग्विभागं शय्यालक्षणमपि प्राह—

**प्राच्यादिगृहे क्रियादयो द्वौ द्वौ कोणगता द्विमूर्तयः।**
**शय्यास्वपि वास्तुवद्वदेत् पादैः षट्त्रिनवान्त्यसंस्थितैः॥ २१॥**

इति। गृहे प्राच्यादि प्राचीदिशमारभ्य क्रियादयः मेषादयः द्वौ द्वौ भवन्तीत्युत्सर्गः। द्विमूर्तयः उभयराशयः कोणगताः विदिशो भवन्तीत्यपवादः। एवं मेषवृषभौ प्राच्यां, कटकसिंहौ दक्षिणस्यां, तुलावृश्चिकौ प्रतीच्यां, मकरकुम्भावुदीच्यां च कल्प्याः। मिथुनम् आग्नेय्यां, कन्या नैर्ऋत्यां, धनुर्वायव्यां, मीनराशिरैशान्यां च वर्तन्ते। एवं राशीन् विन्यस्य राशीनां ह्रस्वदीर्घवशात् शुभाशुभग्रहयोगेक्षणादिवशाच्च तत्तत्स्थानेषु "जीर्णं संस्कृतम्" इत्याद्युक्तप्रकारेण विशेषो वाच्यः। अत्र पापोऽपि स्वगृहोच्चादिवशाच्छुभफलमेव कुर्यात्। वक्ष्यमाण "शय्यास्वपि वास्तुवद्" इत्यस्य वास्तुविन्यासत्वं सूचितम्। गृहनिर्माणेऽप्यनेन वास्तुविन्यासेन जलराशिस्थाने कूपखननं प्रयोजनवद्भवति। चक्रलेखनक्रमश्च सूचितः। तथा चोक्तं जातकपारिजाते—

"पञ्च प्राचीरालिखेद्बाणसङ्ख्यास्तिर्यग्रेखावर्जितान्तश्चतुष्काः।
प्रागादीशा द्वादश व्योमवासा ज्योतिश्चक्रस्वामिनस्तूबराद्याः॥" इति।

शय्यास्वपि अपिशब्दात्तत्रापि पूर्वोक्तलक्षणप्रकारेण जीर्णादिलक्षणं वाच्यम्। शय्यासु षट्त्रिनवान्त्यसंस्थितैः पादैः वास्तुवद्वदेत्। इतरे भावाः पादान्तरालस्था इत्यपि सिद्धम्। उदयराशिना तद्दिशि शिरः प्रकल्प्यम्। तृतीयो भावः शिरोभागे दक्षिणस्थपादः। द्वादशो वामस्थपादः। एवं षष्ठनवमभावावितरभागे दक्षिणवामपादौ। पर्यङ्कादीनामन्तरालभागा इतरे भावाः। एवं प्रकल्प्योभयराशिवशात् तद्भावस्य वक्रत्वं पापाक्रान्तत्ववशात् तद्भागस्य दोषं शुभाश्रयवशाद्गुणं च वदेत्। एवं दृष्टिवशादपि चिन्त्यम्। अत्रापि स्वक्षेत्रोच्चादिस्थितपापोऽपि शुभकर एव। राशीनां ह्रस्वदीर्घादिवशादपि विशेषो निरूपणीयः।

वैतालीयं छन्दः। अनेन शय्यायाः निशाचरनरदेवांशकाः सूचिताः।

शय्यासु इति बहुवचनेन वस्त्रासनपादुका अपि गृह्यन्ते। वैतालीयेन छन्दसा वस्त्रस्य मष्यादिलिप्तत्वेन राक्षसांशच्छेदादिभिश्च रोगो मरणं वा भवतीति सूचितम्। उक्तं च संहितायाम्—

"वस्त्रस्य कोणेषु वसन्ति देवा नराश्च पाशान्तदशान्तमध्ये।
शेषास्त्रयश्चात्र निशाचरांशास्तथैव शय्यासनपादुकासु॥
लिप्ते मषीगोमयकर्दमाद्यैश्छिन्ने प्रदग्धे स्फुटिते च विद्यात्।
पुष्टं भवेद्वाल्पतरं च भुक्ते पापं शुभं वाऽधिकमुत्तरीये॥
रुग्राक्षसांशेष्वथवाऽपि मृत्युः पुंजन्म तेजश्च मनुष्यभागे।
भागेऽमराणामथ भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम्॥
छत्रध्वजस्वस्तिकवर्धमानश्रीवृक्षकुम्भाम्बुजतोरणाद्यैः।
छेदाकृतिर्नैर्ऋतभागगाऽपि पुंसां विधत्ते न चिरेण लक्ष्मीम्॥" इति।

क्रियादय इत्यश्विन्यादिनक्षत्राणामपि ग्राहकः। अनेन वस्त्रधारणस्य नक्षत्रवशात्फलं चिन्त्यमित्यपि सूचितम्। तथा च संहितायाम्—

प्रभूतवस्त्रदाश्विनी भरण्यथापहारिणी।
प्रदह्यतेऽग्निदैवते प्रजेश्वरेऽर्थसिद्धयः॥
मृगे तु मूषिकाद्भयं व्यसुत्वमेव शाङ्करे।
पुनर्वसौ शुभागमस्तदग्रभे धनैर्युतिः॥
भुजङ्गभे विलुप्यते मघासु मृत्युमादिशेत्।
भगाह्वये नृपाद्भयं धनागमाय चोत्तरा॥
करेण कर्मसिद्धयः शुभागमस्तु चित्रया।
शुभं च भोज्यमानिले द्विदैवते जनप्रियः॥
सुहृद्युतिश्च मित्रभे पुरन्दरेऽम्बरक्षयः।
जलप्लुतिश्च नैर्ऋते रुजो जलाधिदैवते॥

मृष्टमन्नमथ विश्वदैवते वैष्णवे भवति नेत्ररोगता ।
धान्यलब्धिमपि वासवे विदुर्वारुणे विषकृतं महाभयम् ॥
भद्रपदासु भयं सलिलोत्थं तत्परतश्च भवेत्सुतलब्धिः ।
रत्नयुतिं कथयन्ति च पौष्णे योऽभिनवाम्बरमिच्छति भोक्तुम् ॥
विप्रमतादथ भूपतिदत्तं यच्च विवाहविधावपि लब्धम् ।
तेषु गुणैरहितेष्वपि भोक्तुं नूतनमम्बरमिष्टफलं स्यात् ॥
भोक्तुं नवाम्बरं शस्तमृक्षेऽपि गुणवर्जिते ।
विवाहे राजसम्माने ब्राह्मणानां च सम्मते ॥

इति ॥ २१ ॥

अथोपसूतिकाज्ञानमाह—

**चन्द्रलग्नान्तरगतैर्ग्रहैः स्युरुपसूतिकाः ।**
**बहिरन्तश्च चक्रार्धे दृश्यादृश्येऽन्यथा परे ॥ २२ ॥**

इति । चन्द्रलग्नान्तरगतैः चन्द्रस्य लग्नस्य च अन्तरे गताः ये ग्रहाः तैः ग्रहैः उपसूतिकाः स्युः । अत्र लग्नाच्चन्द्रान्तं गणनीयमिति संप्रदायः । लग्नचन्द्रान्तरगतैरित्येव सुवचम् । तथा च जीवशर्मा—

"उदयशशिमध्यसंस्थैर्ग्रहैः स्युरुपसूतिकास्तत्र ॥" इति ।

तत्र विशेषमाह—दृश्यादृश्ये चक्रार्धे स्थितैर्ग्रहैर्बहिरन्तश्च स्युः । दृश्यचक्रार्धस्थैर्ग्रहैर्बहिःस्थितोपसूतिकानां सङ्ख्या वक्तव्या । अदृश्यचक्रार्धस्थितैर्ग्रहैरन्तःस्थितोपसूतिकानां सङ्ख्या वक्तव्या । चन्द्रे दृश्यार्धे स्थित एव द्विचक्रार्धसंस्थितिः संभवति । परे अन्ये अन्यथा वदन्ति । दृश्यार्धेनान्तःस्थिता अदृश्यार्धेन बहिःस्थिता वक्तव्या इति वदन्ति । तथा च जीवशर्मा—

"उदगर्धगतैर्बाह्ये दक्षिणगैरन्तरे ज्ञेयाः ॥" इति ।

आचार्यपक्षस्तु पूर्वोक्त एव । तथा चोक्तं स्वल्पजातके—

"शशिलग्नान्तरसंस्थग्रहतुल्याः सूतिकाश्च वक्तव्याः ।
उदगर्धेऽभ्यन्तरगा बाह्याश्चक्रस्य दृश्यार्धे ॥" इति ।

अत्रोपसूतिकासूचकग्रहेभ्यस्तासां जातिवयःस्वभावादयो निरूपणीयाः । तुङ्गवक्रादिवशादायुर्दायोक्तद्वित्रिगुणत्वं शत्रुनीचस्थैरनुपयोगित्वं च वाच्यम् ।

अनुष्टुप्छन्दः । द्वात्रिंशदक्षरयुक्तः श्लोकः । अत उपसूतिकानां लक्षणमपि शुभाशुभयोगवशाद् ज्ञेयमिति व्यञ्जितम् । तथा च सारावल्याम् —

"लक्षणरूपविभूषणयोगस्तासां शुभैर्योगात् ।
क्रूरैर्विरूपदेहा लक्षणहीनाः सुरौद्रमलिनाश्च ।
मिश्रैर्मध्यमरूपा बलसहितैः सर्वमेवमवधार्यम् ॥ २२ ॥" इति ।

अथ शरीरलक्षणवर्णज्ञानमाह—

**लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा ।**
**चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः ॥ २३ ॥**

इति । लग्ननवांशपतुल्यतनुः स्यात् । लग्ननवांशाधिपेन तुल्यशरीरः स्यात् । वीर्ययुतग्रहतुल्यतनुर्वा जननसमये यो ग्रहोऽतिबलवान् तत्तुल्यशरीरो वा भवति । चन्द्रसमेतनवांशपवर्णः चन्द्रेण समेतः चन्द्रसमेतः, चन्द्रसमेतो नवांशः चन्द्रसमेतनवांशः, तं पाति इति चन्द्रसमेतनवांशपः, तस्य वर्ण इव वर्णो यस्य स चन्द्रसमेतनवांशपवर्णः, चन्द्रादिनवांशराशीशस्य वर्णो जातस्य वाच्यः । लग्ननवांशाधिपस्य बलाधिक्यं चेत्तस्यैव वर्णो वक्तव्यः । "उदय-

रविशशाङ्क" इति सूर्याचन्द्रमसोर्लग्नतुल्यत्वं दर्शयति। लग्ननवांशपात् शरीराकृतिरुक्ता, चन्द्रनवांशपाद्वर्ण उक्तः। सूर्येणापि वक्तव्यम्। सूर्य-आत्मा। तस्य स्थानं हृदयम्। मूलाधारादिगणनया त्रिंशांशकस्य अनाहते स्थितिरुक्ता। अतः सूर्याधिष्ठितत्रिंशांशपवशात् स्वभावो वक्तव्यः। स्त्रीजातकाध्याये चन्द्रस्य त्रिंशांशकवशात्स्वभावो निरूप्यते। अतः सूर्यत्रिंशांशपवशात्प्रकृतिकथनं न्याय्यमेव। तथा च सारावल्याम्—

"त्रिंशद्भागे भानुर्ग्रहस्य यस्येह संस्थितो भवति।
तत्तुल्या प्रकृतिः स्यादेवं मुनयोऽध्यवस्यन्ति॥" इति।

'कादिविलग्नविभक्तभगात्रः' कं शिरः तदारभ्य "कालाङ्गानि वराङ्गमाननम्" इत्युक्तश्लोकानुसारेण विलग्नादिभी राशिभिर्विभक्तभगात्रो भवति। एवं विभक्तराश्युक्तगात्रवान् भवति। तत्तद्राशिवद्ध्रस्वदीर्घादि-त्वमङ्गानां वक्तव्यम्। राशिस्वभावस्तु तत्रस्थमप्यनुवर्तते। एवं ह्रस्वराशिगते ह्रस्वराश्यधिपेऽङ्गस्य अतिह्रस्वत्वं, मध्यराश्यधिपे ह्रस्वत्वं, दीर्घराश्यधिपे मध्यस्थत्वमित्यादि वाच्यम्। यत्र राशौ न कोऽपि वर्तते तद्राश्यवयवस्य राशिवद्दैर्घ्यादि वक्तव्यम्। वीर्ययुतग्रहतुल्यतनुर्वा वीर्य इत्यक्षरसङ्ख्यया चत्वारि एकं च, युत इत्यक्षरसंख्यासमुच्चयात् सप्त, ग्रह इत्यक्षरसङ्ख्या-सङ्कलनेन दश, एवं केन्द्रा निर्दिष्टाः। केन्द्रगततुल्यतनुर्वा भवतीति सूचितम्।

कादिविलग्नविभक्तभगात्र इति वक्ष्यमाण "कन्दृक्" इति श्लोकोक्त-प्रकारो वात्र ग्राह्यः।

वृत्तं चारणगीतम्। अनेन विभक्तभगात्र इति निर्देशेन च सामुद्रि-कालक्षणानुसारेणापि फलं भवतीत्यपि सूचितम्। एतत् "उन्मानमानगति" इत्यारभ्य—

" पुरुषलक्षणमुक्तमिदं मया मुनिमतान्यवलोक्य समासतः ।
इदमधीत्य नरो नृपसम्मतो भवति सर्वजनस्य च वल्लभः ॥"

इत्यन्तमेकेनाध्यायेनाऽऽचार्येण बृहत्संहितायामुक्तम् । तच्च दिङ्मात्रमिह दर्शितम् ॥ २३ ॥

एवं स्थिरचक्रेण गात्रलक्षणमुक्त्वाऽधुना चरचक्राङ्गविभागं करोति—

**कन्दृक्श्रोत्रनसाकपोलहनवो वक्त्रं च होरादय-**
**स्ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्तथा ।**
**वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी**
**जङ्घेऽङ्घ्रीत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा ॥ २४ ॥**

इति । होरादयः लग्नादिभावाः, कन्दृक्श्रोत्रनसाकपोलहनवः वक्त्रं च शिरः नेत्रं श्रोत्रं नासिका कपोलं हनुः वक्त्रं च उभयत्र वामदक्षिणभागयोर्भवन्ति । उदितैः वामं दृश्यार्धं वामाङ्गं भवति । एवं लग्नस्योदितभागः शिरसो वामभागः, अनुदितो दक्षिणभागः । द्वितीयो भावो दक्षिणनेत्रं, द्वादशः वामनेत्रम् । तृतीयो भावो दक्षिणश्रोत्रं, एकादशो भावो वामश्रोत्रम् । चतुर्थो दक्षिणनासिका, दशमो वामनासिका । पञ्चमो दक्षिणकपोलम्, नवमो वामकपोलम् । षष्ठो दक्षिणहनुः, अष्टमो वामहनुः । सप्तमस्यादृश्यभागो दक्षिणवक्त्रं, दृश्यभागो वामवक्त्रम् । तथानेनैव प्रकारेण ते होरादयः कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिः । लग्नस्यादृश्यभागो दक्षिणकण्ठः, दृश्यभागो वामकण्ठः । द्वितीयभावो दक्षिणांसकः, द्वादशो वामांसक इत्यादि । तथा वस्तिः लग्नस्यादृश्यभागो दक्षिणवस्तिः, दृश्यभागो वामवस्तिः । शिश्नगुदे द्वितीयो भावः शिश्नगुदयोर्दक्षिणभागः, द्वादशस्तु वामो भागः । ततश्च वृषणौ तृतीयो दक्षिणवृषणः, एकादशः

वामवृषणः। ऊरू चतुर्थो दक्षिणोरुः, दशमो वामोरुः। ततो जानुनी पञ्चमभावो दक्षिणजानु, नवमो वामजानु। जङ्घे षष्ठो दक्षिणजङ्घा, अष्टमो वामजङ्घा। अङ्घ्री सप्तमभावस्यादृश्यभागो दक्षिणाङ्घ्रिः, दृश्यभागो वामाङ्घ्रिः। इति द्रेक्काणभागैः लग्नस्य प्रथमादिद्रेक्काणवशात् त्रिधा त्रिप्रकारेण अङ्गानि भवन्ति। लग्नस्य प्रथमद्रेक्काणे जातस्य होरादयः कन्दृक्श्रोत्रनसाकपोलहनुवक्त्राणि भवन्ति। द्वितीयद्रेक्काणजस्य होरादयः कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिश्च भवन्ति। तृतीयद्रेक्काणजस्य होरादयो वस्त्यादयो भवन्ति। एवं केचिदूर्ध्वभागमध्यभागाधोभागाङ्गानां व्यवस्थां कुर्वन्ति। अन्ये तु द्रेक्काणभागैस्त्रिधा इत्यस्य षट्त्रिंशद्द्रेक्काणैरेतान्यङ्गानि निरूपणीयानीति व्याकुर्वन्ति। तत्पक्षे प्रथमद्रेक्काणजातस्य लग्नस्य प्रथमद्रेक्काणः शिरः, द्वितीयः कण्ठः, अन्त्यो वस्तिः, द्वितीयभावस्य प्रथमद्रेक्काणो दक्षिणाक्षि, द्वितीयो दक्षिणांसकः, अन्त्यः शिश्नगुदयोर्दक्षिणभागौ, द्वादशस्य भावस्य प्रथमद्रेक्काणो वामनेत्रं, द्वितीयो वामांसकः, अन्त्यः शिश्नगुदयोर्वामभागौ इत्यादि। लग्नस्य मध्यद्रेक्काणे जातस्य लग्नस्य मध्यद्रेक्काणः शिरः, अन्त्यः कण्ठः, प्रथमो वस्तिः इत्यादि। लग्नस्य अन्त्यद्रेक्काणे जातस्य लग्नस्य अन्त्यद्रेक्काणः शिरः, प्रथमः कण्ठः, मध्यः वस्तिः इत्यादि। कृष्णीये तु—

> "होरोत्तमाङ्गसंस्था दक्षिणवामावनागतातीतौ।
> कर्णाक्षिनासिकापुटकपोलहनवोऽथ वक्त्रान्ताः॥
> ग्रीवांसभुजौ पार्श्वे पृष्ठे हृदयोदरे कटिश्चान्त्यम्।
> नाभिर्वस्तिगुदाण्डा मुष्का पूर्वोदयौ द्वौ द्वौ॥"

इति पूर्वोक्तः पक्ष आदृतः।

द्रेक्काणभागैरित्यनेनैव त्रिधेति सिद्धे पुनः त्रिधा इति निर्देशात् कश्चनार्थविशेषः सूचितः।

वृत्तं शार्दूलविक्रीडितम् । सूर्याश्रयतियुतम् । अनेन द्वादशराशिवशात् सप्तग्रहवशाच्च चिन्त्यमिति सूचितम् । त्रिधा इति त्रिप्रकारत्वकथनाद् बलवशेन द्रेक्काणैः शीर्षोदयादिराशिभिरूर्ध्वमुखादिराशिभिश्च स्थानविशेषो वक्तव्यः । तत्र द्रेक्काणाधिपे बलवति द्रेक्काणवशाद् अङ्गानि कल्प्यानि । लग्नस्य बलवत्वे शीर्षोदयादिराशिभिरङ्गानि चिन्त्यानि । सूर्यस्य बलवत्वे ऊर्ध्वमुखादिराशिभिरङ्गानि चिन्त्यानि । एष हि संप्रदायः ॥ २४ ॥

उक्तस्थानेषु ग्रहयोगदृष्टिप्रयुक्तविशेषमाह—

**तस्मिन् पापयुते व्रणः शुभयुते दृष्टे च लक्ष्मादिशेत्**
**स्वर्क्षांशस्थिरसंयुते च सहजः स्यादन्यथागन्तुकः ।**
**मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः**
**सूर्ये काष्ठचतुष्पदेन हिमगौ शृङ्ग्यब्जजोऽन्यैः शुभः ॥२५॥**

इति । तस्मिन् द्रेक्काणे राशौ वा पापयुते पापग्रहेण युक्ते व्रणः तदङ्गे व्रणो वक्तव्यः । शुभयुते दृष्टे च शुभेन युक्ते दृष्टे वा लक्ष्म किणादिलाञ्छनं आदिशेत् परत्वात् शुभयोगदृष्ट्योः प्राबल्यम् । अतः पापयुक्तेऽपि शुभयोगदृष्टिभ्यां लक्ष्मैवादिशेत् । न तु व्रणः तत्कृतचिह्नं वेति लक्ष्मशब्दप्रयोगसामर्थ्यात् सिद्धम् । तत्र सहजागन्तुकविशेषमाह । स्वर्क्षांशस्थिरसंयुते कारकग्रहे स्वराशिस्थे स्वनवांशस्थे स्थिरराशिस्थे वा सहजः व्रणः लक्ष्म वा सहजं स्यात् । अन्यथा स्वर्क्षांशस्थिरसंयुताभावे तु आगन्तुकः जननानन्तरं वक्ष्यमाणकारणैर्जनितो भवति । व्रणकारणमाह । मन्दे शनौ व्रणकारके अश्मानिलजः अश्मना वातरोगेण वा जातो व्रणः । भौमे कुजे व्रणकारके अग्निशस्त्रविषजः अग्निना शस्त्रेण विषेण वा जनितो व्रणः । बुधे

पापयुक्तबुधे व्रणकारके भूभवः भूपतनभूम्यभिघातजनितो व्रणः। सूर्ये व्रणकारके काष्ठचतुष्पदेन काष्ठेन गोमहिषादिचतुष्पदैर्वा जनितो व्रणः। हिमगौ क्षीणचन्द्रे व्रणकारके शृङ्गयब्जजः शृङ्गिभिः मत्स्यादिजलचरैर्वा जनितो व्रणः। मन्दयोगेनाश्मघातजो मन्ददृष्ट्या वातज इति विवेकः। तथैव कुजयोगेनाग्निजः कुजदृष्ट्या शस्त्रजः पापयुतवृश्चिकस्य कुजदृष्ट्या विषज इत्यवगन्तव्यम्। सूर्ययोगेन वृक्षकृतो दृष्ट्या चतुष्पाज्जनितश्च व्रणो भवति। चन्द्रयोगेन शृङ्गकृतो दृष्ट्या जलजन्तुकृतश्च भवति। मन्देनाश्मजत्वं बुधेन भूभवत्वं चोक्तम्। तत्र बुधेन क्षिप्तपाषाणखण्डजत्वं मन्देन भूमिष्ठाश्मजत्वं चेति ज्ञेयम्। अन्यैः शुभग्रहैः गुरुशुक्रपापयोगरहितबुधशुक्ल चन्द्रैः शुभः तत्तदङ्गस्य भूषणमेव स्यात्।

वृत्तं शार्दूलविक्रीडितम्। अतिधृतिश्छन्दः। अतः एकोनविंशतिवत्सरैर्भगणं भुञ्जानौ राहुकेतू सूचितौ। तावपि भूच्छायास्वरूपत्वाद् भौमावेव। अतः "अग्निशस्त्रविषज" इत्यत्र शिखिना अग्निकृतव्रणं राहुणा विषकृतं व्रणं च वदेत्॥ २५॥

पुनरपि व्रणाद्याप्तिलक्षणमाह—

**समनुपतिता यस्मिन् गात्रे त्रयः सबुधा ग्रहा**
**भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा।**
**व्रणकृदशुभः षष्ठे लग्नात्तनौ भसमाश्रिते**
**तिलकमषकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान्॥ २६॥**

इति। सबुधाः बुधसहिताः। शुभेषु सौम्येषु। अशुभेषु वा पापेषु वा। त्रयः ग्रहाः त्रयः शुभग्रहाः, त्रयः पापाः, त्रयो मिश्रा वा। एते चत्वारो ग्रहाः यस्मिन् गात्रे यद्गात्रे, समनुपतिताः स्थिताः, तस्य तद्गात्रस्य,

अवाप्तिः व्रणस्य भूषणस्य वा लब्धिः, नियमात् संशयं विना भवति। चतुर्णां ग्रहाणां मध्ये यो बलवान् तस्य शुभाशुभत्ववशाद् व्रणः भूषणं वा तद्दशाकाले भवतीति भावः।

लग्नात् षष्ठे अशुभः पापः। भसमाश्रिते तनौ "कालाङ्गानि वराङ्गमाननम्" इति गणनेन लग्नात्षष्ठः यदङ्गं तस्मिन् व्रणकृत्। स च अशुभः सौम्यैः शुभैः दृष्टः तिलकमषकृत्। तिलकः कृष्णतिलतुल्यदेहगतचिह्नविशेषः। मषो रोम। तिलकमषरूपविकृतिं करोतीत्यर्थः। युतश्च शुभैर्युतश्चेत् सलक्ष्मवान् लक्ष्मवांश्च भवति।

व्रणकृदिति व्रणकारकः षष्ठेशः सः अशुभः लग्नात् षष्ठे इत्यक्षर-सङ्ख्यया षट्द्वौ सङ्कलनेन अष्टौ च भवति। अष्टमे इत्यर्थः। तनौ लग्ने वा भसमाश्रिते वा भसम इत्यक्षरसङ्ख्यया चतुःसप्तत्यधिकपञ्चशतं भवति। भगणशोधनेन दश भवति। अतो भसमाश्रिते इत्यस्य दशमस्थानमाश्रिते वेत्यर्थः। एवं षष्ठेशे पापे अष्टमे लग्ने दशमे वा स्थिते च स षष्ठेशो व्रणकृद्भवति। आह च भगवान् पराशरः—

"षष्ठाधिपोऽपि पापश्चेद्देहे वाऽप्यष्टमे स्थितः।
तदा व्रणो भवेद्देहे कर्मस्थानेऽप्ययं विधिः॥" इति।

वृत्तं हरिणी। "रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणात्। रसयुगहययतियुता। अतः षष्ठभावः सुखभावश्च सप्तकारकैरपि चिन्त्याविति सूचितम्। पित्रादिकारकवशात्तेषामपि व्रणो वाच्यः। सप्तग्रहवशाद् व्रणयुक्ताङ्गमपि वाच्यम्। तथा च पराशर-होरायाम्—

"एवं पित्रादिभावेशात्तत्तत्कारकसंयुताः।
व्रणाधिपयुताश्चापि षष्ठाष्टमयुता यदि॥

तेषामपि व्रणं वाच्यमादित्येन शिरोव्रणम् ।
इन्दुना च मुखे कण्ठे भौमेन ज्ञेन नाभिषु ॥
गुरुणा नासिकायां च भृगुणा नयने वदेत् ।
शनिना राहुणा कुक्षौ केतुना च तथा भवेत् ॥
तेषामपि व्रणं वाच्यं व्रणरोगविचिन्तने ॥" इति ॥ २६ ॥

**इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां**
**जन्मकाललक्षणं नाम पञ्चमोऽध्यायः ॥**

---

श्रीः

## बालारिष्टाध्यायः ॥ ६ ॥

अहीन्द्रलोकं बलये प्रदाय सुरेन्द्रराज्यं हरये ददौ यः ।
खगेन्द्रकेतुं करुणाम्बुधिं तमुपेन्द्रसंज्ञं भगवन्तमीडे ॥

अथ जन्मकाललक्षणनिरूपणानन्तरं तत्रोक्तानाम् आगन्तुकव्रणादीनां सद्योमरणलक्षणाभाव एव संभवाद् अत्र सद्योमरणलक्षणमाह—

**सन्ध्यायां हिमदीधितिहोरा क्रूरैर्भान्तगतैर्निधनाय ।**
**प्रत्येकं शशिपापसमेतैः केन्द्रैर्वा स विनाशमुपैति ॥ १ ॥**

इति । सन्ध्यायां दिनरात्र्योः सन्ध्यायाम्, प्रातस्सन्ध्यायां सायंसन्ध्यायां वा । तत्र प्रातस्सन्ध्या नक्षत्राणां प्रकाशक्षयारम्भात् सूर्यस्यार्धोदयपर्यन्तं भवति । सायंसन्ध्या सूर्यस्यार्धास्तमयादारभ्य नक्षत्राणां सुव्यक्तित्वप्राप्ति-पर्यन्तं भवति । उक्तं चाचार्येण संहितायाम्—

"अर्धास्तमयादूर्ध्वं व्यक्तीभूता न तारका यावत् ।
तावत्सायंसन्ध्या प्रातस्सन्ध्याऽपि ताराणाम् ॥
तेजःपरिहाणिमुखाद्भानोरर्धोदयो यावत् ॥" इति ।

हिमदीधितिहोरा चन्द्रहोरा ओजराशीनामुत्तरार्धानि युग्मराशीनां पूर्वार्धानि । भान्तगतैः यत्र कुत्रापि राशिष्वन्त्यभागस्थितैः पापैः निधनाय मरणाय भवतीति शेषः । राश्यन्तगतेषु पापेषु सन्ध्याकाले चन्द्रहोरायां

जननं सद्योमरणप्रदायकमिति भावः। प्रत्येकमित्यन्यो योगो दर्शितः। शशिपापसमेतैर्वा चन्द्रेण पापैश्च युक्तैः केन्द्रैः सः जातः विनाशमुपैति सद्यो मरिष्यति। एकैकस्मिन् केन्द्रे एकैको ग्रह इष्यते।

अत्र सन्ध्यायामिति सन्ध्या इत्यक्षरसङ्ख्यया सप्त एकं च भवति सङ्कलनेन अष्टौ। अतो बालारिष्टयोगा अष्टवर्षावधिका इति सूचितम्। तथा चोक्तम्—

"अष्टौ बालारिष्टमादौ नराणां
योगारिष्टं प्राहुराविंशतेः स्यात्॥" इति।

हिमदीधितिहोरा। होराश्चतुर्विंशतिस्तासु हिमदीधितिहोरा द्वादश। अतो हिमदीधितिहोरा इति द्वादशोपलक्षणम्। द्वादशाब्दपर्यन्तमित्यर्थः। भान्तगतैः भ अ अन्तगतैः भ इत्यक्षरसङ्ख्यया चत्वारि। अतश्चतुर्थभावसूचितमाता भकारेण गृह्यते। अ इति वर्णानां मध्ये आद्यत्वात्पितृसूचकः। अन्त इति शिशुः। मातृपितृशिशुगतैरित्यर्थः। पापैः प्रत्येकं भान्तगतैः चतुरब्दान्तगतैः हिमदीधितिहोरा द्वादशाब्दाः निधनाय भवन्ति। पितृमातृशिशूनां पापवशादाद्वादशाब्दं जातस्य मरणं भवति। तत्र आद्यचतुष्के मातृकृतपापैः, द्वितीयचतुष्के पितृकृतपापैः, तृतीयचतुष्के स्वकीयदोषैश्च म्रियते। तथा चोक्तम्—

"आद्वादशाब्दं नरयोनिजन्मनामायुष्कला निश्चयितुं न शक्यते।
मात्रा च पित्रा कृतपापकर्मणा बालग्रहैर्नाशमुपैति बालकः॥
आद्ये चतुष्के जननीकृताघै-
र्मध्ये च पित्रार्जितपापसङ्घैः।
बालस्तदन्त्यासु चतुश्शरत्सु
स्वकीयदोषैः समुपैति नाशम्॥" इति।

हिमदीधितिहोरा चन्द्रलग्नं चन्द्र एव । हिमदीधितिहोरापापैः चन्द्रेण पापैश्च । सन्ध्यायां भान्तगतैः सन्ध्यात्मकभान्तगतैः गण्डान्तगतैरित्यर्थः । पङ्क्तिश्छन्दः पाददृष्टिस्मारकम् । अतः पापदृष्ट्यापि फलं वक्तव्यमिति सूचितम् । गण्डान्तनक्षत्रस्थस्य चन्द्रस्य पापयोगदृष्टिवशात्सद्यो मरणं भवति । भान्तगतैः भं राशिः नक्षत्रं वा, तस्य अन्तः मृत्युभागः । मृत्युभागस्थश्चन्द्रः पापदृष्टो मृत्युद इति व्यञ्जितम् । तथा च जातकपारिजाते—

> "गण्डान्ततारासहिते मृगाङ्के
> पापेक्षिते पापसमन्विते वा ।
> बालो लयं याति समृत्युभागे
> चन्द्रे तथा पापनिरीक्षिते वा ॥" इति ।

शशिपापसमेतैः केन्द्रैर्वासविनाशमुपैति केन्द्रेषु पापेषु क्षीणचन्द्रे च जातो वासविनाशं प्राप्नोति। गृहरहितो भवतीत्यपि वक्तव्यम् । वासः आधानादारभ्य जननपर्यन्तं वासस्थानं माता । माता वा म्रियते इत्यर्थः ।

वा सविना शम् उपैति इति वा पदच्छेदः । सवो यज्ञः । तस्यापत्यं यज्ञफलम् । तेन शम् शुभफलम् उपैति प्राप्नोति । वा आसविना शमुपैति । आसवशब्दः सर्वौषधानामुपलक्षणम् । तस्यापत्यमौषधजनितशुभफलम् । होमार्चनादिभिश्चिकित्सादिभिरेव बालमाद्वादशाब्दं रक्षेदिति भावः । तथा च मन्त्रेश्वरः—

> "तद्दोषशान्त्यै प्रतिजन्मतारमाद्वादशाब्दं जपहोमपूर्वम् ।
> आयुष्करं कर्म विधाय तातो बालं चिकित्सादिभिरेव रक्षेत् ॥"

इति ॥ १ ॥

अथ चक्रस्य पूर्वापरभागाश्रितग्रहवशात् सद्यो मरणमाह—

**चक्रस्य पूर्वेतरभागगेषु क्रूरेषु सौम्येषु च कीटलग्ने ।**
**क्षिप्रं विनाशं समुपैति जातः पापैर्विलग्नास्तमयाभितश्च ॥ २ ॥**

इति । कीटलग्ने वृश्चिकलग्ने जातः । चक्रस्य पूर्वेतरभागगेषु पूर्वभागः मध्यादिपातालान्तं दशमापरार्धैकादशद्वादशलग्नद्वितीयतृतीयचतुर्थपूर्वार्धानि, इतरभागः पातालादिमध्यान्तमितरे भावाः । क्रूरेषु सौम्येषु च पापेषु पूर्वभागगेषु सौम्येषु अपरभागगेषु सत्सु क्षिप्रं विनाशं समुपैति सद्यो म्रियते । तथा च सारावल्याम्—

"चक्रस्यापरभागे सौम्याः पापास्तथेतरे चैव ।
वृश्चिकलग्ने जाता गतायुषो वज्रमुष्टियोगेऽस्मिन् ॥" इति ।

अत्र कीटशब्देन कर्कटकोऽपि गृह्यते । तथा चोक्तं बादरायणेन—

"पूर्वापरभागगतैरशुभैरलिकर्कटे लग्ने ।
जातस्य शिशोर्मरणं सद्यः कथयति यवनेन्द्रः ॥" इति ।

अत्र चक्रस्य पूर्वभागस्थैः क्रूरैरपरभागस्थैः शुभैश्चाशुभफलं दर्शितम् । अनेन चक्रस्य पूर्वभागस्थैः शुभैरपरभागस्थैः पापैश्च शुभफलं व्यञ्जितम् । तथा च कृष्णीये—

"मध्याह्नचतुर्थाभ्यां पूर्वार्धगता शुभा विवृद्धिकराः ।
कुर्युः पापा हानिं सर्वे मध्यच्युताश्च्यवनाः ॥" इति ।

पूर्वशब्देन पूर्वजन्मार्जितपुण्यपापसूचकधर्मस्थानं गृह्यते । पूर्वेतर-भागगेषु क्रूरैः सौम्यैश्चाशुभफलं वक्तव्यम् । अनेन नवमस्थशुभाः शुभं कुर्युः, पापा अनिष्टफलदाश्च भवन्तीति सिद्धम् ।

विलग्नास्तमयाभितः विलग्नस्य अस्तमयस्य च अभितः उभयपार्श्वयोः द्वादशद्वितीयाष्टमषष्ठभावेष्वित्यर्थः । पापैर्जातः विनाशं समुपैति । अस्मिन्योगे "निधनारिधनव्ययस्थिता" इति नेत्रनाशं वक्ष्यति । योगस्य शुभदृष्टियोगेनापवादोऽपि वक्तव्यः । द्वादशद्वितीयगैः पापैरेको योगः षष्ठाष्टमगैः पापैरपरो योग इति केचित् । तथा च सारावल्याम्—

"लग्नाद्द्वादशधनगैः क्रूरैर्म्रियते च रन्ध्ररिपुगैः ।
शुभसंपर्कमयातैर्मासे षष्ठेऽष्टमे वाऽपि ॥" इति ।

अरिव्ययगतैः पापैरेको योगः, द्वितीयाष्टमगैः पापैरपरो योग इति पक्षान्तरम् । चत्वारोऽपि योगा गर्गाचार्येणोक्ताः—

"अरिव्ययगतैः पापैर्यदि वा धनमृत्युगैः ।
लग्ने वा पापमध्यस्थे द्यूने वा मृत्युमाप्नुयात् ॥" इति ।

वृत्तमिन्द्रवज्रा । अनेन लग्नस्य गुरुदृष्ट्या अरिष्टशान्तिर्वाच्येति सूचितम् ॥ २ ॥

**भौमे विलग्ने शुभदैरदृष्टे षष्ठेऽष्टमे वाऽर्कसुतेन युक्ते ।**
**तौ चार्कसंस्थौ शुभदृष्टिहीनौ जातस्य सद्यः कुरुतः प्रणाशम् ॥३॥**

भौमे कुजे विलग्ने षष्ठे अष्टमे वा अर्कसुतेन युक्ते शनिना युक्ते शुभदैः शुभैः अदृष्टे तौ जातस्य सद्यः प्रणाशं कुरुतः । विलग्ने वि इत्यक्षरसङ्ख्यासूचितचतुष्टयलग्ने केन्द्रे इत्यर्थः । षष्ठे अष्टमे भौमे भौमक्षेत्रे । वाऽर्कसुतेन व इति वक्रगत्युपलक्षकम् । वक्रशनिना युक्ते शुभदैरदृष्टे, अनेनैव पापेन भौमेन दृष्टे इत्यपि व्यञ्जितम् । अस्मिन्योगे जातो म्रियते । तथा च सारावल्याम्—

"वक्री शनिर्भौमगृहं प्रपन्नश्छिद्रे च षष्ठे च चतुष्टये वा ।
कुजेन संप्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् ॥" इति।

इन्द्रवज्रावृत्तम्। इन्द्रदेवताकगुरुणाऽपि वक्तव्यम्। षष्ठे चन्द्रबुधशुक्र-सूर्यकुजगुरुशनि इति कक्ष्याक्रमेण षष्ठे गुरौ भौमे कुजक्षेत्रे, अष्टमे शुभदै-रदृष्टे, अत एव पापैर्दृष्टे नाशदो भवति । तथा च सारावल्याम्—

"बृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्तिः ।
अब्दैस्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम् ॥" इति ।

तौ च भौमशनी अर्कसंस्थौ मूढौ शुभदृष्टिहीनौ च भवेतां यदि जातस्य सद्यः प्रणाशं कुरुतः । अर्के इति द्वादश च, अतो द्वादशस्थौ रविसहितौ शनिकुजौ मरणप्रदौ भवतः । तथा च यवनेश्वरः—

"पापेषु लग्नाभिमुखेषु नश्येदवाप्तवीर्येष्वशुभर्क्षजेषु ॥" इति ।

तौ शनिकुजौ अर्कसंस्थौ सूर्ययुतौ अष्टमे षष्ठे षष्ठग्रहस्य शुक्रस्य क्षेत्रे चेज्जातो म्रियते । तथा च सारावल्याम्—

"भौमदिवाकरसौराश्छिद्रे जातस्य शुक्रगृहे ।
म्रियते स नरोऽवश्यं यमकृतरक्षोऽपि मासेन ॥" इति ।

अर्कसुतेन यमेन युक्तेऽपि स्नेहभावे स्थितेऽपि, अत एव तेन रक्षितो-ऽपि इत्यर्थमनुसृत्यैव यमकृतरक्षोऽपि इति कल्याणवर्मणोक्तम् । तौ चार्कसंस्थौ तौ कुजशनी चन्द्रश्च । "निधनारिधनव्ययस्थिताः" इत्यत्र चन्द्रस्य कुजशनिसूर्यैः साहचर्यं व्यञ्जितम् । अर्कसंस्थौ सूर्ययुक्तौ चेज्जातो म्रियते । तथा च सारावल्याम्—

"भास्करहिमकरसहितः शनैश्चरो मृत्युदः प्रसवकाले ।
वर्षैर्नवभिर्यातैरित्याह ब्रह्मशौण्डमतम् ॥" इति ।

भौमे राहौ विलग्ने वि इत्यक्षरसङ्ख्यासूचितचतुष्टयलग्ने चतुष्टये शुभदैरदृष्टे, अत एव पापैर्दृष्टे जातो म्रियते। उक्तं च सारावल्याम्—

"राहुश्चतुष्टयस्थो मरणाय निरीक्षितो भवति पापैः।
वर्षैर्वदन्ति दशभिः षोडशभिः केचिदाचार्याः॥" इति।

तौ च विलग्ने, तौ च, लग्ने अंशकलग्नचन्द्रलग्नयोश्च अर्कसंस्थौ मूढं गतेषु लग्नांशकलग्नचन्द्रलग्नानां मौढ्यासम्भवाद् लग्नांशकलग्नचन्द्रलग्नपेषु मूढं गतेष्वित्यर्थः। अस्मिन्योगे जातः सद्यो म्रियते। तथा च सारावल्याम्—

"अंशाधिपजन्मपती लग्नपतिश्चास्तमुपगता यस्य।
संवत्सरैस्तु मरणं निर्व्याजं कतिपयैरेव॥" इति।

शुभदैः षष्ठे अष्टमे सौम्यैः षष्ठे अष्टमे वा स्थितैः। शुभदैरदृष्टे अत एव वा अशुभदैः वक्रगतपापग्रहैर्दृष्टैर्जातो म्रियते। तथा च सारावल्याम्—

"सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपसङ्गतैर्दृष्टाः।
मासेन मृत्युदास्ते यदि न शुभैस्तत्र दृष्टाश्च॥" इति॥ ३॥

अथ उदयास्तगतपापवशादरिष्टलक्षणमाह—

**पापावुदयास्तगतौ क्रूरेण युतश्च शशी।**
**दृष्टश्च शुभैर्न यदा मृत्युश्च भवेदचिरात्॥ ४॥**

इति। पापौ उदयास्तगतौ लग्नसप्तमस्थौ, लग्ने एकः पापः सप्तमे एकः, क्रूरेण युतश्च तृतीयपापेन युतश्च शशी शुभैर्दृष्टश्च यदा न भवेत् तदा जातस्य अचिरात् क्षिप्रमेव मृत्युर्भवेत्। लग्नस्य पापदृष्टियोगौ चन्द्रस्य पापयोगश्च मृत्युकरा इत्यर्थः। अनेन चन्द्रस्य पापत्रयवीक्षणे मातृनिधनं वाच्यम्। रवेः पापद्वयवीक्षणयोगे पितृमरणमपि वाच्यमिति अर्कदेवताकानुष्टुभेन छन्दसा सूचितम्। तथा च सारावल्याम्—

" यत्रस्थस्तत्रस्थः क्षितिजार्कजशनैश्चरेक्षितश्चन्द्रः ।
जननीमृत्युं कुर्यान्न तु सौम्यनिरीक्षितः सद्यः ॥
रुधिरशनैश्चरदृष्टो दिवसकरो दिवसजन्मनि तु यस्य ।
पापयुतो वा हन्यात् पितरं निःसशयं जातः ॥ " इति ।

वृत्तं कबरी । " तोजोल्गयुता कबरी " इति लक्षणात् । " कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः " इत्यमरसिंहवचनेन कबरी केशवेशः । अनेन स्त्रीविषयकमयं विधिरिति सूचितम् । "बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका।" इत्यमरकोशोक्त्या कबरी खरपुष्पा वा । अनेन खरपुष्पितत्वं सूचितम् । एवमनेन वृत्तेनास्मिन्योगे प्रथमार्तवयुक्ता नार्यशुभफलं प्राप्नोतीति व्यञ्जितम् । दृष्टश्च इति चकारेण शुभयोगः शुभकेन्द्रस्थितिश्चाप्यस्य योगस्य भङ्गकारको भवतीति सूचितम् । शशीशब्देन क्षीणचन्द्रो विवक्षितः ॥ ४ ॥

अथ पापयुतचन्द्राक्रान्तराशिवशादरिष्टमाह—

**क्रूरसंयुतः शशी स्मरान्त्यमृत्युलग्नगः ।**
**कण्टकाद्बहिः शुभैरनीक्षितश्च मृत्युदः ॥ ५ ॥**

इति । शशी चन्द्रः, क्रूरसंयुतः कुजसंयुतः, स्मरान्त्यमृत्युलग्नगः सप्तमव्ययाष्टमलग्नस्थितः, कण्टकात् केन्द्रात् बहिः बहिःस्थितैः, शुभैरनीक्षितश्च मृत्युदः मरणदो भवति । संयुत इति समकलास्थितिः सूचिता । कण्टकाद्बहिः शुभैरिति नियमार्थम् । यदि शुभाः कण्टकाद्बहिःस्थितास्तदा तद्वीक्षणेनैव योगभङ्गः स्यात् । शुभेषु कण्टकाद्बहिःस्थितेष्वेव योगोऽयं प्रवर्तते । तथा च सारावल्याम्—

" व्ययाष्टसप्तोदयगे शशाङ्के पापैः समेते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु जातस्य सद्यः कुरुते प्रणाशम् ॥ " इति ।

अनेन केन्द्रसंस्थशुभस्यारिष्टभङ्गकर्तृत्वं सूचितम्। तथा च सारावल्याम्—

"गुरुशुक्रौ च केन्द्रस्थौ जीवेद्वर्षशतं नरः।
ग्रहानिष्टं हिनस्त्याशु चन्द्रानिष्टं तथैव च॥" इति।

उष्णिगनुष्टुप्छन्दोयुतमर्धसमवृत्तम्। अनुष्टुप्छन्दसि प्रमाणिका-वृत्तम्। "प्रमाणिका जरौ लगौ" इति लक्षणात्। पञ्चदशाक्षरयुक्तार्ध-द्वययुक्तः श्लोकः। अनेन पक्षद्वययुक्तचन्द्रः सूचितः। त्रिंशदक्षरै-स्त्रिंशद्भागात्मको राशिः स्मारितः। क्रूरसंयुतः शशी इति निर्देशाच्च राशिषु मृत्युभागयुक्तश्चन्द्रो मृत्युकर इति व्यञ्जितम्। उक्तं च सारावल्याम्—

"कुम्भे दिशति शशाङ्को भागे मृत्युं तथैकविंशाख्ये।
सिंहे च पञ्चविंशे वृषे च नवमे तथैवोक्तः॥
अलिनि त्रिविंशतियुते मेषे च तथाष्टमे दिशति मृत्युम्।
कर्कटके द्वाविंशे तुलिनि चतुर्थे मृगे विंशे।
कन्यायां प्रथमेंऽशे धनुर्धरेऽष्टादशे झषे दशमे।
मिथुने च द्वाविंशे शशी प्रसूतस्य मरणकरः॥" इति।

केचिदेते लग्नस्य मृत्युभागा इति वदन्ति। तत्पक्षे चन्द्रस्य मेषादि-मृत्युभागास्तु—

"तनुः शरारारिशराः किरीटिनो
धना गुरुस्तोकनखा नरानुकाः।
शशाङ्कभागा यदि तुम्बरादिका
मुहूर्तजन्मादिषु मृत्युसूचकाः॥"

इत्युक्तप्रकारेण द्रष्टव्याः। अत्र सप्ताक्षरयुक्तौजपादाभ्यां सप्तग्रहाणामपि मृत्युभागवशाच्चिन्त्यमिति सूचितम्। ग्रन्थान्तरेषु विस्तरतो निरूपिता

एतेऽत्र दिङ्मात्रेण दर्शिताः। पञ्चदशाक्षरयुतार्धेन चन्द्रस्य पक्षबलवशाच्चापि चिन्त्यमिति सूचितम्।

अत्र क्रूरशब्देन कुज एव विवक्षितः। अन्यथा "सुतमदन-वमान्त्य" इति शीतरश्मियोगेनैव सिद्धत्त्वादस्य वैयर्थ्यदोषः प्रसज्येत। शीतरश्मियोगस्यापवादोऽयं विधिः। स्मरान्त्यमृत्युलग्नगः कुजसंयुतः शशी उक्तमृत्युयोगकरः। स्मरान्त्यमृत्युलग्नगः शशी कुजेतरपापयुक्तः, सुतनव-मगः पापयुक्तः शशी च शीतरश्मियोगकरः ॥ ५ ॥

अथ योगान्तरमाह—

**क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः।**
**केन्द्रेषु शुभाश्च न चेत्क्षिप्रं निधनं प्रवदेत् ॥ ६ ॥**

इति। हिमगौ चन्द्रे क्षीणे व्ययगे द्वादशस्थे च पापैः उदयाष्टमगैः लग्नाष्ट-मस्थितैः केन्द्रेषु शुभाः न चेद्यदि क्षिप्रं निधनं मरणं प्रवदेत्। अनेन लग्नाष्टमयोः पापाक्रान्तत्वमेव शिशुमरणायालम्। यदि केन्द्रः शुभवर्जितः। तत्रापि लग्नस्थशनिर्मृतप्रजाप्रसूतिकारणं भवति। तथा च सारावल्याम्—

"शनैश्चरश्च होरायां निधने च महीसुतः।
न च देवगुरुः केन्द्रे मृतगर्भः प्रसूयते ॥" इति।

लग्नाष्टमयोः पापराहित्यं केन्द्रस्य शुभयोगश्चायुर्वृद्धिकराविति सूचितम्। तथा च सारावल्याम्—

"न नैधने ग्रहः कश्चित्पापो होरागतोऽथवा।
केन्द्रेष्वन्यतमे जीवे जीवेदष्टशतोत्तरम् ॥
न केन्द्रे कश्चिदाग्नेयो न त्रिकोणे न नैधने।
गुरुशुक्रौ च केन्द्रस्थौ जीवेदष्टशताधिकम् ॥

यदि होरागतः शुक्रः केन्द्रेष्वन्यतमे गुरुः ।
नैधने न च पापः स्यात्सविंशं जीवने शतम् ॥" इति ।

एवमेव बहवो मरणयोगाः दीर्घायुर्योगाश्च युक्त्या कल्प्याः । केन्द्रस्थशुभानामरिष्टनाशकरत्वं व्यञ्जितम् । तथा चोक्तम्—

"केन्द्रोपगोऽतिबलवान् स्फुरदंशुमाली
स्वर्लोकराजसचिवः शमयेदवश्यम् ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥" इति ।

उदयाष्टमगैः उद य अष्टमगैः उदशब्देन सप्त य इत्यक्षरसङ्ख्याया एकत्वाल्लग्नम् । अष्टम इत्यष्टमः । यस्मात् सारावल्याम्—

"होरानिधनास्तगतैः पापैः क्षीणे व्ययस्थिते चन्द्रे ।
जातस्य भवेन्मरणं सद्यः केन्द्रेषु चेन्न शुभाः ॥" इति ॥६॥

**शशिन्यरिविनाशगे निधनमाशु पापेक्षिते**
**शुभैरथ समाष्टकं दलमतश्च मिश्रेक्षिते ।**
**असद्भिरवलोकिते बलिभिरत्र मासं शुभे**
**कलत्रसहिते च पापविजिते विलग्नाधिपे ॥ ७ ॥**

शशिनि चन्द्रे अरिविनाशगे षष्ठे अष्टमे वा पापेक्षिते आशु क्षिप्रं निधनं मरणं भवेदिति शेषः । अथ शुभैरीक्षिते दृष्टे समाष्टकं अष्टवर्षकालं जीवेत् । मिश्रेक्षिते शुभाशुभदृष्टे अतः उक्तवर्षसङ्ख्यायाः । दलं अर्धं भवति । चतुर्वर्षकालं जीवेदित्यर्थः । अस्मिन्योगे चन्द्रे शुभदृष्टे पापदृष्टे शुभपापदृष्टे वा मरणमेव वाच्यम् । न केनापि दृष्टश्चेदरिष्टाभाव एव वक्तव्य इत्यूह्यम् । तथैवारिविनाशगतः शुभोऽपि शुभाशुभदृष्टिरहितः शुभफलं

करोति । अरिविनाशगतशुभे पापदृष्टे मासं जीवति । शुभाशुभदृष्टे मासद्वयं जीवति । अत्र षष्ठे अष्टमे वा शुभे बुधगुरुशुक्राणामन्यतमे स्थिते बलिभिः उच्चवक्रादिबलयुक्तैः, असद्भिः पापैः, अवलोकिते दृष्टे, मासं एकमासकालं जीवेत् । विलग्नाधिपे लग्नेशे, कलत्रसहिते सप्तमस्थे, पापविजिते च युद्धे पापेन पराजिते च, मासं जीवेत् । अत्र लग्नाधिपस्य मारकस्थानस्थितिः पापजितत्वं चायुर्हानिकरं भवति । 'होरास्वामिगुरुज्ञ-वीक्षितयुता' इत्यस्यापवादोऽयम् । सप्तमस्थलग्नेशो लग्नं पश्यति । अतः स शुभफलमेव प्रयच्छेत् । तथाऽपि पापजितश्चेदेवंविधानिष्टफलमेव करोतीति दर्शयितुमयं विधिरारब्धः । "असद्भिरवलोकिते बलिभिरत्र मासं शुभे" इत्यत्र शुभे इत्यस्य शुभक्षेत्रे इति योजनया षष्ठाष्टमस्थचन्द्रस्य अमिश्रपाप-त्रयदृष्टयैव मरणं भवति । अतः पूर्वोक्तयोगा अशुभर्क्षस्थचन्द्रविषया एव । तथा च यवनेश्वरः—

"लग्नाच्छशी नैधनगोऽशुभर्क्षे षष्ठे तु वा पापनिरीक्षितश्च ।
सर्वायुराहन्ति शुभैरमिश्रे तदीक्षितेऽब्दाष्टकपर्ययेण ॥" इति ।

शशिनि अरिविनाशगे शत्रुनाशकभागस्थिते, अनिधनं न मरणमिति वाच्यमिति वाऽस्यार्थः । कृष्णपक्षे दिवा शुक्लपक्षे रात्रौ च शत्रुविनाशक-भागस्थितश्चेच्छुभाशुभदृष्टिवशान्न मरणं वाच्यम् । तथा च माण्डव्यः—

"पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाऽहनि शुभाशुभदृश्यमानः ।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशुं न हन्ति ॥" इति ।

पृथ्वी वृत्तम् । "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् । 'वसुग्रहयतियुता । वसुशब्देन पृथ्वीवृत्तेन च वसुमती

भूमिर्गृह्यते । अनेन भूम्याः दिनरात्रिकालौ व्यञ्जितौ । ग्रहश्चन्द्रः । अनेन कृष्णशुक्लपक्षौ व्यञ्जितौ । अत एव कृष्णपक्षे दिवा शुक्लपक्षे रात्राविति व्याख्यातम् ॥ ७ ॥

अथ जनन्याः शिशोश्च मरणलक्षणमाह—

**लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः**
**पापान्तस्थे निधनहिबुकद्यूनयुक्ते च चन्द्रे ।**
**एवं लग्ने भवति मदनच्छिद्रसंस्थैश्च पापै-**
**र्मात्रा सार्धं यदि च न शुभैर्वीक्षितः शक्तिमद्भिः ॥ ८ ॥**

इति । क्षीणे शशिनि क्षीणचन्द्रे, लग्ने लग्नस्थिते, रन्ध्रकेन्द्रेषु अष्टमकेन्द्रेषु, स्थितैः पापैः, निधनं जातस्य सद्यो मरणं भवति । चन्द्रे निधनहिबुकद्यूनयुक्ते अष्टमे चतुर्थे सप्तमे वा, पापान्तस्थे पापमध्यंगते च, सद्यो मरणं भवति । एवं लग्ने चन्द्रे लग्ने पापान्तस्थे, पापैः मदनच्छिद्रसंस्थैः सप्तमे अष्टमे वा स्थितैः, शक्तिमद्भिः बलिभिः, शुभैः न वीक्षितः चन्द्रः न दृष्टः यदि, मात्रा सार्धं निधनं भवति । अत्र चन्द्रस्य पापान्तःस्थित्या मातुर्मरणमुक्तम् । अतः सूर्यस्य पापान्तस्थत्वेन पितुर्मरणं वाच्यम् । तथा च सारावल्याम्—

"पापग्रहमध्यगतो दिवसकरो दिवसजन्मनि रतस्य ।
पापयुतो वा हन्यात् पितरं निस्संशयं जातः ॥" इति ।

एवं पितृव्यमातृष्वस्रादिकारकवशात्पितृव्यादिभिः सह शिशोर्मरणं वाच्यम् ।

वृत्तं मन्दाक्रान्ता । मन्दादपि चिन्त्यमिति सूचितम् । पापदृष्ट्या दिनरात्रिवशात् सूर्यमन्दौ पितृमृत्युकरौ भवतः । चरादिराशिवशाद् विदेशादिकं वाच्यम् । तथा च सारावल्याम्—

"चरराशिगते सूर्ये दिनजन्मनि वीक्षिते कुपुत्रेण ।
कथयति विदेशयातं जातस्य शरीरकर्तारम् ॥
चरराशिगतं सौरिं यद्यर्को रात्रिजन्मनीक्षेत ।
तत्रापि विदेशस्थं कथयति पितरं प्रसूतस्य ॥" इति ।

सूर्यादष्टमस्थपापेनापि पित्रनिष्टं चिन्त्यम् । तथा च सारावल्याम्—

"सूर्यादष्टमराशौ यदि युक्तौ सौरलोहितौ प्रसवे ।
सौम्यादृष्टे निधनं कुर्यातां सद्य एव पितुः ॥" इति ।

'मदनच्छिद्रसंस्थैः' आवृत्त्या सप्तम्येकवचनान्तकरणेन च 'मदनच्छिद्रसंस्थे' इति भवति । एवं लग्ने पापमध्यगतचन्द्रेण शिशुमरणं वा स्यात् । मदनच्छिद्रसंस्थैश्च पापैः न शुभैरित्यशुभैर्वीक्षितैर्मात्रा सह मरणं वाच्यम् । तथा च सारावल्याम्—

"पापद्वयमध्यगते होरासप्ताष्टमस्थिते चन्द्रे ।
सौम्यैरबलैर्दृष्टे जातो ह्यत्र ध्रुवं म्रियते ॥
द्यूनाष्टमगैः पापैः क्रूरग्रहवीक्षितैः सह जनन्या ।
म्रियते शुभसन्दृष्टैः सत्यस्य मताद्वदेद्व्याधिम् ॥" इति ।

लग्ने भवति मदनच्छिद्रसंस्थे च पापे इति चन्द्राष्टमसप्तानां पापाक्रान्तत्वं मातृमरणलक्षणम् । "अरिव्ययगतैः पापैः" इति गर्गवचनमनुसृत्य "पापैर्विलग्नास्तमयाभितश्च" इत्याचार्योक्तप्रकारेण अरिव्यययोः पापाक्रान्तत्वं शिशुमरणलक्षणम् । अत एवोक्तं सारावल्याम्—

जन्माष्टसप्तषष्ठद्वादशसंस्थेषु पापेषु ।
माता सुतेन सार्धं म्रियते षष्ठान्त्यगेषु पापेषु ।
जन्माष्टसप्तमेषु च जीवति सूनुर्म्रियेत तन्माता ॥

इति ॥ ८ ॥

अथ योगान्तरमाह—

**राश्यन्तगे सद्भिरनीक्ष्यमाणे चन्द्रे त्रिकोणोपगतैश्च शेषैः ।**
**प्राणैः प्रयात्याशु शिशुर्वियोगमस्ते च पापैस्तुहिनांशुलग्ने ॥ ९ ॥**

इति । चन्द्रे राश्यन्तगे यत्र कुत्र राशौ अन्त्यभागस्थिते, सद्भिः शुभैः अनीक्ष्यमाणे अदृष्टे, शेषैः चन्द्रव्यतिरिक्तग्रहैः, त्रिकोणोपगतैः त्रिकोणस्थैः, शिशुः जातः शिशुः, प्राणैर्वियोगमाशु प्रयाति सद्यो म्रियते । अथवा चन्द्रे राश्यन्तगे सद्भिरनीक्ष्यमाणे शेषैश्चन्द्रसद्ग्रहव्यतिरिक्तग्रहैरशुभैरिति यावत् । त्रिकोणोपगतैर्जातः शिशुर्म्रियते । तुहिनांशुलग्ने चन्द्रे लग्ने, अस्ते सप्तमे, पापैरशुभैः स्थितैः, जातः शिशुर्म्रियते ।

राश्यन्तगे असद्भिरनीक्ष्यमाणे इति वा पदच्छेदः । असद्भिरनीक्ष्यमाणेऽपि शिशुरस्मिन्योगे म्रियते । किं पुनरसद्भिरीक्ष्यमाणे ।

वृत्तमिन्द्रवज्रा । अनेनाशुभदृष्टिहीनचन्द्रेण त्रिकोणगतैः शुभैश्च शुभयोगः सूचितः । द्वितीययोगे गुरुदृष्ट्याऽरिष्टभङ्गो भवतीति च सूचितम् । "रदवैकृत्यकराश्च सप्तमे" इति रदवैकृत्यमेतद्योगजस्य वक्ष्यति यदि स गुरुदृष्ट्या जीवति ॥ ९ ॥

अथ पुनरपि मातृसुतयोर्मरणलक्षणमाह—

**अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते**
**जननिसुतयोर्मृत्युर्लग्ने रवौ तु स शस्त्रजः ।**
**उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-**
**र्निधनमशुभैर्वीर्योपेतैः शुभैरयुतेक्षिते ॥ १० ॥**

इति । ग्रस्ते चन्द्रे अशुभसहिते मन्दसहिते । सोमोपरागे सूर्यस्य सप्तमस्थित्या कुजस्य वक्ष्यमाणनिधनाश्रितत्वाच्च अशुभशब्देन मन्द एव गृह्यते ।

रविज इत्यस्य स्थाने अशुभशब्दनिवेशनं शनेः शुभाशुभफलनिर्णये प्राधान्य-सूचनार्थम्। लग्ने ग्रस्तचन्द्रे मन्दसहिते लग्ने स्थिते, कुजे निधनाश्रिते अष्टमस्थे, जननिसुतयोः जनन्याः शिशोश्च, मृत्युः मरणं भवेत्। रवौ तु अशुभ-सहिते ग्रस्ते लग्ने रवौ कुजे निधनाश्रिते स मृत्युः शस्त्रजः शस्त्रेण जायते। अत्राशुभशब्देन मन्दः पापयुतबुधश्च गृह्येते। रवौ सूर्ये शीतांशौ वा चन्द्रे वा उदयति लग्नगते अशुभैः पापैः त्रिकोणविनाशगैः त्रिकोणाष्टमगैर्वीर्योपेतैः बलिभिः शुभैः अयुतेक्षिते रवौ चन्द्रे वा बलिभिः शुभैः अयुतेक्षिते निधनं भवति। उदयति रवौ त्रिकोणगैरशुभैर्वीर्योपेतैः शुभैरयुते मरणम्, उदयति शीतांशौ विनाशगैरशुभैर्वीर्योपेतैः शुभैरनीक्षिते मरणमिति केषाञ्चिन्मतम्।

हरिणीवृत्तम्। षट्चत्वार्यष्टयतियुता। अतः सप्तकारकग्रहेभ्यः सुखारिष्टचिन्ता कर्तव्येति सूचितम्। अतः सूर्यादिभिस्त्रिकोणविनाशगैः त्रिकोणगैर्विनाशगैः क्रूरर्क्षगैः पितृमातृसोदरमातुलमातामहीमातामहशिशुभ्यो-ऽरिष्टं वाच्यम्। तथा चोक्तम्—

"ताताम्बिके सोदरमातुलाश्च मातामही मातृपिता च बालः।
सूर्यादिकैः पञ्चमधर्मयातैः क्रूरर्क्षगैराशु हताः क्रमेण॥" इति॥१०॥

अथाऽरिष्टान्तरमाह—

**असितरविशशाङ्कभूमिजै-**
**र्व्ययनवमोदयनैधनाश्रितैः।**
**भवति मरणमाशु देहिनां**
**यदि बलिना गुरुणा न वीक्षिताः॥ ११॥**

इति। व्ययनवमोदयनैधनाश्रितैः व्ययनवमलग्नाष्टमस्थैः, असितरविशशाङ्क-भूमिजैः शनिसूर्यचन्द्रकुजैः, बलिना बलयुक्तेन, गुरुणा बृहस्पतिना, न

वीक्षिताः अदृष्टा यदि, देहिनां जातमर्त्यानाम्, आशु मरणं भवति। सर्वानेतान् द्रष्टुं पञ्चमस्थेन गुरुणैव साध्यम्। अतो गुरौ पञ्चमस्थे अस्य योगस्य भङ्गो भवति। अन्यथा जातः अचिरेण म्रियत एव। बलहीनेन गुरुणा दृष्टाश्चेन्मरणं भवत्येव। न त्वाशु। केचित् नैधनशब्देन द्वितीय-भावमिच्छन्ति। तन्मतेऽपि पञ्चमस्थगुरोस्तत्स्थाने पाददृष्टिर्भवति।

"निधनारिधनव्ययस्थिताः रविचन्द्रारयमा यथा तथा।"

इत्यनिष्टयोगं वक्ष्यति।

पादादिदृष्टचनङ्गीकारपक्षे व्ययस्थशनौ बलिना गुरुणा न वीक्षिते इत्येको योगः, नवमस्थरवौ बलिना गुरुणा न वीक्षिते इति द्वितीयो योगः, उदयस्थशशाङ्के बलिना गुरुणा न वीक्षिते इति तृतीयो योगः, नैधनस्थ-भूमिजे बलिना गुरुणा न वीक्षिते इति तुरीयो योगः। असितरविशशाङ्क-भूमिजेष्वन्यतमे बलिना गुरुणा वीक्षितेऽरिष्टभङ्गो वाच्य इति भावः। सकलचराचरविषयकोऽयं विधिरिति 'देहिनाम्' इति शब्देन व्यञ्जितम्।

श्लोकद्वयेऽपि "असितरविशशाङ्कभूमिजैः" इत्येकपदेन एकस्थै-रसितरविशशाङ्कभूमिजैरपि मरणं वाच्यमिति सूचितम्।

वृत्तमपरवक्त्रम्। "अयुजि ननरला गुरुः समेन्जमपरवक्त्रमिदं ततो जरौ" इति लक्षणात्। अर्धसमवृत्तं च। अनेन असितरव्योरन्यतरस्थाने गुरुं निवेश्याप्येकस्थैश्चतुर्भिरनिष्टफलं वाच्यम्। तथा च सारावल्याम्—

"रविचन्द्रभौमगुरुभिः कुजगुरुसौरेन्दुभिस्तथैकस्थैः।
रविशनिभौमशशाङ्कैर्मरणं खलु पञ्चभिर्वर्षैः॥" इति।

अपरवक्त्रवृत्तेनोक्तलक्षणात्तद्विपरीतलक्षणमपि चिन्त्यमिति सूचितम्। उपचयगतानां पापानां बलवद्गुरुवीक्षणेन शुभफलं वाच्यमिति भावः॥११॥

पुनरप्यरिष्टलक्षणमाह —

**सुतमदनवमान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ।**
**भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १२ ॥**

इति । शीतरश्मिः चन्द्रः, अशुभयुतः पापसहितः, सुतमदनवमान्त्यलग्नरन्ध्रेषु पञ्चमसप्तमनवमव्ययलग्नाष्टमेष्वन्यतमे स्थितः, भृगुसुतशशिपुत्रदेवपूज्यैः शुक्रबुधगुरुभिः, न युतोऽवलोकितो वा यदि, युक्तो दृष्टो न चेद् मरणाय भवति । अशुभयुतः अशुभपक्षयुतः कृष्णपक्षगतः । अनेनात्र क्षीणचन्द्रो विवक्षितः ।

पुष्पिताग्रावृत्तम् । अतो भृगुसुतापेक्षया बुधस्य प्राबल्यम् । तस्मादपि गुरोः । भृगुसुतशशिपुत्रदेवपूज्यैरिति सर्वारिष्टकथनशेषत्वोक्त्या शुभयोगदृष्ट्योः सकलारिष्टभङ्गकरत्वं स्फुटीकृतम् । तथा चोक्तम्—

" सौम्यग्रहैरतिबलैर्विबलैश्च पापै-
लग्नं च सौम्यभवनं शुभदृष्टियुक्तम् ।
सर्वापदा विरहितो भवति प्रसूतः
पूजाकरः खलु यथा दुरितैर्ग्रहाणाम् ॥ " इति ।

एवं शुभयोगो दृष्टिर्वा सर्वारिष्टयोगानामपवादो भवतीति सिद्धम् । इन्द्रदैवत्यं छन्दः । अनेन शुभत्रयस्य शुभराशिस्थितिः राजयोगकरीत्यपि सूचितम् । तथा च सारावल्याम्—

" सौम्यास्त्रयो लग्नगता यदि स्युः
कुर्वन्ति जातं नृपतिं विनीतम् । " इति ॥ १२ ॥

अथानुक्तकालविशेषाणामुक्तयोगानामरिष्टसम्भवकालमाह —

**योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा ।**
**पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनिगदितम् ॥ १३ ॥**

इति। योगे उक्तसद्योमरणयोगे, बलवति चन्द्रे बलिनः स्थानं योगे बलिना ग्रहेणाक्रान्तस्थानं, स्वं वा जन्मराशिं वा, अथवा तनुगृहं जन्मलग्नराशिं, गतवति प्राप्ते, पापैर्दृष्टे च वर्षस्यान्तः मुनिगदितं ऋषिप्रोक्तं, मरणं किल सम्भवति। चन्द्रस्य त्रयोविंशतिपर्ययेषु यस्मिन् पर्यये बलिनः स्थाने स्वस्थाने लग्नस्थाने वा बलवान् भवति पापैर्दृष्टश्च भवति तदा मरणमादिशेदिति भावः।

बलिनो योगकर्तुः स्थानं चारवशाच्चन्द्रे गते मरणमादिशेत्। अनेकयोगकर्तृबलसाम्ये चन्द्रे स्वगृहं गते मरणमादिशेत्। प्रबलारिष्टयोगे चन्द्रे लग्नं गते मरणमादिशेत्।

बलवति इत्यनेन षड्विधबलेष्वेकेन युक्ते चन्द्रे पापदृष्टे मरणमादिशेदित्यपि सूचितम्।

वृत्तं भ्रमरविलसितम्। "म्भौ न्लौ गः स्याद्भ्रमरविलसितम्" इति लक्षणात्। अनेन चारवशाद्वक्तव्यमिति सूचितम। यथाऽपायबहुलकीटत्वनिवृत्त्या पक्षादिभिरलङ्कृतो भ्रमरो भाति तथेत्थंभूतबालारिष्टाच्छुभदृष्टिवशाद्बहिर्गतेन भ्रमरवद्विलसितं भवेत्। यथा भ्रमरस्य कीटत्वाद्भ्रमरत्वं द्वितीयजन्म भवति तथैव बालारिष्टाद्बहिर्गतोऽपि पुनर्जात इव भवति। अनेनैव परत्वेऽप्यायुर्दायाध्यायलब्धायुर्वा वक्ष्यमाणभाग्ययोगादिफलानि वा बालारिष्टाध्यायोक्तयोगानामपवादा न भवन्ति। यथा भ्रमरत्वप्राप्त्यनन्तरं सर्वेभ्यः पुष्पेभ्यो मधु गृह्णाति तथैवैतावत्पर्यन्तं नैसर्गिकशुभाशुभैरेव फल उक्तेऽप्युपरि पापेष्वप्याधिपत्यप्रयुक्तशुभत्वमालोक्यापि फलं वक्तव्यम्। एवं शुभानामपि दुःस्थानाधिपत्यदोषफलमपि वक्तव्यम्। यथा कीटो भ्रमरेणैव भ्रमरत्वं प्राप्नोति तथैव बालोऽपि जीवेत्यपरनामकेन सकलचराचरजीवभूतेन सुरराजमन्त्रिणैव जीवत्वं प्राप्नोतीत्यपि सिद्ध्यति। एवं बालारिष्टादुन्मुक्तो बालो भ्रमरवत्सदा सन्तुष्टो भवति सुखी च। "रसो

वै सः " इत्युक्तेश्वरतत्त्वात्मकरसभूतमधुपरश्च भवत्वित्याशिषं प्रयुङ्क्ते आचार्यो भ्रमरविलसितेन । तदर्थमेवैषां बालारिष्टयोगानां "योगे स्थानं गतवति" इत्युक्तकालाभावेऽपि बालो जीवेदित्यरिष्टयोगानामनित्यत्वं सूचयति किल-शब्दप्रयोगसामर्थ्यात् ।

अत्र श्लोकसङ्ख्या त्रयोदश । प्रतिपादितविषयश्च सद्योमरणम् । अनेन सङ्ख्यास्वेषानिष्टफलप्रदेति सूचितम् ॥ १३ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां बालारिष्टापरनामकं सद्योमरणं नाम षष्ठोऽध्यायः ।

श्रीः

# आयुर्दायाध्यायः ॥ ७ ॥

जन्मना प्रथमवर्णमाश्रितं तेजसा पुरुषबाहुजं भजे ।
राजधर्मपदवीविदूरगक्षत्रवंशवनवायुसारथिम् ॥

बालारिष्टानामष्टवर्षफलदत्वात्तदुपर्यायुषो ज्ञानार्थमत्रायुर्दायो निरूप्यते । तत्रादौ मयययवनाद्युक्तपिण्डायुर्दायमाह—

**मयययवनमणिन्थशक्तिपूर्वैर्दिवसकरादिषु वत्सराः प्रदिष्टाः ।**
**नवतिथिविषयाश्विभूतरुद्रा दशसहिता दश च स्वतुङ्गभेषु ॥१॥**

इति । मयययवनमणिन्थशक्तिपूर्वैः शक्तिः पूर्वो यस्य सः शक्तिपूर्वः पराशरः मयययवनमणिन्थपराशरैः, दिवसकरादिषु सूर्यादिषु, स्वतुङ्गभेषु स्वोच्चराशिषु। पुष्पिताग्रावृत्तेन स्वतुङ्गाग्रम् अथवा परमोच्चभागो विवक्षितः । दशसहिताः नवतिथिविषयाश्विभूतरुद्राः नव तिथयः पञ्चदश, विषयाः पञ्च, अश्विनौ द्वौ, भूतानि पञ्च, रुद्राः एकादश, दश च । वत्सराः संवत्सराः । प्रदिष्टाः उपदिष्टाः । एवं सूर्यस्य दशसहिता नव एकोनविंशतिर्वत्सराः । चन्द्रस्य दश सहितास्तिथयः पञ्चविंशतिः, कुजस्य दशसहिताः विषयाः पञ्चदश, बुधस्य दशसहितावश्विनौ द्वादश । गुरोः दशसहितानि भूतानि पञ्चदश । शुक्रस्य दशसहिता रुद्राः एकविंशतिः । शनेः दशसहिताः दश विंशतिः । एवं ग्रहाणां परमोच्चस्थित्या संवत्सराः पूर्वाचार्यैरुपदिष्टाः ।

दशसहिता इत्यनेनायमर्थः सूचितः । अत्र मययवनमणिन्थशक्तिपूर्वैरिति निर्देशेन कृतादियुगेषु ग्रहाणां वत्सरा व्यञ्जिताः । यथा कलौ सूर्यस्य दशसहिता नव वत्सराः । चन्द्रस्य दशसहितास्तिथिवत्सराः इत्यादि । द्वापरे सूर्यस्य दशद्वयसहिता नव वत्सराः । चन्द्रस्य दशद्वयसहितास्तिथिवत्सराः इत्यादि । त्रेतायां सूर्यस्य दशत्रयसहिता नव वत्सरा इत्यादि । कृते सूर्यस्य दशचतुष्कसहिता नव वत्सरा इत्याद्यवगन्तव्यम् ।

सौरसावनचान्द्रभेदेन वत्सरास्त्रिधा भवन्ति । तत्र दिनरात्र्यात्मकेन दिनेन लोके दिनत्वव्यवहारः । दिनानां षष्ट्युत्तरत्रिशतस्य सावनसंवत्सर इति संज्ञा । चान्द्रसंवत्सरस्तु शुक्लकृष्णपक्षद्वयात्मकानां मासानां द्वादशानां समुदायः । सौरसंवत्सरस्तु उत्तरायणदक्षिणायनद्वयात्मकः । संवत्सर एतस्मिन् पञ्चषष्ट्यधिकशतत्रयदिनानि पञ्चदश नाड्यः एकत्रिंशद्विनाडिकाः पञ्चदश तत्पराश्च सन्ति । एवं सावनसंवत्सरः चान्द्राद्द्राघीयान् सौराद्ध्रसीयांश्च भवति । तथापि स्थूलदृष्ट्याऽभेददर्शनाल्लोकव्यवहारमनुसृत्यामरसिंहेन—

"अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः ।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादश स्त्रियाम् ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥"

इति सावनदिनचान्द्रमाससौरसंवत्सराणां स्थूलबन्धः प्रदर्शितः । अत्र नवतिथिविषयादयः संवत्सराः सावनचान्द्रसौरेषु कतमा इति चेदुच्यते । दिवसकराद् इषुवत्सराः प्रदिष्टाः सूर्याद् इषुवत्सराः प्रदिष्टाः इष्वन्तदिनसङ्ख्याकयुतवत्सराः प्रदिष्टाः । इषु इत्यक्षरसङ्ख्यया षष्टिः । तदन्तः

षष्ट्यधिकशतत्रयम् । षष्ट्यधिकशतत्रयदिनात्मकसंवत्सरा उपदिष्टा इत्यर्थः । अनेनैते सावनसंवत्सरा भवन्ति । अतस्तेषां सौरीकरणमपि कर्तव्यम् । स्थूलगणनेन निश्चलेन वत्सरान् संगुणय्य मातङ्गेन हर्तव्याः । अत एवोक्तं जातकपारिजाते--

"आयुरब्दादिकं सर्वं निश्चलेन गुणीकृतम् ।
मातङ्गेन हृतं लब्धं सौरमानायुरुच्यते ॥" इति ।

इन्द्रदैवत्यच्छन्दः । दिवसकर इति करशब्देन रश्मिः सूचितः । अनेन माहेन्द्रं रश्मिजायुः स्मारितः । शक्तिः पूर्वो यस्य स इति विग्रहेण व्यासोऽपि शक्तिपूर्व एव । मययवनः मयासुरः । एवं मयमणिन्थव्यासैः दिवसकरादिषु रश्मिजवत्सराः प्रदिष्टा इत्यर्थः । स्वतुङ्गगानां सूर्यादीनां रश्मयस्तु तत्र तत्र दर्शिताः । उक्तं च सारावल्याम्—

"स्वोच्चस्थे दश सूर्ये नव चन्द्रे पञ्च भूमितनये च ।
पञ्चेन्दुजे सुरेड्ये सप्ताष्टौ भार्गवे शनौ पञ्च ।
एवं महेन्द्रशास्त्रे मणिन्थमयबादरायणप्रोक्ते ॥" इति ।

दिवसकरादिषुवत्सराः प्रदिष्टाः । दि इत्यक्षरसङ्ख्यया अष्टौ । अनेन अष्टकवर्गः सूचितः । तत्र वसति इति दिवसः, कर इति बिन्दुः, दिवसस्य करः दिवसकरः अष्टकवर्गबिन्दुः । तस्माद् इषुवत्सराः इष्वादि-गुणितलब्धवत्सराः पञ्चपञ्चाष्टपञ्चदशसप्तपञ्चभिः अष्टकवर्गग्रहगुणकारैर्गुणि-तानां बिन्दूनां राशिगुणकारगुणितबिन्दूनां चाष्टकवर्गसंवत्सरा लभ्या इति पूर्वमेव दर्शितम् । एवमिषुवत्सराः प्रदिष्टाः । अनेन समुदायाष्टक-वर्गोऽपि व्याख्यातः । दिवसकरादिषुवत्सराः प्रदिष्टाः दिवसकरादेः षु इत्यक्षरसङ्ख्यासूचितषडादिवत्सराः प्रदिष्टाः इति दशायुरपि व्यञ्जितम् । दशासंवत्सराः दशाक्रमश्च पूर्वमेवोक्ताः । आयुर्गणनं तु नक्षत्रदशागणन-

विधिना नवग्रहाणां युक्तस्य नक्षत्रस्य भोगावशिष्टेन निजवर्षभागा वत्सरा भवन्ति। दिवसकरादिषुवत्सरा इत्यत्र षुवत् सरा इति पदच्छेदेन सरा इत्यक्षरसङ्ख्यासूचितसप्तविंशत्या नक्षत्रस्मारकत्वाद् नक्षत्रावशिष्टभागवशान्निजदशानयनं भवति। उक्तं च—

"आदित्यमुख्यनवखेचरयोगतारा-
भुक्तावशिष्टघटिका निजवत्सराद्याः।" इति।

दिवसकरादिषुवत्सराः प्रदिष्टाः दिवसकराद् इषुवत्सराः पञ्चादिवत्सराः इषुवत्सरा इति सरशब्देनात्रापि नक्षत्राश्रयत्वं सूचितम्। प्रदिष्टाः अनेन कालचक्रदशायुर्निरूपितम्। प्रक्रिया तु नक्षत्रपादेन उडुदशावत्। शक्तिपूर्वैरिति पूर्वशब्देन वक्ष्यमाणसत्याचार्योक्तांशकायुर्निसर्गायुश्चापि गृह्येते। एवं निसर्गपैण्ड्यांशकचक्रांशुदशाष्टकवर्गायूंष्यत्र सूत्रितानि। शक्तिपूर्वैरित्युक्तत्वाद् लग्नयुक्तग्रहसप्तकशक्तिवशादेतेष्वन्यतमेनायुर्गणना कार्या इत्यपि द्योत्यते। तथा चोक्तं जातकपारिजातके—

"पैण्डचं भानोर्निसर्गप्रभवमुडुपतौ रश्मिजं सोमपुत्रे
भौमे भिन्नाष्टवर्गोदितमसुरगुरौ कालचक्रोद्भवायुः।
देवाचार्ये दशायुर्दिनकरतनये सामुदायं बलिष्ठे
लग्ने यद्यंशकायुर्भवति बलयुते प्राहुराचार्यमुख्याः॥" इति।

इन्द्रदैवत्यं छन्दः। अनेन राजयोगायुः सूचितम्। प्राधान्येन पिण्डायुरेवोक्तमस्मिन् श्लोके। अतः राजयोगादिषु पिण्डायुरेव द्रष्टव्यमिति सूचितम्। तथा च जातकपारिजाते—

"उच्चं गते रवौ चान्ये बलिष्ठाः केन्द्रकोणगाः।
सर्वेषु स्वोच्चभावेषु बलिष्ठे शशहंसके॥
एवं चिरायुषां योगेष्वन्येषु गणितेषु च।

चान्द्रयोगेषु सर्वेषु चन्द्रे च बलसंयुते ॥
महापुरुषयोगेषु वीर्योत्कटयुतेषु च ।
राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः ॥" इति ।

इन्द्रदैवत्यं छन्दः । राजयोगश्च सूचितः । षण्णामेकपदेन समासेन षट्सु स्वतुङ्गगेषु चक्रवर्ती भवतीति सूचितम् । सप्तानां ग्रहाणामुच्चासम्भवद्योतनार्थमपि षण्णामेकपदेन समासः । नवतिथीति सङ्कलनेन सप्तचत्वारिंशद्भवति । अक्षरसङ्ख्यासङ्कलनेनापि सप्तचत्वारिंशदेव । अनेन सप्तचत्वारिंशद्रश्मिमान् राजा भवतीति सूचितम् । तथा च सारावल्याम्—

"चत्वारिंशद्युक्ता पञ्चादिभिरत्र यस्य सूतौ स्यात् ।
ज्ञेयं तस्यारिष्टं सर्वक्षितिपालकं मुक्त्वा ॥" इति ॥ १ ॥

एवं परमोच्चगतानामायुरुक्त्वा तत इतरस्थानस्थग्रहाणामायुर्निर्णयार्थं नीचशत्रुक्षेत्रादिहरणमाह—

**नीचेऽतोऽर्धं ह्रसति हि तयोरन्तरस्थेऽनुपातो**
**होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति ।**
**हित्वा वक्रं रिपुगृहगतैः क्षीयते स्वत्रिभागः**
**सूर्योच्छन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ ॥ २ ॥**

इति । नीचे परमनीचे, अत उक्तवत्सरेभ्यः, अर्धं ह्रसति हीयते । तयोः परमोच्चपरमनीचयोः, अन्तरस्थे अनुपातो हि त्रैराशिकं कर्तव्यमित्यत्र कः सन्देहः । अत्रैवं प्रक्रिया । इष्टग्रहस्य तात्कालिकस्फुटात् परमोच्चं शोधयेत् । शिष्टं षड्राश्यूनं चेत्तद् भमण्डलाच्छोधयेत् । शिष्टं भमण्डलशोधितशिष्टं वा ग्रहोक्तवत्सरैर्गुणित्वा द्वादशभिर्हरेत् । एवं ग्रहवत्सरा लब्धाः । वत्सरस्य न्यूनैकांशाद् मासा दिवसा नाडिकादयश्च लभ्याः ।

एष एव तद्ग्रहस्य दशाकालः, एवं सर्वेषां ग्रहाणाम्। तथा चोक्तं सारावल्याम्—

"स्वोच्चशुद्धा ग्रहाः शोध्याः षड्भ्यूना भमण्डलात्।
स्वपिण्डगुणिता भक्ता राशिमानेन वत्सराः॥" इति।

एवं ग्रहाणां वत्सरानयनमुक्त्वा लग्नायुरानयनमाह। होरा तु लग्नं अंशप्रतिमं भुक्तनवांशतुल्यं भवति। लग्नं भुक्तनवांशतुल्यायुर्ददातीत्यर्थः। अपरे राशितुल्यं वदन्ति मेषाद्यावन्तो राशयो भुक्तास्तावन्तः संवत्सराः लग्नस्येति वदन्ति। तथा चोक्तं मणित्थेन—

"लग्नर्क्षतुल्यं वर्षाणि मासाद्यमनुपाततः।
लग्नायुर्दायमिच्छन्ति होराशास्त्रविशारदाः॥" इति।

अतो "बलयोगात्फलमंशकर्क्षयोः" इति बलवशान्निर्णेतव्यम्। यस्मात् सारावल्याम्—

"लग्नदायेंऽशतुल्यः स्यादन्तरे चानुपाततः।
तत्पतौ बलसंपन्ने राशितुल्यं स्वभाधिपे॥" इति।

शत्रुक्षेत्रहरणमाह। वक्रं भौमं, हित्वा वर्जयित्वा, रिपुगृहगतैः शत्रुक्षेत्रगतैः, स्वत्रिभागः स्वस्यायुषः तृतीयांशः, हीयते क्षयं प्राप्नोति। तथा च बादरायणः—

"भूम्याः पुत्रं वर्जयित्वारिभस्था
हन्युः स्वात्स्वादायुषस्ते त्रिभागम्।" इति।

वक्रमित्यस्य वक्रगतिमिति केचित्। "स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणम्" "वक्रं गतः स्वोच्चफलं विदध्यात् सपत्ननीचर्क्षगतोऽपि खेटः" इत्यादिवचनैर्वक्रगस्य ग्रहस्य शत्रुक्षेत्रहरणाभावस्य युक्त्यानुगुणत्वेऽप्यत्र प्रमाणं मृग्यम्।

यदिदमाचार्यस्यानभिप्रेतम्, "तदा हित्वा भौमम्" इत्येव वदेत् । सारावलिकृताऽपि—"वक्रं मुक्त्वारिराशिषु" इत्येवोक्तम् ।

अथ मूढहरणमाह । सूर्योच्छन्नद्युतिषु मूढं गतेषु ग्रहेषु, शुक्रार्कपुत्रौ शुक्रं शनिं च, प्रोज्झ्य वर्जयित्वा, दलं च स्वायुषः अर्धम्, हीयते क्षयं प्राप्नोति । तथा च बादरायणः—

"अस्तं याताः सर्वे एवार्धहानिं
कुर्युर्हित्वा दैत्यपूज्यार्कपुत्रौ ।" इति ॥

शत्रुक्षेत्रस्थो ग्रहो मूढश्चेत्कथं हरणं कार्यमिति चेदुच्यते । त्रैराशिकवशाल्लब्धायुषस्त्रिभागः शत्रुक्षेत्रस्थित्यर्थं हार्यम् । अनन्तरं शत्रुक्षेत्रहरणशिष्टात् त्रैराशिकवशाल्लब्धायुषोऽर्धं मौढ्यार्थं शोध्यम् ।

वृत्तं मन्दाक्रान्ता । अनेनेतरमारकानतिक्रम्य पापकृन्मन्दः स्वयमेव मरणं ददातीति सूचितम् । तथा च जातकचन्द्रिकायाम्—

"मारकैः सह सम्बद्धो निहन्ता पापकृच्छनिः ।
अतिक्रम्येतरान् सर्वान् भवत्येव न संशयः ॥" इति ।

जलधिषडगयतियुतम् । अनेनास्मिन् श्लोके चत्वारि हरणानि षड्विधायुषां च हरणं सप्तग्रहाणामुक्तमिति सूचितम् । चतुर्विधहरणं तु नीचहरणमन्तरस्थहरणं शत्रुक्षेत्रहरणं मूढहरणं च । षड्विधायुषां पिण्डायुरत्र निरूपितम् ।

"एकं द्वौ नवविंशतिधृतिकृती पञ्चाशदेषां क्रमा-
चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः ।" इति

वक्ष्यमाणनैसर्गिकायूंष्यप्यनेन विधिनैव हरणीयानि । तथा चोक्तं जातकपारिजाते—"पिण्डायुर्वत्कर्म नैसर्गिके च" इति । रश्मिजायुरानयनमप्येवमेव । तत्र हित्वा वक्रं इति वक्रावसानस्योपलक्षणम् । हित्वा इति

हिकारोऽष्टमभागद्योतकः । अतः अंशुजायुषि वक्रावसानेऽष्टमभागहरणं कर्तव्यम् । रिपुगृहगतैः स्वत्रिभाग इति अंशुजायुषि स्वभागहरणं पिण्डायुषि त्रिभागहरणं च कर्तव्यमित्यस्य सूचकः । रिपुगृहे स्वभागहरणमथवा रिपुभागहरणम् । रिपुरित्यक्षरसङ्ख्यया द्वादश । अतोंऽशुजायुरानयने शत्रुक्षेत्रे द्वादशभागहरणं कर्तव्यमिति भावः । तथा चोक्तं जातकपारिजाते—

" दशगोशरबाणाद्रिवसुसायकरश्मयः ।
दिननायकमुख्येषु निजतुङ्गगतेषु च ॥
स्वोच्चोनमिष्टखचरं यदि षड्ग्रहोनं
चक्राद्विशोध्य कृतलिप्तिकमंशुमानैः ।
हत्वा भचक्रकलिकाहृतमब्दपूर्वं
रव्यादिरश्मिजनितायुरिति ब्रुवन्ति ॥
स्वराशितुङ्गातिसुहृद्गृहस्थे वक्रोपगे च द्विगुणीकृतांशुः ।
वक्रावसानेऽष्टमभागवर्ज्यः सपत्नभे द्वादशभागहानिः ॥
अस्तंगतेषु द्युचरेषु सार्धं हित्वा शनिं दानवपूजितं च ।
तद्रश्मियोगग्रहदत्तमायुर्माहेन्द्रशास्त्रोदितमाहुरार्याः ॥ " इति ।

नीचेऽतोऽर्धं ह्रसतीत्यत्र अत इत्यस्य आयुःसंवत्सररश्मिभ्य एवेत्यर्थः । केवलरश्म्यानयने तु नीचे रश्मिशून्यत्वम् अन्तरस्थेऽनुपातश्च वक्तव्यः । तथा च सारावल्याम्—

" बहुवाक्यादस्माकं नीचगतः स्याद्विगतरश्मिः । "
" नीचविहीना विहगाश्चक्रात् षड्भवनतो यदाऽभ्यधिकाः ।
आत्मीयरश्मिगुणितात् षड्भक्ताद्रश्मयस्तस्मात् ॥ " इति ।

नीचे अतः निसर्गपैण्ड्यांशुजायुःसंवत्सरेभ्य एव अर्धं ह्रसति । ततः तस्माद् उडुदशासंवत्सरात्, नीचेतः नीचे इत्यक्षरसङ्ख्यासूचितषष्टिनाडिकाया आरभ्य दशासंवत्सराः, अन्तरस्थे नुपातः स्यात् नु इत्यक्षर-

सङ्ख्यासूचितशून्यपर्यन्तं भवन्ति। नक्षत्रादौ पूर्णम् अन्ते शून्यं मध्येऽनुपाततश्च भवन्तीत्यर्थः। अंशप्रतिममिति संज्ञाध्याये बहुधासूचितकालचक्रायुरानयनं च सूचितम्। उक्तं च जातकपारिजाते—

" रव्यादिसप्तग्रहतारकांशभुक्तावशेषाब्दसमूहमायुः।
सव्यापसव्योपगवाक्यजातं वदन्ति चक्रायुरिनादिकानाम्॥" इति।

अंशप्रतिमं बिन्दुसमानं, राशितुल्यं राशिसमानं च वदन्ति। अनेन राशिगुणकारगुणितबिन्दुसङ्ख्या भवतीत्यष्टकवर्गायुर्दिङ्मात्रेण दर्शितम्। मन्दाक्रान्तावृत्तत्वाद् मन्देनाक्रान्तत्वम्, अथवा मन्दस्य सामुदायिकं व्यञ्जितम्। भिन्नाष्टकवर्गायुस्तु निषेकाध्याये दर्शितम्। स एव क्रमः समुदायाष्टकवर्गायुरानयनेऽप्यनुसर्तव्यः। तथा च जातकपारिजाते—

" शोध्यं राशिद्युचरगणकैः सङ्गुणित्वा तदैक्यं
हत्वा शैलैरुडुगणहृतं लब्धमब्दादिकं स्यात्।
मानाधिक्ये विशतमशतेरागतायुर्वराङ्गैः
सङ्गुण्याप्तं दिवसनिचयैर्मातुलैः शुद्धमायुः॥"
" स्वल्पमध्यबहुमानवत्सरा मण्डलोनयुतकर्मकल्पिताः।
तुल्यकालमुपयाति सर्वतः सद्गुरूदयकटाक्षवीक्षणात्॥" इति॥२॥

एवं पिण्डायुर्निरूपणव्याजेन षड्विधायुरानयनमपि प्रदर्श्य तत्र दृश्यार्धहरणविधिमाह—

**सर्वार्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम्।**
**सत्स्वर्धं ह्रसति तथैकराशिगानामेकोंऽशं हरति बलीत्यथाह सत्यः॥३॥**

इति। असत्सु पापेषु, व्ययभवनाद् व्ययभावादारभ्य, वामं प्रतिलोमं स्थितेषु, सर्वार्धत्रिचरणपञ्चषष्ठभागाः पूर्णभागः अर्धभागः त्रिभागः तुरीयभागः

पञ्चमभागः षष्ठभागश्च यथाक्रमं तत्तद्ग्रहस्यायुषः क्षीयन्ते । एवं च द्वादशभावस्थस्य पापस्यायुः सर्वमपि नष्टं भवति । एकादशभावस्थस्य पापस्यायुषोऽर्धं नश्यति । दशमस्थस्य पापस्यायुषस्त्रिभागः क्षीयते । नवमस्थस्य पापस्य चतुर्भागः अष्टमस्थस्य पञ्चमभागः सप्तमस्थस्य षष्ठभागश्च क्षीयन्ते । सत्सु शुभेषु, तथा व्ययभवनादिषु स्थितेषु, अर्धं उक्तभागानामर्धं ह्रसति क्षीयते । अर्धचरणषष्ठाष्टमदशमद्वादशभागाः क्षीयन्त इत्यर्थः । एवं द्वादशस्थस्य शुभस्यायुषोऽर्धहानिः । एकादशस्थस्यायुषश्चरणहानिरित्यादि । एतेषु स्थानेष्वेकाधिकग्रहेषु स्थितेषु आयुर्हरणे विशेषमाह । अथ एकराशिगानां एकराशिस्थितानां, एको बली तेषां मध्ये यो बलवान्, सः अंशं आत्मन आयुषः यथोक्तमंशं, हरति क्षपयतीति, सत्यः सत्याचार्य आह । एवं ग्रहबहुत्वे बलवत एव हरणं कार्यम् । तथा चोक्तम्—

> “ एकर्क्षोपगतानां यो भवति बली बलाधिको विशेषेण ।
> क्षपयति यथोक्तमंशं स एव नान्योऽपि तत्रस्थः ॥ ” इति ।

सत्य इति सत्यशब्दप्रयोगादुक्तबलवद्ग्रहस्यैवायुषो हरणस्य सत्यत्वं प्रतिज्ञाय स्वमतमप्येवमेवेति दर्शयत्याचार्यः ।

तुल्यबलयुक्तपापद्वयाक्रान्ते व्यये एकैकस्याप्यर्धं हार्यम् । तुल्यबलयुक्तपापत्रयाक्रान्ते एकैकस्यापि त्र्यंशं हार्यम् । एवमितरभावेष्वपि युक्त्या चिन्त्यम् ।

अर्थान्तरस्यापि ध्वनिः । असत्सु सत्सु जातेषु असाधुषु सत्सु, वामं विपरीतशीलत्वात् । व्ययभवनेषु क्षीणेषु पुण्येषु । सर्वार्धत्रिचरणपञ्चषष्ठभागाः प्रोक्तप्रकारेणानीतायुषां जातानां दुःशीलत्वप्राबल्यमनुसृत्य सर्वं, अर्धं, त्र्यंशः, चतुर्थांशः, पञ्चमांशः, षष्ठांशो वा नश्यतीत्यर्थः । अनेनोक्तायुर्दायगणनं पुण्यकर्मशीलानां पथ्यादिभोजनरतादीनामेव । एकराशिगानामेकस्मिन् स्थितानां पापसञ्चयानां मध्ये बली एकः, बलवत्तमपापकर्म एकमेव

अंशं आयुषः सर्वांशमपि हरति। सत्य इत्यनेन तद्विधानामकालमरणं ध्रुवमिति प्रतिजानीते। तथा चोक्तं जातकपारिजाते—

"ये धर्मकर्मनिरता द्विजदेवभक्ता ये पथ्यभोजनरता विजितेन्द्रियाश्च।
ये मानवा दधति सत्कुलशीलसीमां तेषामिदं कथितमायुरुदारधीभिः॥
ये पापलुब्धाश्चोराश्च देवब्राह्मणनिन्दकाः।
सर्वाशिनश्च ये तेषामकालमरणं ध्रुवम्॥
धर्मे विकल्पबुद्धीनां दुःशीलानां च विद्विषाम्।
ब्राह्मणानां च देवानां परद्रव्यापहारिणाम्॥
भयंकराणां सर्वेषां मूर्खाणां पिशुनस्य च।
स्वधर्माचारहीनानां पापकर्मोपजीविनाम्॥
शास्त्रेष्वनियतानां च मूढानामपमृत्यवः।
अन्येषामुक्तमायुः स्यादिति शास्त्रविदो विदुः॥" इति।

वृत्तं प्रहर्षिणी, "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात्। चक्रवाकवृत्तं वा। अनेन चक्रवाकवद्विरहमसहमानानां ब्रह्मनिष्ठानां महात्मनां सर्वार्धत्रिचरणपञ्चषष्ठभागैः प्रहर्षिणीत्वं व्यञ्जितम्। ते अनेन क्रमेण पापव्ययादायुर्वृद्धिं प्राप्नुवन्तीत्यर्थः॥ ३॥

अथ क्रूरोदयहरणमाह—

**सार्धोदितोदितनवांशहतात्समस्ता-**
**द्भागोऽष्टयुक्तशतसङ्ख्य उपैति नाशम्।**
**क्रूरे विलग्नसहिते विधिना त्वनेन**
**सौम्येक्षिते दलमतः प्रलयं प्रयाति॥ ४॥**

इति। क्रूरे सूर्यकुजशनीनामन्यतमे, विलग्नसहिते लग्नस्थिते, सार्धोदितोदितनवांशहतात् अर्धोदितेन नवांशकेन सहिता उदितनवांशकाः सार्धोदितोदितनवांशाः अर्धोदितमप्यपरित्यज्य उदितनवांशाः लग्ने यावन्तः

तावद्भिः हतात् गुणितात् समस्ता लग्नस्य सर्वेषां ग्रहाणां च पृथक् पृथगानीतानामायुःपिण्डाद् अष्टयुक्तशतसंख्यो भागः अष्टोत्तरशततमो भागः नाशमुपैति एकैकस्यायुःपिण्डात्क्षीयते । सौम्यदृष्ट्या विशेषमाह । सौम्येक्षिते लग्ने शुभदृष्टे, अनेन विधिना दलं उक्तभागस्यार्धं, अतः पृथक्पृथक्स्थितायुःपिण्डात्, प्रलयं प्रयाति क्षीयते । प्रकर्षेण लयं प्रकर्षेण यातीति शुभदृष्ट्या जातस्य शिष्टायुषः शुभत्वं दर्शयति । अत्र केचित् सार्धोदितोदितनवांशहतादित्यनेन मेषप्रथमनवांशकादिसार्धोदितोदितनवांश-पर्यन्तं वान्छन्ति । तदसत् । तथा चेत् क्रूरसहितमीनलग्नजातस्य दश-वत्सरादधिकं न वक्तव्यम् । क्रूरसहितमीनलग्नजाता दीर्घायुषश्च दृश्यन्ते । किञ्च क्रूरहरणेन सर्वायुषोऽपि नाशस्य सम्भवात्,

"दोषश्चैषां जायतेऽष्टावरिष्टं हित्वा नायुर्विंशतेः स्यादधस्तात् ।"

इति मययवनादिमते दोषः कथमाचार्येणोक्तः ?

वृत्तं वसन्ततिलकम् । वसन्त इति गृहे वसतः ग्रहस्य द्योतकः । वसन् ग्रह इति अधिपतिरुच्यते । अतः पापः लग्नाधिपश्चेत्तस्य लग्नस्थित्या क्रूरोदयहरणं न कर्तव्यमिति द्योत्यते । पापः अधिपश्चेत् स स्वगृहं प्रति न क्रूर इति "होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा" इत्यनेनैव सिद्धम् ॥ ४ ॥

एवं मययवनादिमतानुसारेण ग्रहायुर्दायं हरणादिसहितं लक्षयित्वा समकालजातानां मनुजकरिहयवृषभमहिषश्वछागादीनां तत्तज्जात्यनुरूपेणा-युर्वक्तव्यमिति वक्ष्यमाणपरमायुर्दायं लक्ष्यीकृत्य तद्ग्रहस्थितिवशान्मनुजादीनां परमायुःप्रमाणमाह—

**समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा**
**हयानां द्वात्रिंशत्खरकरभयोः पञ्चककृतिः ।**

**विरूपा सा त्वायुर्वृषमहिषयोर्द्वादश शुनां**
**स्मृतं छागादीनां दशकसहिताः षट् च परमम् ॥ ५ ॥**

इति । मनुजकरिणां मनुष्याणां गजानां च, द्विघ्नाः द्विगुणिताः, षष्टिः समाः षष्टिसंवत्सराः, पञ्च निशा च पञ्च दिवसाश्च, परमं परमायुः-प्रमाणम् । स्मृतं मुनिभिरुक्तम् । मनुजानां गजानां च पञ्चदिनयुक्ताः विंशत्यधिकशतसंवत्सराः परमायुरित्यर्थः । षष्टिर्द्विघ्ना इति एष परमायुष्कालस्त्रिधा विभज्यते प्रथमषष्टिसंवत्सराः, द्वितीयषष्टिसंवत्सराः, पञ्च दिनानि चेति । गर्भस्थशिशोर्मासाधिपगणने " उदयपचन्द्रसूर्यनाथाः " इति उदयपचन्द्रसूर्याणाम् अष्टमनवमदशममासाधिपानां पृथङ्निर्देशेन, " उदयरविशशाङ्कप्राणिकेन्द्रादि " " भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या " इत्यादिभिश्च प्रथमषष्टिसंवत्सराणां उदयपो नाथः, द्वितीयषष्टिसंवत्सराणां चन्द्रो नाथः, पञ्चदिनानां सूर्यो नाथ इति व्यञ्जितम् । प्रायेण प्रथमषष्टिसंवत्सरेषु मनुजाः लौकिकव्यवहारसक्ता दृश्यन्ते । अतस्तेषामुदयपनाथत्वं युक्तमेव । अतस्तस्मिन् काले लग्नवशात्फलं वक्तव्यम् । द्वितीयषष्टिसंवत्सरेषु मनुजाः ईश्वरचिन्तनादिमनःकर्तव्यकार्यादिषु व्यग्रा दृश्यन्ते । अतस्तेषां चन्द्रनाथत्वम् । एवं द्वितीयषष्टिसंवत्सरेषु चन्द्रलग्नवशात्फलानि निरूपणीयानि । अतिवार्धक्ये जना अनुभवज्ञानिनो भवन्ति । अतः पञ्चदिनानां सूर्यनाथत्वं सूर्यलग्नवशात्फलस्य वाच्यत्वं च सिद्धम् । हयानामश्वानां द्वात्रिंशत्परमायुः । खरकरभयोः खरस्य करभस्य च पञ्चककृतिः पञ्चविंशतिः समाः परमायुः । वृषमहिषयोः वृषभस्य महिषस्य च सा विरूपा एकोना आयुः चतुर्विंशतिः संवत्सराः परमायुः स्यात् । शुनां द्वादश वत्सराः परमायुः । छागादीनां अजादीनां दशकसहिताः षट् षोडशसंवत्सराः परमायुर्भवति ।

'खरकरभयोः' 'वृषमहिषयोः' इति जात्येकवचनं प्रयुञ्जताऽऽचार्येण कुतः 'मनुजकरिणाम्' इति बहुवचनं प्रयुक्तमिति चेदुच्यते। मनुजाः करिण इवेत्युपमितसमासः। मनुजश्रेष्ठाः इत्यर्थः। मनुज इति मनुशब्दप्रयोगसामर्थ्याद्

"मानवे वैषये वंशे ऐळवंशे च ये नृपाः।
ऐळा ऐक्ष्वाकनाभागाः सर्वे राजर्षयः स्मृताः॥"

इति पुराणवचनेन निर्दिष्टा राजर्षयो विवक्षिता मनुजकरिणामित्यत्र। जातककुण्डल्या आयुषो निर्णये मनुष्यादीनामायुषोंऽशबन्धोऽत्रोक्तः। किंतु वक्ष्यमाणपरमायुर्योगो राजर्षैरेव सम्भवतीत्याचार्येण सूचितम्।

षष्टिरिति प्रथमनिर्देशात्कचित् षष्टिसंवत्सरा अपि परमायुस्त्वेन मन्तव्या इति व्यञ्जितम्। ब्रह्मणो ह्यायुषि पूर्वार्धपरार्धभेदवत्प्रथमषष्टिः पूर्वार्धं भवति। अत एवारिष्टशान्त्यर्थं पूर्वार्धभूतप्रथमषष्ट्यवसाने विशिष्येश्वराराधनकर्तव्यता शास्त्रेषु प्रसिद्धा।

वृत्तं शिखरिणी, "रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात्। शिखरवती शिखरिणी यथा पर्वतेषु प्रधानशिखरव्यतिरिक्तानि बहूनि शिखराणि तत्तत्प्रधानशिखरमाश्रितानि सन्ति, तथैवास्मिन् परमायुरात्मकपर्वते मनुजकरिहयादिशिखराणि प्रधानानि। तद्व्यतिरिक्तानि तत्तदाश्रितान्यपि चिन्त्यानि। एवं मनुजपरमायुराश्रितेतरशिखरैः मनुजेष्वपि कालदेशभेदेन परमायुःप्रमाणस्य ह्रासो वाच्यः। उक्तपरमायुस्तु कलियुगादिभवम्। कल्यन्ते तु "त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम्" इति भागवतवचनेन त्रिंशद्विंशतिर्वा भविष्यति। अन्तराले त्वनुपाततो द्रष्टव्यम्। एवं हयादीनामपि। एवं कालदेशानुसारेण परमायुर्भेदो वाच्य इति दर्शयितुमेवाऽऽचार्येण शिखरिणीवृत्तं प्रयुक्तमिति प्रतिभाति॥ ५॥

अथ परमायुर्योगलक्षणमाह—

**अनिमिषपरमांशके विलग्ने**
**शशितनये गवि पञ्चवर्गलिप्ते ।**
**भवति हि परमायुषः प्रमाणं**
**यदि सहिताः सकलाः स्वतुङ्गभेषु ॥ ६ ॥**

इति । अनिमिषपरमांशके अनिमिषः मीनः तस्य परमांशः अन्त्यांशकः तस्मिन् विलग्ने लग्ने मीनलग्ने मीननवांशके इत्यर्थः । शशितनये बुधे, गवि वृषभे, पञ्चवर्गलिप्ते वर्गाः पञ्च पञ्चानां वर्गः पञ्चवर्गः, पञ्चविंशतिः पञ्चविंशतिकलाभिः समन्विते । सूर्यस्य मेषदशमभागस्थित्या वृषस्थपञ्चविंशा कलैव बुधस्य परमावधिः । सकलाः बुधव्यतिरिक्ताः सर्वे ग्रहाः । स्वतुङ्गभेषु स्वोच्चराशिषु । पुष्पिताग्रावृत्तत्वात् परमोच्चभागेष्वित्यर्थः । सहिताः स्थिता यदि तदा जातस्य परमायुषः प्रमाणं भवति हि । तद्यथा परमोच्चस्थसूर्यस्य एकोनविंशतिर्वत्सराः (१९–०–०) परमोच्चस्थचन्द्रस्य पञ्चविंशतिर्वत्सराः (२५–०–०) परमोच्चस्थकुजस्य पञ्चदश वत्सराः । तत्रैकादशस्थित्यार्धहानिः । एवं कुजस्य सप्त वत्सराः षण्मासाः (७–६–०) बुधस्य परमनीचात्पञ्चविंशतिकलासहितपञ्चचत्वारिंशद्भागैरतिक्रान्तस्य सप्त संवत्सराः षण्मासाः पञ्च दिनानि (७–६–५) परमोच्चस्थगुरोः पञ्चदश संवत्सराः (१५–०–०) परमोच्चस्थशुक्रस्य एकविंशतिर्वत्सराः (२१–०–०) परमोच्चस्थशनेः विंशतिर्वत्सराः । तत्र अष्टमस्थित्या पञ्चमभागहान्या षोडश संवत्सराः (१६–०–०) "होरा त्वंशप्रतिमम्" इति लग्नस्य नव वत्सराः (९–०–०) आहत्योक्तवर्षमासादीनां पिण्डीकरणेन लब्धस्य परमायुषः प्रमाणं विंशत्यधिकशतं वत्सराः पञ्चदिनानि च । "समाः षष्टिर्द्विघ्नाः" इति श्लोकोक्तपरमायुःप्रमाणेन हयादीनामपि ग्रहवत्सराः पृथक् पृथक् त्रैराशिकप्रकारेण नेयाः ।

अत्र श्रीपतिपद्धतिरीत्या मीनान्त्यभागजातस्य मीनार्धान्मेषार्धपर्यन्तं लग्नं भवति। तत्पक्षे परमोच्चसूर्यस्य लग्नस्थित्या क्रूरोदयहरणमपि कर्तव्यम् । आचार्येण तत्पक्षो नाङ्गीकृत इत्यनेनैव सिद्धम् । किञ्च दृश्यार्धहरणेऽप्याचार्यः "व्ययभवनात्" इति भवनशब्दं प्रयुञ्जानो व्ययादिभावानयनेऽपि श्रीपत्यादिभिरनुसृतं पक्षं नादृतवान्। तत्पक्षे—

"लग्नं ग्रहोनं यदि षड्ग्रहेभ्यो हीनं तदानीं हरसंभवः स्यात् ।"

इति श्रीपत्युक्तप्रकारेण भावान्तरालेषु त्रैराशिकवशाद् हारको नेयः। एवमेव व्याख्यातं "सर्वार्धत्रिचरण" इति श्लोकस्य विवरणकृता रुद्रेण। तत्पक्षे परमोच्चस्थशनेः पञ्चमांशषष्ठांशयोस्त्रैराशिकवशाल्लब्धहरणं कार्यम् । तथा न कृतमाचार्येण । अतो भावादिविभागो दृष्टिविधिवर्जमाचार्यानभिमत एवेति मन्यामहे ।

अनिमिषपरमांशके विलग्ने अनिमिषाः देवाः तेषां परमः आचार्यः बृहस्पतिः । अथवा अनिमिषपः इन्द्रः सः अनेन रमते सौख्यं लभते इति वा बृहस्पतिः । तथा च हयग्रीवस्तोत्रे भगवान् वेङ्कटनाथदेशिकः—

"वितर्कडोलां व्यवधूय तत्वे बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणामस्पृष्टडोलायितमाधिराज्यम् ॥" इति।

एवमनिमिषपरमांशके मीनराशौ मीनांशे अथवा धनूराशौ धनुरंशे विलग्ने शशितनये गवि पञ्चवर्गलिप्ते भवति परमायुषः प्रमाणम् । यदि सहिताः सकलाः स्वतुङ्गभेषु । मीनलग्नपक्षे परमायुःप्रमाणं दर्शितम् । धनुर्लग्नपक्षे सूर्यस्य एकोनविंशतिवत्सराः (१९–०–०) चन्द्रस्य पञ्चविंशतिः (२५–०–०) कुजस्य पञ्चदश (१५–०–०) बुधस्य सप्तवर्षाः षण्मासाः पञ्च दिनानि (७–६–५) गुरोः पञ्चदश, तत्र अष्टमभावस्थित्या

शुभत्वाद्दशांशहरणात् त्रयोदश वत्सराः षण्मासाः (१३–६–०) शुक्रस्य एकविंशतिः (२१–०–०) शनेः विंशतिः। तत्र एकादशस्थित्या अर्धहरणाद् दश वर्षाः (१०–०–०)। वृत्तं पुष्पिताग्रा। अतो लग्नस्यान्त्यकलैव विवक्षिता। अतो लग्नस्य नव वत्सराः (९–०–०)। एवं परमायुःप्रमाणं विंशत्यधिकशतं वत्सराः पञ्च दिनानि च भवति।

| ग्रहाः | उक्ता वर्षाः | धनुर्लग्नस्य | | | | मीनलग्नस्य | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | भावस्थितिः | नीचाद्धिहरणम् | दृश्यार्धहरणम् | लब्धायुः व. मा. दि. | भावस्थितिः | नीचाद्धिहरणम् | दृश्यार्धहरणम् | लब्धायुः व. मा. दि. |
| सूर्यः | १९ | ५ | | | १९-०-० | २ | | | १९-०-० |
| चन्द्रः | २५ | ६ | | | २५-०-० | ३ | | | २५-०-० |
| कुजः | १५ | २ | | | १५-०-० | ११ | | ७-६-० | ७-६-० |
| बुधः | १२ | ६ | ४-५-२५ | | ७-६-५ | ३ | ४-५-२५ | | ७-६-५ |
| गुरुः | १५ | ८ | | १-६-० | १३-६-० | ५ | | | १५-०-० |
| शुक्रः | २१ | ४ | | | २१-०-० | १ | | | २१-०-० |
| शनिः | २० | ११ | | १०-०-० | १०-०-० | ८ | | ४-०-० | १६-०-० |
| लग्नम् | ९ | | | | ९-०-० | | | | ९-०-० |
| आहत्य | | | | | १२०-०-५ | | | | १२०-०-५ |

अस्मिन्योगे कुजो धनुरन्त्ये स्थितो यदि तस्य त्रयोदश वर्षा दश मासाः स्युः। दृश्यार्धस्थित्या त्र्यंशे हृते नव वर्षाः द्वौ मासौ विंशतिदिनानि च स्युः। अनेन एकविंशत्यधिकशतं वर्षा अष्टौ मासाः पञ्चविंशतिदिनानि च मीनलग्नजस्यायुर्भवति।

धनुर्लग्नभवस्यास्मिन्योगे शनिः कन्यान्त्यभागे वर्तेत। तदा तस्यायुःप्रमाणमष्टादश वर्षा दश मासा विंशतिदिनानि च भवति। दृश्यार्धस्थित्या त्र्यंशहरणेन द्वादश वर्षाः सप्त मासास्त्रीणि दिनानि विंशतिर्नाड्यश्च भवति। एवं जातस्यायुःप्रमाणं द्वाविंशत्यधिकशतमब्दाः सप्त मासा अष्टौ दिनानि विंशतिर्नाड्यश्च भवति। अत एतदेव मययवनादिमते परमायुर्भवितुमर्हति। कथं तर्ह्याचार्येण "समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा" इति परमायुरुक्तम्? उच्यते। "सार्धोदितोदित" इति क्रूरोदयहरणमुक्तम्। तत्र क्रूरे विलग्नसहिते इत्यनेन न केवलं लग्नं किन्तु वि इत्यक्षरसङ्ख्यासूचितचतुष्टयलग्नम् अथवा केन्द्रो विवक्षितः। केन्द्रगतः पापः आयुर्हानिकर इति भावः। केन्द्रस्थपापोऽपि क्रूरोदयहरणवद्धरणमपेक्षते। तस्मान्मीनलग्नजस्य कुजस्य चापस्थित्या चापजस्य शनेः कन्यास्थित्या वा परमायुषोऽधिकं न भवत्येव। अनेन क्रूरकेन्द्रहरणं व्याख्यातम्।

इन्द्रदैवत्यं छन्दः। अनेनास्मिन्योगे जातश्चक्रवर्ती भवतीति सूचितम्। अनिमिष इति देववाचकशब्देनारम्भसामर्थ्यात्स दिव्यश्च भवतीति व्यञ्जितम्॥ ६॥

अथ पिण्डायुर्दायगणने दोषमाह—

**आयुर्दायं विष्णुगुप्तोऽपि चैवं देवस्वामी सिद्धसेनश्च चक्रे।**
**दोषश्चैषां जायतेऽष्टावरिष्टं हित्वा नायुर्विंशतेः स्यादधस्तात्॥७॥**

इति । विष्णुगुप्तोऽपि च चाणक्योऽपि एवमायुर्दायं चक्रे—

"बुद्धिरेका जयत्येका पुंसः सर्वार्थसाधनी ।
यद्बलादेव किं किं न चक्रे चाणक्यभूसुरः ॥"

इति बुद्धिमतामग्रेसर इति सुप्रसिद्धश्चाणक्योऽप्यविमृश्यकारित्वं प्रकटयत्यनेनायुर्दायकथनेन । विष्णुगुप्त इति निर्देशाच्चन्द्रगुप्तः स्मारितः । चन्द्रगुप्तादीनां राज्ञामेव परिचयाच्चक्रवर्तिजातकायुर्दायमेव कथितवानिति वा । देवस्वामी च एवं चक्रे । सिद्धसेनश्च एवं चक्रे । न केवलं मययवनमणित्थशक्तिपूर्वाः । किन्तु चाणक्यदेवस्वामिसिद्धसेनाश्च । एवं बहुसम्मतत्वाद् अयं प्रकारो न अनादरणीयः । किन्तु तत्र दोषो दृश्यत इति दोषमाह । एषाम् एतेषां पक्षे अष्टौ अष्टवर्षावधिकं अरिष्टं, हित्वा वर्जयित्वा, विंशतेरधस्तात् अनायुः क्षीणायुः न स्यादिति दोषः दृश्यत इति शेषः । पिण्डायुर्दायगणनेन विंशतेरधस्तान्मरणं न स्यात् । अष्टवर्षावधिको बालारिष्टयोगः । एवमष्टवर्षादूर्ध्वं विंशतेरधश्च मयादिमतेन मरणं न सम्भवति । लोके तु दृश्यत एव । अनेन मयादीनामविमृश्यकारित्वदोषो वक्तव्यः ।

लग्नं कन्याद्यभागः । व्यये रविबुधकुजगुरुशुक्राः । सिंहान्त्यभागे शुक्रः । सिंहापरार्धे मूढो गुरुः । सिंहपूर्वार्धे मूढौ कुजबुधौ । कटकान्त्यभागे क्षीणचन्द्रः । अष्टमे वृषाद्यभागस्थः शनिः । अस्मिन् योगे लग्नस्यायुः शून्यम् । व्ययस्थरवेः शून्यम् । लाभस्थक्षीणचन्द्रस्यात एव पापस्य दृश्यार्धहरणानन्तरं नव वर्षाः पञ्च मासाः चत्वारि दिनानि । कुजस्य मूढहरणानन्तरं सत्रिपादत्र्यब्दादधिकमायुः । बुधस्य मूढहरणानन्तरं सपादपञ्चाब्दतोऽधिकम् । गुरोः मूढहरणानन्तरं सत्रिपादषडब्दतोऽधिकम् । शुक्रस्य शत्रुक्षेत्रहरणानन्तरं अष्टौ वर्षाः अष्टादश दिनानि । शनेः अष्टौ वर्षाः त्रयो मासाः षोडश दिनानि चत्वारिंशन्नाडिकाः । एवं मययवनमता-

नुसारेणाल्पिष्ठायुर्योगेऽस्मिन्नायुः सार्धैकचत्वारिंशदब्दतोऽधिकं भवति। वस्तुतस्तु चतुश्चत्वारिंशदब्दतोऽधिकमेवाल्पिष्ठायुःप्रमाणं भवति। एतज्ज्ञापनार्थमेवाचार्येण चतुश्चत्वारिंशदक्षरयुतं वृत्तं प्रयुक्तम्। एवं चेदष्टवर्षेभ्यः परं आचतुश्चत्वारिंशतोऽनायुरभावे वक्तव्ये कुतो "नायुर्विंशतेः स्यादधस्ताद्" इत्याचार्येणोक्तमिति चेदुच्यते। न आ आयुरिति पदच्छेदः कार्यः। अष्टौ बालारिष्टान्तर्गताष्टवर्षान् ततः परं आविंशतेः अरिष्टं योगारिष्टाभिधान् मृत्युयोगांश्च हित्वा अधस्ताद् अल्पिष्ठायुःप्रमाणादधस्ताद् आयुर्नेति दोषो जायते इति व्याख्यया सर्वं समञ्जसं भवति।

वृत्तं शालिनी। अनेन विष्णुगुप्तादीनां तच्छालित्वमथवा नामसूचितमाहात्म्यं व्यञ्जितम्। एवं विष्णुगुप्तः विष्णुगुप्त एव, देवस्वामी देव एव, सिद्धसेनः सिद्ध एव। अत उक्तदोषः शिष्यशिक्षार्थं लोकदृष्टचैव पूर्वपक्षतया प्रतिपादितः। सिद्धान्तस्तूच्यते।

एषां पक्षे अष्टौ आविंशतेररिष्टं च हित्वा। अधस्तात् पिण्डायुर्विधिनाल्पिष्ठायुषोऽधस्तात्। अनायुः मृत्युयोगाः। दोषः दोषकरः मृत्युकरः जायते। बालारिष्टयोगारिष्टस्वल्पमध्यमाद्यायुर्योगा अपवादा भवन्तीति भावः॥ ७॥

दोषान्तरमाह—

**यस्मिन्योगे पूर्णमायुः प्रदिष्टं तस्मिन् प्रोक्तं चक्रवर्तित्वमन्यत्।**
**प्रत्यक्षोऽयं तेषु दोषोऽपरोऽपि जीवन्त्यायुः पूर्णमर्थैर्विनाऽपि॥ ८॥**

इति। मयादिमते यस्मिन्योगे पूर्णमायुः प्रदिष्टं परमायुरुक्तं तस्मिन्योगे अन्यच्चक्रवर्तित्वं चक्रवर्तित्वयोगान्तरमपि प्रोक्तम्। एवं तन्मते परमायुर्योगश्चक्रवर्तिनामेव भवति। तेषु मयादिषु अयं प्रत्यक्षोऽपरो दोषोऽपि दृश्यत

इति शेषः। कुतो दोष इति चेत् अर्थैर्विनाऽपि धनं विनाऽपि पूर्णमायुः जीवन्ति। अतिदरिद्रा अपि पूर्णायुषाऽनुगृहीता दृश्यन्त इति भावः। एवमयं तेषां मयादीनां मते द्वितीयोऽविमृश्यकारित्वदोषः।

वृत्तं शालिनी पूर्वश्लोकानुकरणद्योतकम्। अतः श्लोकद्वयेन, लोकज्ञानेन शास्त्रज्ञानेन च विमृश्य वक्तव्यमिति शिष्यान् बोधयितुं स्थूलदृष्टया लोकदृष्ट्या च मयादिमतस्थो दोषो दर्शितः। महात्मनां मयासुरदीनामविमृश्यकारित्वकथनेन "गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः" इत्युक्तप्रकारेणान्तेऽविमृश्यकारित्वं स्वस्मिन्नेव विश्रान्तिमेष्यति। अतः पटुधियां होराशास्त्राध्येतॄणां बुद्धेस्तीक्ष्णतासिद्ध्यर्थम् अनवद्य-तर्कपदव्यारोहणार्थं सोपानभूतमेवमादिपूर्वपक्षमुपक्षिपत्याचार्यः। वस्तु-तस्तूक्तपरमायुर्योग एव सर्वेषां ग्रहाणां कलयैकया तुङ्गभागाद्यतिक्रमणे आयुर्नातिक्षीयते। किन्तु "प्रथितश्चतुरोऽटनोऽल्पवित्तः" इति वक्ष्य-माणप्रकारेण चक्रवर्तियोगस्य नाशः संभवति। एवं मयादिमते चक्रवर्ति-योगं विनैव दीर्घायुर्योगो दृश्यते। शालिनीवृत्तस्य तच्छालित्वसूचक-तयाऽस्मिन्नेवोक्तप्रकारकोत्तरो दृश्यते। यथा यस्मिन्योगे पूर्णमायुः प्रदिष्टं चक्रवर्तित्वं च, तस्मिन् अन्यत्प्रोक्तम् चक्रवर्तित्वादन्यदपि प्रोक्तमिति व्याख्येयम्। कथं प्रोक्तमिति चेल्लक्षणया, यथा स्वतुङ्गेषु चक्रवर्तित्वं तथा वितुङ्गेष्वन्यदित्यूह्यम्। तदेव विमृशति। अर्थैर्विनापि पूर्णमायुः लब्ध्वा जीवन्ति इत्यपरः न तूत्कृष्टो दोषः। वितुङ्गभागगैः ग्रहैः कृते योगे स्थितो दोषः, न तु मयादीनां मते। प्रत्यक्ष एव विमृश्यकारिणां सुस्पष्टमेवैतत्। अथवा अन्यच्छब्देन केमद्रुमादयोऽनिष्टयोगा वा लक्षिताः। उक्तयोग एव पूर्णायुषोऽतिह्रासाभावेनैव केमद्रुमादयः संभवन्ति। तदाऽपि राजयोगादयो भङ्गतां यान्ति।

"सत्योपदेशः प्रवरोऽत्र किन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः।"

इति सत्यमतेऽपि दोषः प्रदर्शितः। तत्र—

"आचार्यकं त्वत्र बहुन्नतायामेकं तु यद्भूरि तदेव कार्यम्।"

इति दोषोऽपि परिहृतः। एवमेवाचार्येण मयादिमतेऽपि दोषपरिहारः प्रदर्शितः। "तस्मिन् प्रोक्तं चक्रवर्तित्वमन्यत्" इत्यनेन राजयोगादिषु मयादिमतप्रकारेणायुर्दायगणनं कार्यमिति सूचितम्। तथा चोक्तं जातकपारिजाते—

"राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः।"

इति। एवं मययवनाद्युक्तराजयोगा वा दीर्घायुर्योगा वा नाऽऽचार्यानभिप्रेताः। किन्तु "जीवन्त्यायुःपूर्णमर्थैर्विनाऽपि" इत्यनेन भाग्ययोगा दीर्घायुर्योगाश्च पृथक्पृथग्वक्तव्या इति सूचितम्। मययवनादयस्तु भाग्ययोगेषु दीर्घायुर्वदन्ति। अत एवोक्तं सर्वार्थचिन्तामणौ—

"भाग्ययोगेषु दीर्घायुर्वदन्ति यवनादयः।
तत्पृथक्पृथगेवाहुर्वराहमिहिरादयः॥
यत्र यत्र तयोर्योगस्तदिष्टं मम सम्मतम्।
कदाचित्कान्तयोर्योगः सर्वथा न भवेत्तथा॥"

इति॥ ८॥

अथ जीवशर्ममतं सत्याचार्यमतं च परामृशति—

**स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुषः स्वरांशम्।**
**ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम्॥ ९॥**

इति। स्वमतेन किल प्रमाणान्तरैर्विना स्वमेधया जीवशर्मा जीवशर्माचार्यः। परमायुषः पञ्चदिनयुक्तविंशत्युत्तरशतवर्षप्रमाणकालस्य। स्वरांशं सप्तमांशं

दिनसप्तांशयुक्तद्वाविंशतिदिवसाधिकमाससहितसप्तदशवर्षात्मकं कालम्। ग्रहदायं ग्रहाणामेकैकस्यायुर्दायमिति, आह ब्रूते। अस्मिन् पक्षे सर्वेषां ग्रहाणां आयुःप्रमाणं तुल्यं भवति। "नीचेऽतोऽर्धम्" इत्याद्युक्तानि सर्वाणि हरणानि जीवशर्मपक्षेऽपि कर्तव्यानि। स्वमतेन किल इति किलशब्देन संशयो दर्शितः। प्रमाणस्याभावात् स्वमतेन इत्युक्तम्। तेन नावज्ञा कर्तव्या।

अथ सत्याचार्यमतमाह—ग्रहभुक्तनवांशराशितुल्यं ग्रहैः सूर्यादिभिर्ग्रहैः, भुक्तैः नवांशराशिभिः तुल्यं समानम्। ग्रहदायं ग्रहायुःप्रमाणम्। सत्यवाक्यं सत्याचार्यवचनम्। बहुसाम्यं बहुषु साम्यं बहुसाम्यं बहुषु जातकेषु दृष्टेनायुषा साम्यमित्यर्थः। समुपैति। वृत्तं वसन्तमालिका।

"विषमे ससजा गुरू समे चेत्सभरायश्च वसन्तमालिका स्यात्।"

इति लक्षणात्। अनेन ग्रहभुक्तनवांशराशीनां वासन्तिकराश्यादित्वं व्यञ्जितम्। वासन्तिकराशी मेषवृषभौ। वृषभादित्वस्य प्रसक्त्यभावान्मेषादित्वमेव विवक्षितम्। एवं ग्रहस्फुटं लिप्तीकृत्य चतुर्विंशतिभिः शतैर्हृत्वा शिष्टा लिप्ताः शतद्वयेन हृत्वा लब्धाः संवत्सरा भवन्ति। शिष्टाः कलाः द्वादशभिर्हत्वा शतद्वयेन हृत्वा लब्धा मासा भवन्ति। शिष्टं त्रिंशता हत्वा शतद्वयेन हृत्वा लब्धा दिवसा भवन्ति। शिष्टं पुनः षष्ट्या हत्वा शतद्वयेन हृत्वा लब्धा नाडिका भवन्ति। एवं विनाडिकादयोऽपि नेयाः। एवं सर्वेषां ग्रहाणामायुर्दाये वर्षमासदिवसादयो लभ्याः। उक्तं च—

"सत्योक्ते ग्रहमिष्टं लिप्ताः कृत्वा शतद्वयेनाप्ते।
मण्डलभागविशुद्धेऽब्दाः स्युः शेषात्तु मासाद्याः॥" इति।

मययवनादिपक्षे दोषोक्त्या जीवशर्मपक्षस्य स्वमतेनेति प्रमाणमूलत्वाभावेन सत्यमतस्य सत्यवाक्यमिति सत्यवचनत्वप्रतिज्ञया च सत्याचार्यपक्षस्यादरणीयत्वं व्यञ्जितम्। बहुसाम्यं समुपैति सत्यवाक्यम्—

"ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥"

इत्युक्तप्रकारेण अन्योन्यविरुद्धबहुपक्षवति सति ज्योतिःशास्त्रस्य प्रयोजनाभावात् तत्र बहुसंमतस्यैव ग्रहणं न्याय्यमिति न्यायेन सत्यवाक्यस्यैव बहूनां मतेन साम्यत्वादपि तदेवादरणीयम् । "उदयरविशशाङ्क" इति सूर्यचन्द्रयोरपि लग्नतुल्यत्वं दर्शयिष्यति । तत्र देहाभिमानिनामन्नमयकोशमात्रदर्शिनां शरीरभूतस्य लग्नस्य प्राबल्यम् । ईश्वरपूजादिपुण्यकर्मनिरतानां मनोमयकोशसमीपवर्तिनां मनोभूतचन्द्रलग्नवशात्फलकथनमुचितम् । आत्मैकनिष्ठानामात्मजिज्ञासूनां ज्ञानिनां चाऽऽत्मभूतसूर्यलग्नवशात्फलं वाच्यम् । प्रायेणास्मिन् लोके देहाभिमानिनामेव बाहुल्याद् बहुसाम्यमिति सत्याचार्योक्तांशकायुषो बहुषु जातकेषु दृष्टेनाऽऽयुषा साम्यत्वोक्त्या च लग्ने बलवति सत्याचार्यमतेनाऽऽयुश्चिन्त्यमिति सूचितम् । एवं बहुजातकोपयोगित्वाद् बहुजातकोपयोगार्थमेव शास्त्रस्यारम्भान्मययवनादिमतोक्तस्य नृपतिजातकमात्रविषयकत्वात्तेषां मते दोषोक्तिः "प्रातः प्रातरनृतं ते वदन्ति" इत्युदितहोमप्रशंसापरानुदितहोमनिन्दावत्सत्याचार्यमतप्रशंसापरैव । न तु महात्मनां मययवनादीनां मतनिन्दापरा । यदा सर्वेऽपि जनाः कृतयुगधर्मिणो भवन्ति तदा सर्वेषामपि मययवनादिमतेनायुर्वाच्यम् ।

स्वमतेन किलाह । जातके लग्नवशात्, चन्द्रलग्नवशात्, सूर्यलग्नवशाद्वा आयुश्चिन्त्यम् । वृत्तं वंशस्थम् । जगतीच्छन्दः । अनेन द्वादशराशिष्वन्यतमस्य लग्नस्य बलवत्वेऽंशकायुर्वाच्यमिति सूचितम् । चन्द्रे बलवति नैसर्गिकायुर्भवति । सूर्ये बलवति पिण्डायुर्वाच्यम् । एतेषु सर्वेषु बलहीनेषु स्वमतेन स्वबुद्ध्या निर्णेयमायुः । अतः स्वमतेन किलाह जीवशर्मा इत्यनेन सूर्यचन्द्रलग्नेषु बलहीनेषु जीवशर्मोक्तायुश्चिन्त्यमिति सूचितम् । उक्तं च वराहमिहिरमनोऽनुवर्तिना कल्याणवर्मणा—

" अंशोद्भवं विलग्नात्पैण्डयं भानोर्निसर्गजं चन्द्रात् ।
एतेषां यो बलवानेकतमस्तस्य कल्पयेदायुः ॥
लग्नदिवाकरचन्द्रा त्रयोऽपि बलरिक्ततां यदा यान्ति ।
परमायुषः स्वरांशं ददति खगा जीवशर्मोक्तम् ॥ " इति ।

स्वमतेन स्वराण्मतेन स्वराडिन्द्रः तन्मतेन माहेन्द्रेण मतेन महेन्द्रशास्त्रमनुसृत्येति यावत् । ग्रहदायं रश्मिरश्मिजग्रहदायं परमायुषः सर्वेषां ग्रहाणामुक्तरश्मिसङ्घातस्य एकोनपञ्चाशद्रश्मीनां स्वरांशः सप्तांशसप्तरश्मय इति जीवशर्मा किल जीवस्य शर्मकर्ता कश्चन दैवज्ञ आह । अनेन केषांचिन्मते रश्मिजायुर्दायगणने सर्वेषामेव ग्रहाणां सप्त सप्त रश्मयो भवन्ति । तथा च सारावल्याम्—

" एवं महेन्द्रशास्त्रे मणिन्थमयबादरायणप्रोक्ते ।
सप्त प्रत्येकस्था निर्दिष्टा रश्मयो ग्रहेन्द्राणाम् ॥
सर्वे प्रमाणमेते मुनिवचनात्किन्तु सप्त सङ्ख्यैव ॥ " इति ।

स्वमतेन " स्वद्वादशैकादशराशिपानाम् " इति द्रेक्काणवशात् पुण्यपापनिर्णयविधिना । जीवशर्मा जीव एव शर्म यस्य सः स्वर्गलोकविमुखः अत एव अनाहृतशुभवर्गः । अनेन द्रेक्काणेशस्य क्रूरवर्गजाद् इति लब्धम् । द्रेक्काणेशस्य क्रूरवर्गजस्य परमायुषः स्वरांशं आयुर्दायं आह । द्रेक्काणेशस्य क्रूरवर्गजं विंशोत्तरशतेन सङ्गुण्य सप्तभिर्हृत्वा परमायुषा विशोध्य यदाप्तं तदायुर्भवति । तथा च उत्तरकालामृते—

" प्रागुक्ताच्छुभपापवर्गगणिताद्द्रेक्काणपैः साधिता
सङ्ख्या क्रूरभवा खनेत्रविधुभिर्गुण्या नगाप्ताः समाः ।
शुद्धाः साश्विसुधाकरैरपि भवेदायुर्हि जन्मत्रये
संवादार्थमिहैव तल्लघुतरं प्रोक्तं नवांशायुषः ॥ "

इति । द्रेक्काणेशे बलवत्येवमायुश्चिन्त्यमिति मन्यामहे ॥ ९ ॥

मययवनादिमतोक्तानां संवत्सराणां परमोच्चस्थविषयत्वान्नीचान्तराला-दिषु तेषां ह्रास उक्तः । अत्र सत्यमतायुर्दाये लब्धग्रहायुषां स्वतुङ्गवक्रा-दिवशाद्विशेषमाह—

**स्वतुङ्गवक्रोपगतैस्त्रिसंगुणं**
**द्विरुत्तमस्वांशगृहत्रिभागगैः ।**
**इयान्विशेषस्तु भदन्तभाषिते**
**समानमन्यत्प्रथमेऽप्युदीरितम् ॥ १० ॥**

इति । ग्रहतुल्यनवांशराशितुल्यमायुः स्वतुङ्गवक्रोपगैः स्वोच्चगैः वक्रं गतैश्च त्रिसंगुणं त्रिगुणितं भवति । उत्तमस्वांशगृहत्रिभागगैः वर्गोत्तमांशस्थैः स्वक्षेत्रस्थैः स्वनवांशस्थैः स्वद्रेक्काणस्थैर्वा ग्रहैः द्विः ग्रहायुः द्विगुणितं भवति । भदन्तभाषिते भदन्तः सत्याचार्यः सत्याचार्योक्ते इयान् उक्तत्र्यादिगुणी-करणमेव विशेषः । प्रथमेऽपि आदावेवोदितम् । उक्तमन्यत् । नीचमूढ-शत्रुक्षेत्रदृश्यार्धहरणं समानं भवति । अस्मिन्नपि कर्तव्यमित्यर्थः ।

पूर्वश्लोकोक्तायुषो विशेषस्योक्त्या रश्मिजायुषश्चैवं वाच्यम् । तत्र त्रिसंगुणमित्यत्र त्रि इत्यक्षरसंख्यासूचितद्विगुणं वा । जगतीछन्दस्त्वाद् अंशशब्देन द्वादशांशो गृह्यते । त्रिभागगैः त्रिभ इति त्रिगुणितभं चत्वारि द्वादशेत्यर्थः । आगच्छतीति आगः बन्धुः । एवं त्रिभागगैरिति बन्धुद्वादश-भागस्थो विवक्षितः । स्वतुङ्ग इत्यत्र स्व तुङ्ग इति छेदेन स्वशब्देन स्वक्षेत्रस्थो ग्रहो वा गृह्यते । उत्तमस्वांशगृहत्रिभागगैरित्यत्रोत्तमशब्दस्य स्वांशादिभिः प्रत्येकं योगः । अनेन प्रयोजनं तु त्रिभागगैरित्यत्रैव दृश्यते । उत्तमत्रिभाग इत्यति-मित्रद्वादशांशग्राहकः । एवं रश्मिजायुषि स्वतुङ्गवक्रस्वगृहस्वद्वादशांशातिमित्र-द्वादशांशगैर्द्विगुणमायुर्भवति । केवलरश्मिसंख्यानयने तु स्वगृहतुङ्गवक्रगानां त्रिगुणा वा रश्मयः स्युः । तथा च जातकपारिजाते रश्मिजायुरुद्दिश्य—

"स्वराशितुङ्गातिसुहृद्गृहस्थे वक्रोपगे च द्विगुणीकृतांशुः।" इति।

सारावल्यां रश्म्यानयनविधौ—

"मित्रद्वादशभागे द्विगुणास्त्रिगुणाः स्वके च दीधितयः।
वक्रे पुनस्तथोच्चे स्वराशिगे तद्भवत्येव।
द्विगुणाः स्युर्दीधितयो वक्रस्थेऽप्येवमेव स्युः॥" इति।

सर्वमालोच्य यथागुरूपदेशं गुणनं कार्यम्। वृत्तं वंशस्थम्। उपेन्द्रवंशा वा। अनेनोपेन्द्रदेवताकबुधस्य बलाधिक्ये रश्मिजायुर्वक्तव्यमिति सूचितम्।

जगती छन्दः। अनेन द्वादशराशिगुणकारसंस्कृताष्टकवर्गायुषोऽपि गुणहरणं कार्यमिति सूचितम्। तच्चोच्चनीचमौढ्यवशादेव।

जगती छन्दः। अनेन द्वादशभावेष्वपि गुणकारचिन्तायामनेन गुणक्रिया कर्तव्येति सूचितम्। वियोनिजन्मचोरप्रश्नादिष्वेतद्योज्यम्। तथा च सारावल्याम्—

"द्वित्रिगुणत्वं तेषामायुर्दायप्रकारोक्तम्।"

इति। जगतीछन्दसा द्वादशराशिवशादुक्तस्यैतच्छास्त्रस्य श्लोकसङ्ख्याऽपि सूचिता। भदन्तभाषिते भानि राशयः द्वादश, दन्ताः द्वात्रिंशत्, भानां दन्ताः चतुरशीत्यधिकत्रिशतश्लोकैर्भाषिते अस्मिन् ग्रन्थे इयान् विशेषः सत्याचार्यस्य मतमेव प्राधान्येनानुसृतम्। एवं श्लोकसङ्ख्या सत्यमतानुसारित्वं च दर्शितम्॥ १०॥

अंशकायुषि विशेषान्तरमाह—

**किन्त्वत्र भांशप्रतिमं ददाति
वीर्यान्विता राशिसमं च होरा।**

**क्रूरोदये योऽपचयः स नात्र**
**कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ ११ ॥**

इति । किन्तु समानमन्यत्प्रथमेऽप्युदीरितमित्यनेन नीचमूढशत्रुक्षेत्रदृश्यार्ध-क्रूरोदयहरणानि "नवतिथि" इत्याद्यब्दाश्च प्राप्ताः । तत्रादौ लग्नोक्तायुषि विशेषं दर्शयति । होरा लग्नम् । भांशप्रतिमं नवांशतुल्यमायुर्ददाति । भांश इति मेषादित इति द्योत्यते । ग्रहायुर्वल्लग्नायुरप्यानेयमित्यर्थः । वीर्यान्विता लग्नं वीर्यवच्चेत् राशिसमं च अंशसमं राशिसमं चायुरेकीकृत्य ददाति । पिण्डायुषि तु लग्नस्यांशप्रतिममथवा राशितुल्यमायुर्भवति । अथ क्रूरोदयहरणनिषेधेनेतरहरणानि विदधाति । क्रूरोदये लग्ने क्रूरे योऽपचयः यद्धरणं मययवनादिमते विहितमत्र न, प्रथमोपदिष्टैः "नवतिथि" इत्यादि पूर्वोपदिष्टैः मयादिविहितैः अब्दैः वत्सरैश्च न कार्यम् । "ग्रहभुक्त-नवांशराशितुल्यम्" इत्यनेनैव "कार्यं च नाब्दैः प्रथमोपदिष्टैः" इति सिद्धे कुतः पुनरुक्तिरिति चेदुच्यते । वृत्तं इन्द्रवज्रा, अनेन माहेन्द्र-शास्त्ररश्मिजायुषि रश्मयः उपयोज्याः न तु पूर्वोपदिष्टा अब्दा इति सूचितम् । पिण्डायुर्दायव्यतिरिक्तसर्वायुर्दायेषु क्रूरोदयहरणाभावस्तत्तदायु-र्वर्षाश्चानेन विहिताः ॥ ११ ॥

सत्योपदेशेऽपि स्थूलदृष्ट्या लक्ष्यमाणदोषं परिहरति—

**सत्योपदेशः प्रवरोऽत्र किन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः ।**
**आचार्यकं त्वत्र बहुघ्नतायामेकं तु यद्भूरि तदेव कार्यम् ॥ १२ ॥**

इति । सत्योपदेशः प्रवरः । अत्रोक्तमयाद्युक्तजीवशर्मोक्तसत्योक्तेषु मतेषु सत्योपदेशो वरीयान् भवति । किन्त्वत्र बहुवर्गणाभिः बह्वीभिर्गुणनक्रियाभिः अयोग्यं कुर्वन्ति अनधिगतशास्त्रसंप्रदायाः प्रयोजनानर्हं कुर्वन्ति । यथा

कन्याद्यभागस्थितस्य वक्रगतस्य बुधस्य मकरांशकत्वान्नव वत्सराः स्वोच्चस्थित्या त्रिगुणीकरणेन सप्तविंशतिः। स्वक्षेत्रस्थित्या द्विगुणीकरणेन चतुःपञ्चाशत्। पुनः स्वत्रिभागस्थित्या द्विगुणीकरणेनाष्टोत्तरशतं भवति। वक्रगत्या त्रिगुणीकरणेन चतुर्विंशत्यधिकशतत्रयसंवत्सरा बुधस्यैकस्य भवन्ति।

"शिष्यस्य बुद्धिमान्द्यादाचार्योपदेशसंवरणात्।
परिमुषितसंप्रदायान्यहह परे दूषयन्ति शास्त्राणि॥"

इत्युक्तवच्छास्त्रसंप्रदायानभिज्ञैरेवं प्रवरः सत्योपदेशोऽयोग्यः कृतः। अत्रास्मिन्विषये आचार्यकं तु संप्रदायस्तु, बहुन्नतायां बहुषु गुणकारेषु, प्राप्तेषु यद्भूरि तदेव कार्यम्। एवं द्वैगुण्ये त्रैगुण्ये च प्राप्ते भूरित्वात्त्रैगुण्यमेव कर्तव्यम्। तत्रापि एकं एकगुणकार एव कार्यः। बहुनिमित्तद्वैगुण्येषु प्राप्तेषु द्वैगुण्यमेव कर्तव्यम्। वक्रनिमित्तकत्रैगुण्ये स्वोच्चनिमित्तकत्रैगुण्ये च प्राप्ते एकं त्रैगुण्यमेव कर्तव्यम्। एवमुदाहृतबुधविषये त्रैगुण्येन सप्तविंशतिवर्षाण्येव वक्तव्यानि।

वृत्तमिन्द्रवज्रा। इन्द्राचार्यो बृहस्पतिः स्मारितः। अत्र सत्योपदेशे दोषं प्रदर्श्य संप्रदायविधिना परिहृतिरुक्ता। अनेन यत्र यत्रास्मिन् शास्त्रे बहुपक्षतया योग्येतरत्वं दृश्यते तत्र तत्र गुरूपदेशमनुसृत्य शास्त्रसंप्रदायं ज्ञात्वा फलं वाच्यमिति सूचितम्।

सत्योपदेशस्य प्रवरत्वोक्त्येतरेषां वरत्वं व्यञ्जितम्। अनेन सर्वाण्यपि मतानि ग्रहबलवशाद्ग्राह्याणि भवन्ति। एवं पूर्वोक्तप्रकारेण सूर्ये बलवति पिण्डायुरानयनं कार्यम्। लग्ने अंशकायुः। उभयोरपि बलिष्ठयोरुभे अपि कार्ये इत्याद्यूह्यानि। अनेन द्रव्यसङ्ख्यादूरनिर्णयाद्युपयुक्तराशिग्रहरश्मयः तेषां गुणनहरणादयोऽपि व्याख्याताः। ते कालदेशानुसारेण तत्तद्गुरूपदेशेनानुसर्तव्याः। उक्तं च कृष्णीये—

"अजवृषधनुषो नवतिः शतानि झषमकरकुम्भानाम् ।
तौले: सप्तदशाधिकमन्येषु शतं दशाभ्यधिकम् ॥"
"चन्द्रस्यैका नवतिः षष्टिर्जीवे शुभेषु पञ्चकृतिः ।
सप्ततिरधिका षड्भिः शुक्रे सौम्येऽधिका चतुर्भिः स्यात् ॥
द्विगुणं स्वगृहे कुरुते चतुर्गुणं स्वोच्चवक्रगो ज्ञेयम् ।
त्रिगुणं ग्रहास्त्रिकोणे जनयति शेषैर्यथासङ्ख्यम् ॥
हन्त्यस्तमये षष्ठं पञ्चममायुषि चतुर्थमथ नवमे ।
दशमे तृतीयमाये दायार्धं सर्वहानिरन्यत्र ॥" इति ।

यद्भूरि तदेव कार्यं यस्मिन् यद्भूरि दृश्यते तत्तत्र कार्यम् । यत्र देशे यद्भूर्यनुसृतं तदेकमेव तत्र कार्यम् । द्राविडदेशेषु विंशोत्तर्युडुदशा अनुसृता । तेषु सैव कार्या न त्वितरा । यत्पक्षः संप्रदायज्ञदैवज्ञैर्बहुभिरादृतः स एक एवालमिति भावः ॥ १२ ॥

अथाऽमितायुर्लक्षणमाह—

**गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते ।**
**भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात् ॥१३॥**

इति । गुरुशशिसहिते गुरुणा चन्द्रेण च युक्ते, कुलीरलग्ने कटकलग्ने, शशितनये भृगुजे च बुधशुक्रयोः, केन्द्रयाते केन्द्रगतयोः, शेषैः शनिरविकुजैः, भवरिपुसहजोपगैश्च लाभषष्ठतृतीयगैः, जातस्य, इहास्मिन् जीवलोके, अमितमायुः अनुक्रमाद्विना स्यात् । मययवनजीवशर्मसत्यादिमुनिप्रोक्तायुर्गणनविधिक्रममुल्लङ्घ्य आयुर्भवति । एतद्योगजस्याऽऽयुर्गणनं न कार्यम् इत्यर्थः ।

इन्द्रदैवत्यं छन्दः । अतोऽस्मिन्योगे जातश्चक्रवर्ती भवतीति सूचितम् । पुष्पिताग्रावृत्तम् ।

इह इति चोक्तम्। अनेन प्रलयपर्यन्तमपि जीवेदिति द्योतितम्। बहवोऽपि दीर्घायुर्योगा अत्र सूचिताः। गुरुशशिसहिते केवलगुरुचन्द्रयोगेऽपि दीर्घायुर्भाग्ययोगश्च भवतः। केन्द्रयाते इति गुरुशशिनोरप्यन्योन्यकेन्द्रगतत्वमपि दीर्घायुर्योगप्रदमिति सूचितम्। तथा च मन्त्रेश्वरः—

"शशिनि सुरगुरोः केन्द्रगे केसरीति।"

"केसरीव रिपुवर्गनिहन्ता प्रौढवाक् सदसि राजसवृत्तिः।
दीर्घजीव्यतियशाः पटुबुद्धिस्तेजसा जयति केसरियोगे॥" इति।

अन्यैश्च—

"अतिमतिरतिविभवबलः सहस्रमासेषु जीवितं विद्यात्॥" इति।

"किं कुर्वन्ति ग्रहाः सर्वे चन्द्रकेन्द्रे बृहस्पतौ।
गजयूथसहस्राणि निहन्त्येकोऽपि केसरी॥"

इति चोक्तम्। गुरोर्लग्नस्थितिरप्यायुर्वृद्धिकरी। तथा च सारावल्याम्—

"सर्वातिशाय्यतिबलः स्फुरदंशुमाली
लग्ने स्थितः प्रशमयेत्सुरराजमन्त्री।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव चक्रधरे प्रणामः॥" इति।

चन्द्रस्य कुलीरलग्नस्थित्या गुरुयोगेन च चन्द्रस्य शुभयोगदृष्टी स्वक्षेत्रादिस्थितिश्चाऽऽयुर्वृद्धिकरीति सूचितम्। तथा चोक्तम्—

"स्वोच्चस्थः स्वगृहेऽथवाऽपि सुहृदां वर्गेऽस्य सौम्येऽपि वा
संपूर्णः शुभवीक्षितः शशधरः स्वीयेऽथ वर्गेऽपि वा।
शत्रूणामवलोकनादिरहितः पापैर्न दृष्टो युतो-
ऽरिष्टं हन्ति सुदुस्तरं दिनमणिः प्रालेयराशिं यथा॥" इति।

लग्नाधिपस्य चन्द्रस्य लग्नस्थित्या लग्नाधिपस्य बलाधिक्यात् स्वक्षेत्रकेन्द्र-स्थितिवशादायुर्दीर्घत्वं वाच्यम् । यस्मात्,

"अत्यन्तसत्वे यदि लग्ननाथे सौम्यान्विते तादृशदृष्टियोगे ।
केन्द्रस्थिते पापदृशा विहीने सद्भाग्ययुग्जीवति दीर्घमायुः ॥"

इत्युक्तम् । केन्द्रस्ववर्गस्थगुरोः कर्कटकस्थित्याऽपि दीर्घायुर्भवति । तथा च जातकपारिजाते—

"चापांशे कर्कटे लग्ने तस्मिन् देवेन्द्रपूजिते ।
गोपुरांशे गुरौ केन्द्रे जातो ब्रह्मपदं व्रजेत् ॥" इति ।

"गुरुशशिसहिते कुलीरलग्ने
शशितनये भृगुजे च केन्द्रयाते ।"

इति लग्नेशस्य शुभयोगवशात् केन्द्रस्थशुभैर्दीर्घायुस्त्वं भवति । यस्माज्जातकपारिजाते—

"चतुष्टये शुभैर्युक्ते लग्नेशे शुभसंयुते ।
गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् ॥" इति ।

शशितनये भृगुजे च केन्द्रयाते इति शुभयुक्तकेन्द्रत्वमायुर्दैर्घ्य-लक्षणम् । भवरिपुसहजोपगैश्च शेषैरिति पापानां कर्मव्यतिरिक्तोपचयस्थान-स्थितिरप्यायुर्वृद्धिकरी । यस्मादुक्तम्—

"शुभैर्युक्ते चतुष्केन्द्रे पापैः षट्त्रिभवान्वितैः ।
सिंहे लग्ने यदा जातो जीवेत् षडयुतानि सः ॥" इति ।

"त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् ॥" इति च ।

पुष्पिताग्रावृत्तत्वात् केन्द्रेष्वपि दशमस्य प्राबल्यम् । एवं शुभानां दशमस्थित्या शुभफलं सूचितम् । तथा चोक्तं जातकपारिजाते—

" लग्नाद्वा चन्द्रलग्नाद्वा दशमे शुभसंयुते ।
योगोऽयममला नाम कीर्तिराचन्द्रतारकी ॥ " इति ।

लग्ने वा चन्द्रलग्ने वा स्थितेन शुभेनापि शुभफलं वाच्यमिति गुरुशशिसहितकुलीरलग्नादूह्यम् । तथा चोक्तम्—

" यस्य जन्मसमये शशिलग्ना-
त्सद्ग्रहो यदि च जन्मनि संस्थः ।
तस्य कीर्तिरमला भुवि तिष्ठे-
दायुषोऽन्तमविनाशनसम्पत् ॥ " इति ।

भवरिपुसहजोपगैश्च शेषैरिति शेषशब्देन सर्परूपराहुर्वा ग्राह्यः । उक्तं चास्य भवरिपुसहजोपगत्वेन शुभफलदत्वं जातकपारिजाते—

" राहुस्त्रिलाभषष्ठे लग्नात्सौम्यैर्निरीक्षितः सद्यः ।
नाशयति सर्वदुरितं मारुत इव तूलसङ्घातम् ॥ " इति ।

भवरिपुसहजोपगैश्च शेषैरिति पापानां केन्द्रकोणनिधनव्यतिरिक्तभावस्थितिः गुरुशशिसहिते कुलीरलग्ने इति लग्नेशगुर्वोः केन्द्रस्थितिश्चायुर्वृद्धिकरी । तथा च मन्त्रेश्वरः—

" केन्द्रत्रिकोणनिधनेषु न यस्य पापाः
लग्नाधिपः सुरगुरुश्च चतुष्टयस्थौ ।
भुक्त्वा सुखानि विविधानि सुपुण्यकर्मा
जीवेच्च वत्सरशतं स विमुक्तरोगः ॥ " इति ।

लग्नाधिपशुभानां केन्द्रस्थित्यायुर्योगविधानसामर्थ्याद् लग्नेशशुभाः केन्द्रादिगाः बहुसमाल्पायुःप्रदाः अष्टमेशपापाः आपोक्लिमपणपरकेन्द्रगाः बहुसमाल्पायुःप्रदा इत्यपि सूचितम् । यस्मान्मन्त्रेश्वरः—

" लग्नाधीशशुभाः क्रमाद्बहुसमाल्पायूंषि केन्द्रादिगाः
रन्ध्रेशोग्रखगास्तथा यदि गता व्यस्तं विदध्युः फलम् । " इति ।

च केन्द्रयाते इति त्रिकोणगस्याऽपि शुभस्यायुर्वृद्धिकरत्वं व्यञ्जितम् । पुष्पिताग्रावृत्तेन षष्ठाष्टमव्ययस्थानेष्वनुक्तस्थानेषु ग्रहेषु लब्धायुर्ष्टं वाच्यमित्यपि व्यञ्जितम् । एवं सामान्यायुर्निर्णयविधिः सूचितः । यथा शुभानां केन्द्रगानामंशत्रयं देयम् । त्रिकोणायगानामंशद्वयं धनसहजगानामेकोंऽशश्च देयः । त्रिषडायगानां पापानामंशत्रयं धनगानामंशद्वयं त्रिकोणगानामेकोंऽशश्च देयः । पुनर्लग्नाधिपस्य गुरोश्च शुभवत्कार्यः । अष्टमेशस्य त्रिकोणे एकांशः तद्व्यतिरिक्तापोक्लिमेंऽशत्रयं तद्व्यतिरिक्तपणपरेंऽशद्वयं च देयम् । अनुक्तस्थानेषु शून्यांशो भवति । एवं लब्धानां दशानामंशान् मिलित्वा तद्दशांशं परमायुषस्त्रिभागेन चत्वारिंशता हत्वायुःसंवत्सरा लभ्या इति मन्यामहे । इहायुः अस्मिन्योगे एतल्लोकपरमायुः यद् मययवनादिमतेन अमितं न मातुं शक्यं गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते भवरिपुसहजैश्च शेषैरिति विधिनैव अनुक्रमाद्विना उच्चस्वगृहमित्रशत्रुनीचमूढत्वक्रमं विना स्याद् मेयं भवति । एवं लब्धमायुरुच्चादिगुणकारेण शत्रुनीचमूढादिहरणेन च संस्कृतं चेत्सूक्ष्मतरं भवति । आयुर्योगाद्यैश्च पुनः संस्कृतं चेत्सूक्ष्मतमं भवति । अस्मिन्योगे उक्तविधिना परमायुर्भवति । उक्तसंस्कारैरमितं च भवति ।

लग्नाधिपस्य शुभयोगेन स्वक्षेत्रस्थित्या, अष्टमेशस्य शनेः भवरिपुसहजैरिति केन्द्रव्यतिरिक्तोपचयस्थानस्थित्या च लग्नेशस्याष्टमाधि-

पापेक्षया बलवत्वं दीर्घायुःप्रदम्, अन्यथा विपरीतमित्यपि सूचितम्। एवं चन्द्रादपि वाच्यम्। तथा च फलदीपिकायाम्—

"लग्नाधिपो लग्ननवांशनायको
जन्माधिपो जन्मनवांशनायकः।
स्वस्वाष्टमेशाद्यदि चेद्बलान्वितो
दीर्घायुषः स्युर्विपरीतमन्यथा॥" इति।

"पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा।"

इति वृत्तरत्नाकरवचनात् केचिच्छन्दोविदः पुष्पिताग्राभिधं वृत्तमौपच्छन्दसिकं वदन्ति।

"षड्विषमेऽष्टौ समे कलाः षट् च समे स्युर्नो निरन्तराः।
न समात्रपराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः।
पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्॥"

इति तल्लक्षणस्याप्यत्र विद्यमानत्वात्। अनेन वृत्तमौपच्छन्दसिकमपि स्यात्। एवमत्र षण्मात्राणाम् अष्टमात्राणां सत्वात् लग्नेशस्य षष्ठेशादतिबलत्वे शत्रुरोगनाशः अष्टमेशादतिबलत्वे दीर्घायुष्ट्वं च व्यञ्जितम्। उक्तं च—

"षष्ठेश्वरादतिबलिन्युदयाधिनाथे
सौम्यग्रहांशसहिते शुभदृष्टियुक्ते।
सौख्येश्वरेऽपि सबले यदि केन्द्रकोणे-
ष्वारोग्यभाग्यसहितो दृढगात्रयुक्तः॥" इति।

प्रत्यर्धं चतुर्दशमात्रा द्वादशाक्षराणि च सन्ति। अक्षरत्वं नामायुर्दैर्घ्यम्। अनेन व्ययभावेशे बलवति दीर्घायुर्वाच्यमिति लब्धम्। उक्तं च जातकपारिजाते—

"लग्नादन्त्यगृहाधिपे बलवति स्वर्क्षे चिरायुः सुखी ।"

इति । अत्रायुर्दायाध्याय आदावन्ते च मध्ये च पुष्पिताग्रावृत्तं दृश्यते । अनेन तटस्थलक्षणकथने पुष्पसामान्यस्यायुषि शुभत्वं द्योतितम् । तत्रापि बालारिष्टाध्याये "सुतमदनवमान्त्यलग्नरन्ध्रेषु"इति श्लोकस्यापि पुष्पिताग्रावृत्तत्वान्मरणसूचकश्राद्धपुष्पं विनैव पुष्पसामान्यस्य शुभसूचकत्वम् । भवरिपुसहजोपगैश्च शेषैरमितायुः स्यात्तटस्थलक्षणेनापि, भवः शिवः स रिपुः यस्य तत् वस्त्रत्वं तस्य दिगम्बरत्वात् । शेषैः भुक्तशिष्टैरिति नवत्वव्यावर्तकम् । अनेनायुषि नवेतरवस्त्रसामान्यस्य शुभसूचकत्वं प्रदर्शितम् । तथा चोक्तम्—

"प्रशस्तं पुष्पसामान्यं श्राद्धपुष्पं विनायुषि ।
प्रशस्तं वस्त्रसामान्यं नववस्त्रं विनायुषि ॥" इति ।

एवंविधानि बहून्यपि तटस्थलक्षणानि चोह्यानि । विस्तरभयादत्र न लिख्यन्ते । भवरिपुसहजोपगैश्च भवः संसारः, तस्य रिपुः भवरिपुः मुकुन्दः । संसारं नाशयित्वा मोक्षं ददाति हि । उक्तं च ब्रह्मवैवर्तपुराणे—

"मुकुमध्ययमानं च निर्माणं मोक्षवाचकम् ।
तद्ददाति च यद्देवो मुकुन्दस्तेन कीर्तितः ॥" इति ।

सः तस्य सहजा सहोदरी दुर्गा देवी विष्णुमाया, सा च तौ उपगैः तदुपासकैः । "अत्र भवरिपुसहजे"त्यनेन

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"

"स्वेच्छामयस्येच्छया च श्रीकृष्णस्य सिसृक्षया ।
साऽऽविर्बभूव सहसा मूलप्रकृतिरीश्वरी ॥"

"दैत्यनाशार्थवचनो दकारः परिकीर्तितः ।

उकारो विघ्ननाशार्थे वाचको वेदसम्मतः ॥
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारः परिकीर्तितः ॥
स्मृत्युक्तिस्मरणादस्या एते नश्यन्ति निश्चितम् ।
अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता ॥"
"नारायणार्धाङ्गभूता तेन तुल्या च तेजसा ।
तदा तस्य शरीरस्था तेन नारायणी स्मृता ॥"
"विष्णुभक्तिरहं तेन विष्णुमाया च वैष्णवी ।
नारायणस्य मायाऽहं तेन नारायणी स्मृता ॥"

इत्यादिवचनैः प्रतिपादिते पुरुषप्रकृती गृह्येते । एवं भवरिपुसहजोपगैरित्यस्य भक्तियोगिभिरित्यर्थः। अथवा भवरिपुसहजोपगैः भवरिपुः हरिः तस्य सहजा सहजो गुणो दयेत्यर्थः । तां उपगतैः भगवद्दयां यथावद्विज्ञाय भक्तियोगेऽधिकृता अपि तामेवाश्रिताः । अत एव शेषैः भगवच्छेषभूतैरनन्यभावेन तमेव भगवन्तं शरणं प्राप्तैः प्रपन्नैरिति यावत् । तैः भक्तिनिष्ठैः प्रपन्नैर्वा अनुगृहीतस्येत्यध्याहार्यः । अमितं अमितफलं भवति त्रिवर्गापवर्गश्च सुलभो भवति। इह अस्मिँल्लोके आयुरप्यनुक्रमाद्विना स्यात् । शेषैः रमितमिहायुरनुक्रमाद्विना स्याद् इति वा पदच्छेदः । इह आयुः रमितं भवति सुखितं भवति। तच्चानुक्रमाद्विना स्यात् । कैमुतिकन्यायेन भक्तप्रपन्नानामपि स्वेच्छानुसारेण आयुषो दीर्घत्वं भवति । न तु तज्जातकवशाद्वक्तव्यम् । **यस्मान्मन्त्रेश्वरः—**

"अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
सर्वदा नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥"

इति स्वग्रन्थं समाप्तवान् ।

भवः शिवः भवरिपुः विष्णुः तयोः सहजः ब्रह्मा त्रिमूर्त्यन्तर्गतत्वात्। एवं भवरिपुसहजोपगाः त्रिमूर्त्युपासकाः अन्यादयः। भवरिपुर्विष्णुः तस्य सहजा आदित्या वा भवरिपुसहजाः। तदुपासका वा भवरिपुसहजोपगाः। स्वकर्मनिरतानामास्तिकानां दीर्घायुरिति भावः।

वृत्तमौपच्छन्दसिकम्। उपछन्दः विद्याः औपच्छन्दसिको गुरुः। छन्दः अभिलाषाधिष्ठानं मनः औपच्छन्दसिकः चन्द्रः। द्वावप्यत्र लग्ने स्थितौ। वृत्ते षण्मात्रा अष्टमात्रा द्वादशाक्षराणि च सन्ति। अतश्चन्द्रे षष्ठाष्टमरिःफेषु गुरोर्लग्नस्थितिरपि न पुष्टिकरीति सूचितम्। तथा च कालविधाने—

"लग्नं गतोऽप्यमरराजपुरोहितो वा
षष्ठाष्टमव्ययगतो यदि शीतरश्मिः।
जातो न जीवति विवाहविधौ च वन्ध्या
यात्रा न सिद्धिकृषिवाणिजनिष्फलत्वम्॥"

इति।

वृत्तं पुष्पिताग्रा। पुष्पितत्वमार्तवोपलक्षणम्। अतो गर्भाधानसमये एतद्विधयोगो विशेषशुभकर इति सूचितम्। तथा च संहितायाम्—

"केन्द्रत्रिकोणेषु शुभस्थितेषु
लग्ने शशाङ्के च शुभैः समेते।
पापैस्त्रिलाभारिगतैश्च याया-
त्पुंजन्मयोगेषु च संप्रयोगः॥" इति।

अस्मिन्नध्याये च श्लोकसङ्ख्या त्रयोदश। अनेन पूर्वाध्यायेन सहैकविषयकत्वं सूचितम्। तथापि शुभत्वसम्पादनार्थमध्यायः सप्तमः कृतः। अत एव व्यञ्जितं सङ्ख्यासु सप्त शुभदा इति। अध्यायद्वयेन षड्विंशतिः

श्लोका उक्ताः । ग्रन्थाध्यायसङ्ख्या च षड्विंशतिः । पञ्चमाध्यायेऽपि षड्विंशतिः श्लोकाः । अतः अध्यायत्रयोक्तविधयः सर्वेषु भावेषु योज्या इति व्यञ्जितम् ।

पुष्पिताग्रावृत्तेन राजयोगोचिताधिकारप्रदस्थानस्याऽप्यधिकारसोपानस्थस्थानक्रमः भाग्ययोगरीत्या स्थानक्रमश्चात्र सूचितः । यथावसरं तौ निरूपयिष्यामः ॥ १३ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
आयुर्दायो नाम सप्तमोऽध्यायः ॥

श्रीः

# दशाविपाकाध्यायः ॥ ८ ॥

कलशाम्बुधिकन्यकां श्रियं मथनात्पूर्वमभीप्सुरादरात् ।
कमठाकृतिमद्रिणा समं धृतवान्यः स हरिः श्रियै भवेत् ॥

अथ आयुर्दायनिरूपणानन्तरं दशा निरूप्यते । आयुर्दायनिर्णय-विषये दशाया अपि प्राधान्यमस्तीत्यत्र

"केचिद्योगं प्रशंसन्ति दशां केचिद्वदन्ति हि ।
तद्विना चायुषं ज्ञातुं न शक्यं तु मनीषिभिः ॥"

इत्यादिवचनानि प्रमाणानि । अतो दशाविपाकं विवक्षुरादौ दशानयन-प्रकारमाह—

**उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः**
**प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि ।**
**न हि न फलविपाकः केन्द्रसंस्थाद्यभावे**
**भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि ॥ १ ॥**

इति । उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः उदयः रविश्च शशाङ्कश्च उदयरविशशाङ्काः लग्नसूर्यचन्द्राः, एतेषां मध्ये यः प्राणी बलवान् पूर्णबल-युक्तः, तस्मात् केन्द्रः आदिर्यस्य समुदायस्येति केन्द्रादिः । केन्द्रपण-परापोक्लिमानीत्यर्थः, तत्र संस्थिताः । लग्नसूर्यचन्द्रेषु यः बलवान् तस्मात्

केन्द्रगाः पणपरगाः आपोक्लिमगाश्च यथाक्रमं प्रथमवयसि मध्ये अन्त्ये च फलानि दद्युः। केन्द्रस्था ग्रहाः प्रथमवयसि फलं ददति। पणपरगा मध्यमवयसि फलं ददति। आपोक्लिमगा अन्त्यवयसि फलं ददति। अनेन लग्नसूर्यचन्द्राणां त्रयाणामपि लग्नत्वं सूचितम्।

"भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या" इति वक्ष्यति। लग्नं शरीरम्। चन्द्रः मनः। सूर्यः आत्मा। अत एतेषां बलवशात्प्राधान्यकथनमुचितमेव। केन्द्रादिसंस्थाः प्रथमादिषु जीवितकालेषु फलदातार इत्युक्त्या केन्द्रे ग्रहविरहिते प्रथमवयसि फलाभावे प्राप्ते आह। केन्द्रसंस्थाद्यभावे केन्द्रेषु केन्द्रे पणपरेषु वा शून्येषु फलविपाकः फलपक्तिः। नहीति न। फलविपाकोऽस्त्येवेत्यर्थः। नञ्द्वयेन दशाफलस्यावश्यंभावित्वं सूचयति। "भवति हि फलपक्तिः स्वप्नचिन्ता स्ववीर्यैः" इति च वक्ष्यति। एवमाचार्येण दशाफलस्य दृढकर्मोपार्जितत्वं व्यञ्जितम्। अनेनैव अष्टकवर्गगोचरफलानामदृढकर्मार्जितत्वम्, योगफलानां दृढादृढकर्मोपार्जितत्वं च व्यञ्जितम्। तथा चोक्तं जातकफलचिन्तायाम्—

"दशाप्रभेदेन विचिन्तयेद्दृढं
　　दृढेतरं चाष्टकवर्गगोचरैः।
दृढादृढं योगवशेन चिन्तये-
　　दिति त्रिधा जातकसूक्ष्मसंग्रहः॥" इति।

दृढकर्मैव सत्कर्मवाच्यम्। अदृढकर्म असच्छब्दवाच्यम्। दृढादृढं तु सदसच्छब्दवाच्यम्। अत एव "होरेत्यहोरात्र" इति श्लोकस्थस्य "सदादि" इत्यस्य सत्, असत्, सदसत्, इति व्याख्यातम्। एवं केन्द्रादिषु शून्येषु पूर्वमादौ प्रथमवयस्येव। आपोक्लिमेऽपि आपोक्लिमे स्थितानामपि फलपक्तिः फलविपाको भवति। केन्द्रेषु शून्येषु पणपरस्थानां

फलविपाकः पूर्वम् । पश्चाद् आपोक्लिमगानाम् । केन्द्रपणपरेषु शून्येषु आपोक्लिमगानामेव फलविपाकः । पणपरेषु शून्येषु केन्द्रापोक्लिमगानां यथाक्रमं फलपक्तिः । एवं प्रथमवयसि मध्ये अन्त्ये च इति क्रमनियमार्थमेवोक्तम् ।

उदयरविशशाङ्कप्राणी तत्केन्द्रादिसंस्थाश्चेति द्वन्द्वो वा स्यात् । एवमादावुदयरविशशाङ्कानां मध्ये बलवतो दशा पश्चात् तत्केन्द्रादिसंस्थानाम् । तथा च स्वल्पजातके—

"लग्नार्कशशाङ्कानां यो बलवांस्तद्दशा भवेत्प्रथमा ।
तत्केन्द्रपणपरापोक्लिमगानां बलवशाच्छेषाः ॥" इति ।

वृत्तं मालिनी । अस्य षष्ट्यक्षरैः षष्टिनाडीयुक्तनक्षत्रवशाद्व्यक्तव्योडुदशा सूचिता । अतिशक्करीछन्दः । अनेन पञ्चदशनाडीयुक्तनक्षत्रपादवशाद्व्यक्तव्यकालचक्रदशा सूचिता । उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः, उदयरविः भसूर्यः हस्तनक्षत्रम् । शशाङ्कप्राणि चन्द्रस्य प्रियतमं नक्षत्रं रोहिणी । केन्द्रः ब्रह्मणोऽपि इन्द्रः विष्णुः श्रवणनक्षत्रम् । तदादिसंस्थाः चन्द्रकुजराहुगुरुशनिबुधशिखिसूर्यशुक्राः प्रथमवयसि मध्ये अन्त्ये च जन्मनक्षत्रवशात्फलानि दद्युः । एवमुडुदशा अप्यत्र सूचिताः । उदयरविशशाङ्कप्राणि इति निर्देशात् तेषां मध्ये यो बलवान् तस्योक्तदशाप्रकारेण फलदाः केन्द्रादिसंस्था इत्यंशकपिण्डनैसर्गिकदशाः सूचिताः । अनेनैव सर्वेषु बलहीनेषु जीवशर्मदशा, द्वयोर्बलवतोर्द्विविधदशाश्च चिन्त्या इत्यपि सिद्धम् ।

उदयः लग्नं शरीरमन्नमयकोशः । रविः सूर्यः आत्मा जीवात्मा परमात्मा च विज्ञानमयानन्दमयकोशौ । शशाङ्कः चन्द्रः मनः मनोमयकोशः । प्राणी प्राणमयकोशः । एतैर्युक्तस्य पुरुषस्य केन्द्रादिसंस्थाः केन्द्रः विष्णुः

श्रवणनक्षत्रं तदादिसंस्थाः चन्द्रादिदशानाथाः। प्रथमवयसि मध्येऽन्त्ये प्र इत्यादिनवाक्षरैः सूचितेषु नवदशास्थानेषु च फलानि दद्युः। अनेनोडुदशानां सर्वेषामवश्यंभावित्वं नेति सूचितम्।

सूर्यचन्द्रलग्नेषु मुख्यतमं लग्नं, ततश्चन्द्रः, ततो रविः, इति शास्त्रीयं क्रममनुसृत्यान्यत्र 'भेन्द्वर्कास्पद' इत्युक्तमाचार्येण। कुतोऽत्र 'उदयहिमगुसूर्यप्राणिकेन्द्रादिसंस्थाः' इति वक्तव्ये 'उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः' इत्युक्तमिति चेदुच्यते। अत्र उदयरविशब्देन येन सौरेण संवत्सरेण सूर्यः प्रत्यब्दं कुलस्थनक्षत्रेण उदेति स सौराब्दो विवक्षितः। स च शशाङ्कश्च उदयरविशशाङ्कौ। ताभ्यां प्राणिनः उडुदशानाथाः। उडुदशाब्दाः सौरा इति भावः। तथा च मन्त्रेश्वरः—

"रविस्फुटस्तज्जनने यदासी-
त्तथाविधश्चेत्प्रतिवर्षमर्कः।
आवृत्तयः सन्ति दशाब्दकानां
भागक्रमात्तद्दिवसाः प्रकल्प्याः॥" इति।

कश्च कश्च कं च कानि। कः ब्रह्मा, कः सूर्यः, कं परं ब्रह्म विष्णुः। कानि इन्द्राः देवताः येषां तानि रोहिणीहस्तश्रवणनक्षत्राणि। एते आदयः येषां तानि पर्यायत्रयस्थनक्षत्राणि। तत्संस्थाः चन्द्रादयः। सौराब्दयुताश्चन्द्रादयो नवोडुदशानाथा इत्यर्थः। एते प्रथमवयसि मध्ये अन्त्ये इति नवाक्षरैः सूचितासु नवसु दशासु फलानि दद्युः। चकारेण नवभुक्त्यादयोऽपि व्यञ्जिताः। प्रथमवयसि मध्येऽन्त्ये इत्येकैका दशा त्रिधा विभज्या, नवभिरक्षरैर्नवसमभागा च कर्तव्या फलकथनार्थमिति च व्यञ्जितम्।

केन्द्रसंस्थाद्यभावे रोहिणीहस्तश्रवणेतरनक्षत्रजन्मतया चन्द्रादित्वाभावे न फलविपाक इति नहि। किन्तु फलपक्तिर्भवति हि। मालिनीवृत्त-

सूचितमालाकारतया दशापङ्क्तेस्तत्तद्दशादित्वेन भवत्येव। यथा पूर्वम् आपोक्लिमेऽपि। आपोक्लिम इत्यब्दैवत्यपूर्वाषाढानक्षत्रस्थस्य अब्रूपस्य शुक्रस्योपलक्षणम्। पूर्वं शुक्रदशायामपि फलपक्तिर्भवति। आपोक्लिम इति वैरूप्यकरणेन गर्भशेषवशाद् यस्य कस्याऽपि दशायां यत्र कुत्राऽपि दशारम्भे जननादौ भवतीति सूचितम्।

अथवा केन्द्रसंस्थाद्यभावे केन्द्रसंस्थादीनां चन्द्राद्युडुदशानाथानामभावे उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्था उदयादिप्राणि कण्टकाद्याश्रिताः प्रथमवयसि मध्येऽन्त्ये च नहि फलं दद्युः फलविपाको न। किन्तु केन्द्रसंस्थाद्यभावे इत्यावृत्त्या केन्द्रसंस्थाद्यानां चन्द्रादीनां भावे सत्तायां भवति हि परिपक्तिः पूर्वमापोक्लिमेऽपि। अनेनोडुदशाया इतरानपेक्षं फलदत्त्वं, इतरदशानामुडुदशां विना फलदत्त्वाभावश्च व्यञ्जितः।

एवमतिप्रधानभूतश्चेदुडुदशाक्रमः कुतः स्पष्टतरं नोपदिष्टः? श्रीवराहमिहिराचार्यो न केवलं शास्त्रज्ञः किन्तु महाकविरपि। बृहज्जातकापरनामकमेतद्धोराशास्त्रं च न केवलं शास्त्रं किन्तूत्कृष्टकाव्यमपि। व्यङ्ग्यार्थप्राधान्यं ह्युत्कृष्टकाव्यलक्षणम्। अतोऽस्मिन् ग्रन्थेऽतिप्रधानविषयो व्यङ्ग्यार्थरूपा एव दृश्यन्ते। ते तज्ज्ञानार्हैः शिष्यवर्यैराचार्यकृपयैव ज्ञायन्ते।

पिण्डादिदशाः निश्चितायुर्वशाद्भवन्ति। अतस्ते प्रथमवयसि मध्ये अन्त्ये च भवन्ति। अत्र तु नवदशास्थानेषु नवदशा भवन्ति। न तु प्रथमवयसि, मध्ये अन्त्ये च। सर्वकोशव्यापकतयोडुदशायाः प्राधान्यं सूचितम्। प्रथमवयसि मध्येऽन्त्ये इत्यनेन आयुषोऽल्पमध्यपूर्णत्वमपि व्यञ्जितम्। नवाक्षरैः सूचितासु नवसु दशास्वाद्यास्तिस्रो दशाः अल्पायुर्भागान्तर्गताः, परतः स्थितास्तिस्रो दशाः मध्यमायुर्भागान्तर्गताः, अन्त्यास्तिस्रो दशाः पूर्णायुर्भागान्तर्गताः। अत्रैकैकस्यापि भागस्याल्पमध्यपूर्णत्वं वक्तुं शक्यम्। एवमल्पाल्पायुः, मध्यमाल्पायुः, दीर्घाल्पायुः,

अल्पमध्यमायुः, मध्यममध्यमायुः, दीर्घमध्यमायुः, अल्पदीर्घायुः, मध्यमदीर्घायुः, दीर्घदीर्घायुश्चेति नवधा आयुर्भवति । तथा चोक्तम्—

"त्रिविधाश्चायुषां योगाः स्वल्पायुर्मध्यमोत्तमाः ।
अल्पायुर्योगजातस्य विपद्दाये मृतिं वदेत् ॥
जातस्य मध्यमे योगे प्रत्यरे नु मृतिर्भवेत् ।
दीर्घायुर्योगजातानां वधभे तु मृतिर्भवेत् ॥
त्रिषु योगेषु सर्वेषु प्रत्येकं त्रिविधं भवेत् ।
चरस्थिरेति वाक्येन दीर्घमध्याल्पकायुषः ॥
तयोरन्यतमं ज्ञात्वा चायुर्ज्ञानं प्रचक्षते ।
अल्पायुरल्पमध्ये तु पूर्णायुस्त्रिविधं स्मृतम् ॥
मध्यमादल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ।
दीर्घायुषोऽल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ॥
एवं नवविधः प्रोक्तश्चायुषां तु विनिर्णयः ॥" इति ।

"उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः
प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि ।"

इति त्रिंशदक्षरैः त्रिंशद्घटिकायुक्तदिनं स्मारितम् । तत्र प्रथमवयसि सूर्योदयकाले, मध्ये मध्याह्ने, अन्त्ये सूर्यास्तमये च उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः लग्नात् चन्द्रात् सूर्याद्वा प्राणिनः कीटनराम्बुचरपशवः प्राणिभूतकेन्द्रादिसंस्थाः केन्द्रपणफरापोक्लिमगाः यत्र कुत्रापि स्थिता इत्यर्थः । सर्वे ग्रहाः फलानि शुभफलानि दद्युः । अत्र सूर्यस्यार्धोदयोऽर्धास्तमयश्च विवक्षितौ । एवं गोधूलिलग्नसंज्ञकसूर्योदयास्तमयवेलयोः अभिजिदिति प्रसिद्धस्य मध्याह्नसमयस्य च प्राशस्त्यं दर्शितम् । उक्तं च कालविधाने—

"अवगुणशतदोषं लक्षकोटिप्रदोषं
बुधगुरुभृगुदोषं हन्ति मध्याह्नलग्नम् ।
मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः
अभिजित्सर्वदोषेषु मुख्यं दोषविनाशकृत् ॥
न चारवारो न च लग्नयोगो न विष्टिरिक्ते न तिथिग्रहैश्च ।
रविप्रवेशास्तमये च काले गोधूलिलग्ने बहुकार्यसिद्धिः ॥"

उदयरविशशाङ्कप्राणि उदयश्च रविश्च शशाङ्कश्च प्राणिनश्च उदयरविशशाङ्कप्राणिनः । रविः आत्मा, चन्द्रः मनः, प्राणिनस्तु पञ्चप्राणात्मकपञ्चभूतप्रकृतयः ताराग्रहाः । एतेभ्यः केन्द्रादिसंस्थाः जननकाले केन्द्रत्रिकोणतृतीयैकादशादिद्वादशराशिषु स्थिताः प्रथमवयसि प्रथमसंवत्सरे फलानि दद्युः । अतिशक्वरीछन्दः । श्लोकस्य षष्टयक्षरैः षष्टिनाडीयुक्तदिवसः प्रभवादिवर्षाणां षष्टितया संवत्सरश्च व्यञ्जितौ । अतो जातस्य प्रथमदिने जननकालग्रहस्थितिवशात् प्रथमवयसि फलं चेत्, द्वितीयदिने तत्काललग्नस्य ग्रहाणां च स्थितिवशाद् द्वितीयवयसि फलमित्यपि सिद्धम् । एवं तृतीयदिवसेन तृतीयसंवत्सरफलं वाच्यमित्यादि । "समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा" इति वचनमनुसृत्यात्र षष्टयक्षराणां निवेशः । एवं विंशत्युत्तरशतवर्षात्मकपरमायुःकालपर्यन्तं फलं वक्तुं शक्यमिति सूचितम् । एष क्रम एव पाश्चात्यदैवज्ञैरनुसृतः ॥ १ ॥

केन्द्रेषु ग्रहाभावे फलपङ्क्तिमुक्त्वाऽधुना केन्द्रादिषु ग्रहबहुत्वे दशाक्रमविधिमाह—

**आयुः कृतं येन हि यत्तदेव**
**कल्प्या दशा सा प्रबलस्य पूर्वा ।**

**साम्ये बहूनां बहुवर्षदस्य**
**तेषां च साम्ये प्रथमोदितस्य ॥ २ ॥**

इति। दशासंवत्सरसङ्ख्याविषये येन येन ग्रहेण यदायुः आयुर्दायगणन-विधिना पिण्डायुरंशकायुर्जीवशर्मोक्तायुर्वा कृतं जनितं तदेव तत्सङ्ख्या एव दशा कल्प्या दशायामपि योज्या। हि इति तत्र संशयाभावस्य द्योतकः। आयुर्दायगणनेन लब्धसंवत्सरा एव दशासु योज्या इत्यत्र कः संशयः। प्रबलस्य ग्रहाणां मध्ये यो बलवान् तस्य बलवशात्, येन पिण्डांश-कादिषु येन विधिना आयुः कृतं, सा दशा कल्प्या। वृत्तं इन्द्रवज्रा। अनेनेन्द्रदेवताकगुरुबलवशात् कर्तव्योडुदशा सर्वेषामपि कार्येति गम्यते। "लग्नार्कगुर्विन्दुभिः" इति लग्नगुरुसूर्यचन्द्राणां देहिनः स्त्रीपुंविभागे शुभाशुभफलनिर्णये वा प्राधान्येन तेषां बलवशात् कर्तव्यदशानामपि प्राधान्यम्। तत्र गुरोर्जीवरूपत्वात् "कललघनाङ्कुरास्थिचर्माङ्गजचेतनदाः" इति स्त्रीपुंविभागस्यापि कारकतया तस्य दशाया इतरापेक्षयाऽपि प्राबल्यम्। किन्तु जीव इति निर्देशात् तस्य बलवशादाप्तोडुदशाक्रमश्च सूक्ष्मग्राहि-भिरेवाचार्यशास्त्रे तत्र तत्र द्रष्टुं शक्यम्। अथवा तेषां च साम्ये प्रथमोदितस्य दशानिर्णये संशयो भवेद्यदि प्रथमोदितस्य प्रथमं 'मूर्तित्वे' इति श्लोके उदितस्य उक्तस्य उडुदशासमुदायस्य वक्तव्यम्। इत्थंभूतप्राधान्यमुडुदशाया श्रीवराहमिहिरेण विवक्षितमिति ज्ञात्वैवोक्तं मन्त्रेश्वरेण—

"सारावलीमुडुदशां च वराहहोरा-
मालोक्य जातकफलं प्रवदेन्नराणाम् ॥" इति।

उडुदशादिषु दशाक्रमस्तु सिद्ध एव। इतरेषु क्रमावबोधनार्थमाह। सा दशा प्रबलस्य केन्द्रादिषु यो प्रबलः अतिबलवान् तस्य पूर्वा कल्प्या। प्रबलस्येति निर्देशात् प्रकृष्टबलस्य पूर्वा। ततस्तस्माद्धीनबलस्येत्यादि

सिद्ध्यति । केन्द्रस्थितानां दशा आदौ । तत्र प्रबलस्य प्रथमा दशा इत्यादि । बहूनां बहुग्रहाणां साम्ये बलसाम्ये सति बहुवर्षदस्य तेषां मध्ये यो बह्वायुर्ददाति तस्य दशा प्रथमा भवति । तेषां च साम्ये वत्सरेष्वपि तुल्येषु प्रथमोदितस्य यो मौढ्यानन्तरं प्रथममुदितस्तस्य दशा पूर्वा भवति ।

"आयुः कृतं येन हि यत्तदेव
कल्प्या दशा सा प्रबलस्य पूर्वा ।"

इत्यत्र सूर्येन्दुलग्नानां मध्ये येन आयुः कृतं तस्य प्रबलस्य उदयरविशशाङ्क-प्राणिनः दशा पूर्वा कल्प्या । ततः केन्द्रस्थितानां मध्ये बहुवर्षदं प्रथमोदितं च परिभूय प्रबलः स्वदशां ददाति । बलसाम्य एव बहुवर्षदस्य दशा पूर्वा कल्प्या । तद्वद् वत्सरसाम्य एव प्रथमोदितस्य दशायाः पूर्वप्रसक्तिः । अनेन क्रमेणैव पणपरापोक्लिमस्थानामपि वाच्यम् । तथा च सारावल्याम्—

"लग्नार्कशीतरश्मीनां यो बली तस्य चाग्रतः ।
तत्केन्द्रादिस्थितानां च दशाः स्युः सत्यभाषिते ॥
"होरा दिनेशशशिनां प्रबलो भवेद्य-
स्तत्कण्टकादिषु गताः कथिता दशेशाः ।
पूर्वा दशेति बलिनः सदृशेऽब्दवृद्धेः
साम्ये भवेच्च शरदां प्रथमोदितस्य ॥" इति ॥

पूर्वश्लोके "उदयरविशशाङ्कप्राणि" इति तेषां प्राणित्व एव पिण्डादिदशा कल्प्येति सूचितम् । अत्र वृत्तमिन्द्रवज्रा । अनेन जीवशर्मा स्मारितः । लग्नार्कचन्द्राणां बलाभावे जीवशर्मोक्तदशा कल्प्येति सूचितम् । तथा च सारावल्याम्—

"लग्नार्कशीतरश्मीनां यश्च पूर्णबलो भवेत् ।
तदा सत्यमतं श्रेष्ठमन्यथा त्वपरा दशा ॥" इति ।

अत्र अपरा दशा इति जीवशर्मोक्तदशा उच्यते। दैवज्ञेन फल-निर्देशकाले वक्तृश्रोतृतटस्थलक्षणं निमित्तीकृत्य वक्तव्यफलविशेषोऽप्यत्र सूचितः। आयुःकृतं येन हि यत्तदेव" इत्यत्र आयुरिति सर्वेषां भावा-नामुपलक्षणम्।

"आयुर्ज्ञानाभावे सर्वं विफलं प्रकीर्तितं यस्मात्।"

"पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्"

इत्यादिवचनैः सर्वभावापेक्षया आयुषः प्राधान्येन आयुरित्युक्तम्। अथवा त्रिष्टुप्छन्दस्त्वादितरैकादशभावा अप्यायुर्वच्चिन्त्या इति वक्तव्यम्। अथवा आयुः युः इति 'यृ'शब्दस्य पञ्चम्येकवचनम्। 'यृ' इत्यक्षर-संख्यया एकम्। अतः 'यृ' इत्यनेन लग्नं सूचितम्। "आङ्मर्यादाभि-विध्योः" इति पाणिनीयसूत्रेण आयुरित्यस्य आलग्नात् सर्वे द्वादश भावा इत्यर्थः। तेषु येन येन वक्तृश्रोतृतटस्थगतावस्थादिविशेषनिमित्तेन यत्कृतं यत्फलमूह्यं तत्तदेव स्यात्। कतममुद्दिश्येति चेदाह—सा दशा निमित्तादिभिः सूचिता दशा प्रबलस्य तत्रस्थानां मध्ये यः प्रबलः प्रधानो भवति तस्य कल्प्या वक्तव्या। साम्ये बहूनां प्रबलबाहुल्ये बहुवर्षदस्य तेषां मध्ये यो वृद्धतमस्तस्य फलं वक्तव्यम्। तेषां च साम्ये समानवयसां मध्ये प्रथमोदितस्य यस्तत्र प्रथमं प्राप्तस्तस्य वक्तव्यम्। "विजानन्नपि मेधावी जडवल्लोकमाचरेत्" इति वचनात् कथं दैवज्ञोऽपृच्छतः फलं वक्तुमर्हतीति चेत्फलजिज्ञासोर्व्यतिरिक्तविषयमेतत्। फलजिज्ञासोस्तु फलं वक्तव्यमेव। तथा चोक्तमाचार्येण बृहद्यात्रायाम्—

"अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित्।
होराकेन्द्रत्रिकोणेभ्यस्तत्र वक्तुः शुभाशुभम्॥" इति।

प्रबलस्य फलकथनावश्यकता स्पष्टमेव दर्शितं श्रीमच्छङ्करभगवत्पादैः

शङ्करविजयाख्यनाडीग्रन्थे । तत्र जातकिनः फलकथनावसरे तस्य सोदरः प्रबलश्चेत्तस्य प्रभाव एव विशेषतः कथितो दृश्यते ॥ २ ॥

एवं दशाक्रममुक्त्वा अन्तर्दशानयनमाह—

**एकर्क्षगोऽर्धमपहृत्य ददाति तु स्वं**
**त्र्यंशं त्रिकोणगृहगः स्मरगः स्वरांशम् ।**
**पादं फलस्य चतुरश्रगतः सहोरा-**
**स्त्वेवं परस्परगताः परिपाचयन्ति ॥ ३ ॥**

इति । एकर्क्षगः दशानाथेन सह एकराशिस्थितः ग्रहः, अर्धं अर्धभागं अपहृत्य, फलस्य स्वं स्वस्य स्वं भागं स्वं फलं ददाति । त्रिकोणगृहगः दशानाथात्पञ्चमनवमस्थितो ग्रहः, त्र्यंशं त्रिभागमपहृत्य, स्वं फलं ददाति । स्मरगः दशानाथात्सप्तमस्थितो ग्रहः, स्वरांशं सप्तमांशमपहृत्य स्वं ददाति । चतुरश्रगतः दशानाथाच्चतुर्थाष्टमस्थितो ग्रहः, पादं चतुर्थांशमपहृत्य स्वं ददाति । सहोराः लग्नसहिताः, सर्वे ग्रहा एवं परस्परगताः एकर्क्षादिपरस्पर-संबन्धसंयुताः, परिपाचयन्ति फलं कुर्वन्ति । एवं सप्तग्रहाः लग्नं च अष्टौ दशापहर्तारः । एकैकस्यां दशायां दशानाथादेकर्क्षत्रिकोणसप्तमचतुरश्रगता एव दशापहर्तारः । अर्धादीनामेवापहर्तव्यत्वाद्दशानाथोऽप्यपहारकर्ता भवति । तस्यापहारः प्रथमं भवति चेत्यत्र न कोऽपि संशयः । तथा च सारावल्याम्—

"अर्धमेकस्थितो भागं त्रिभागं सुतधर्मयोः ।
सप्तमे सप्तमं भागं चतुर्थं चतुरश्रयोः ॥
मूलं दशाधिनाथस्य कृत्वांशं स्वगुणैर्ग्रहः ।
करोत्यन्तर्दशां सत्यां बली हरति भागभाक्" ॥ इति ।

अत्र एकर्क्षगः त्रिकोणगृहगः स्मरगः चतुरश्रगतः इत्येकवचनप्रयोग-सामर्थ्यादेकराशिस्थितेषु बलवानेव भागं हरति नेतरे। तथा च सत्यः—

"एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण।
एकः स एव हर्ता नान्ये तत्र स्थिता भागान्॥" इति।

आचार्यस्तु—"एकोंऽशं हरति बलीत्यथाह सत्यः" इत्यनेनैव सिद्धत्वान्नात्रोक्तवान्। एवं दशानाथस्यान्तर्दशा प्रथमा। ततस्तत्सहित-ग्रहेषु वीर्याधिकस्य। ततस्त्रिकोणगानाम्। तत्रापि बलवशात्क्रमो वाच्यः। ततः स्मरगस्य। ततश्चतुरश्रगतानां बलक्रममनुसृत्य। केचिदत्र केन्द्रादिविधि-मिच्छन्ति। उक्तं च सारावल्याम्—

"केन्द्रादिविधिना चान्ये केचित्पाकक्रमेण तु।
सत्योक्तं तूच्यते कैश्चिद्ददाति बलवान् ग्रहः।
नित्यं पाठक्रमादत्र शेषास्तु परिपाकदाः॥" इति।

उक्तस्थानेषु ग्रहाभावे तस्य दशायामन्तर्दशाभावश्च वाच्यः। वृत्तं वसन्ततिलकम्। मधुमाधवी वा "रामेण सेयमुदिता मधुमाधवीति" इति वचनात्। अनेन यथा मधुश्च माधवश्च मासौ वसन्तऋतौ मिलितौ भवतः तथा एकर्क्षगतः एकराशिस्थितः फलस्यार्धं दशानाथस्य फलस्यार्धमपहृत्य स्वं स्वफलं ददाति इति व्याख्यया एकराशिस्थितयोः फलं तत्तद्दशायां मिश्रितमेव दृश्यते। तथा च जातकपारिजाते—

"इष्टोत्कटत्वे हि शुभानि पुंसां
फलान्यनिष्टान्यशुभोत्कटत्वे।
साम्ये तु मिश्राणि फलानि नूनं
सर्वत्र चैवं परिकल्पनीयम्॥" इति॥ ३॥

अपहारकर्तॄणां पूर्णार्धत्रिभागसप्तमांशपादात्मकांशबन्धमुक्त्वाऽधुनाऽन्तर्दशाप्रमाणगणनमाह—

**स्थानान्यथैतानि सवर्णयित्वा**
**सर्वाण्यधश्छेदविवर्जितानि ।**
**दशाब्दपिण्डे गुणना यथांशं**
**छेदस्तदैक्येन दशाप्रभेदः ॥ ४ ॥**

इति । एतानि सर्वाणि स्थानानि भागानि सवर्णयित्वा समच्छेदानि कृत्वा ततस्तानि अधश्छेदविवर्जितानि कर्तव्यानीति शेषः । दशाब्दपिण्डे **दशानाथस्य** अब्दपिण्डे यथांशं सवर्णीकरणाधश्छेदविवर्जनशेषं लब्धभागानुसारेण गुणना कार्या । लब्धभागेन दशाब्दपिण्डं गुणितव्यमिति भावः । तदैक्येन अधश्छेदेन छेदः छिन्नः हृतः दशाप्रभेदः अन्तर्दशा भवति । एवं दशानाथस्य पूर्णत्वाद् रूपोपरि रूपम् ($\frac{1}{1}$) सहस्थितस्य द्वयोरुपरि एकम् ($\frac{1}{2}$) त्रिकोणगस्य त्रयाणामुपरि एकम् । ($\frac{1}{3}$) स्मरगस्य सप्तानामुपरि एकम् ($\frac{1}{7}$) चतुरश्रगस्य चतुर्णामुपरि एकम् ($\frac{1}{4}$) एवं सर्वेष्वेतेषु स्थानेषु ग्रहेषु सत्सु समच्छेदः त्रिचतुःसप्तानां गुणनेन (३ × ४ × ७) चत्वार्यशीतिर्भवति (८४) अतः दशानाथस्य चत्वार्यशीतिर्भागाः (८४) एकर्क्षगस्य बलिनः द्विचत्वारिंशत् (४२) यद्येक एव त्रिकोणगस्तस्य अष्टाविंशतिः (२८) सप्तमगस्य द्वादश (१२) यद्येक एव चतुरश्रगतस्तस्य एकविंशतिः (२१) ऐक्येन सप्ताशीतिसहितं शतं (१८७) भवति । अतो दशानाथस्य चत्वार्यशीतिगुणितदशाब्दानां सप्ताशीत्युत्तरशतभागप्रमाणान्तर्दशा भवति । ($\frac{८४}{१८७}$ × दशाब्दाः) एवमेवेतरेषां ग्रहाणामप्यन्तर्दशाप्रमाणं ज्ञातव्यम् । अत्र एकर्क्षगस्यैव ग्रहस्य सत्वे समच्छेदः द्वौ भवति । त्रिकोणस्यैव सत्वे त्रीणि ।

सप्तमस्थैव यदि समच्छेदः सप्त । चतुरश्रस्थस्यैव ग्रहवत्वे समच्छेदः चत्वारि । एकर्क्षगत्रिकोणगयोरेव सत्वे षड् इत्यादि । यदि सर्वेषु स्थानेषु ग्रहाः स्थितास्तदा समच्छेदः चतुरशीतिः । इममेवात्र प्रभेदशब्देन सूचितवान् । प्रकर्षेण भेदः प्रभेदः, भेद इत्यक्षरसङ्ख्यया चत्वार्यशीतिः, प्रकर्षेण छेदः चत्वार्यशीतिरिति सारः । अधश्छेदविवर्जितानीत्यत्रापि सूचितम् । वर्ज इत्यक्षरसङ्ख्यया चत्वार्यशीतिः । वर्जेन कृताः वर्जिताः विगतवर्जिताः विवर्जिताः ।

"स्थानान्यथैतानि सवर्णयित्वा" इत्यनेन दूतलक्षणस्यापि ध्वनिः । त्रिष्टुप्छन्दः । एकादशाक्षरयुक्तपादवत्वाद्रुद्रस्मारकम् । तस्य देवीदूतत्वं च सुप्रसिद्धम् । तथा च मार्कण्डेयपुराणे देवीमाहात्म्ये—

"यतो नियुक्तो दूतत्वे तया देव्या शिवः स्वयम् ।
शिवदूतीति लोकेऽस्मिन् ततः सा ख्यातिमागता ॥" इति ।

अतोऽत्र दूतलक्षणमपि द्रष्टव्यम् । सवर्णयित्वा इति दौत्ये शकुने च सर्वेषां सवर्णाः शुभसूचकाः असवर्णाः अशुभसूचका इति व्यञ्जितम् । एवं ब्राह्मणस्य ब्राह्मणः, क्षत्रियस्य क्षत्रियः, वैश्यस्यः वैश्यः, शूद्रस्य शूद्रः, चण्डालस्य चण्डालः, पाषण्डिनः पाषण्डी, ब्रह्मचारिणः ब्रह्मचारी, गृहस्थस्य गृहस्थः, वानप्रस्थस्य वानप्रस्थः, यतेर्यतिः, म्लेच्छस्य म्लेच्छश्च शुभसूचकः । तथा चोक्तम्—

"पाषण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥" इति ।

"सवर्णयित्वा" इत्यनेन वर्णशब्दसूचिताक्षरबद्धवाक्यान्यपि निमित्तीकृत्य शुभाशुभफलं वाच्यमिति सूचितम् । "भक्ष्याहृताकाररुतैश्च चिन्त्यम्" इति स्पष्टमेव वक्ष्यति । अत्र सवर्णकरणं तु शुभसूचकवाक्यैः शुभफलकथनम् अशुभसूचकवाक्यैरशुभफलकथनम् । यथा वक्तृगतैः

"जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।"

इत्यादिवाक्यैरशुभफलं वाच्यम् ।

"रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।"

इत्यादिवक्तृगतवाक्यैः शुभफलं वक्तव्यम् । स्थानान्यथैतानि सवर्णयित्वा इत्युक्त्या वक्तृप्रष्टृगतावस्थाविशेषैरपि फलं वाच्यम् । अशस्तचिन्तावचनैरशुभफलं शस्तचिन्तावचनैः शुभफलं च वक्तव्यम् । स्थानान्यथैतानीत्यनेन वक्तृश्रोतृभिन्नतटस्थानामपि लक्षणैः शुभाशुभफलं निरूपणीयम् । उक्तं च यात्राविधौ कालविधाने—

"कन्या गौः पूर्णकुम्भं दधिफलकुसुमं शङ्खनादो मृदङ्गो
गोयानं विप्रयुग्मं हयगजवृषभाः क्षीरभाण्डध्वजानि ।
उत्कृष्टं पेयमृत्स्नाजलचरयुगलं बद्धमन्नं शवं वा
वेश्यास्त्री मांसखण्डः प्रियहितवचनं मङ्गलं प्रस्थितानाम् ॥
तक्रं तैलाभिषिक्तं भुजगमभिमुखं मुक्तकेशं च नग्नं
रिक्तस्त्रीरिक्तकुम्भं रुधिरमभिमुखं काष्ठभारं वराहम् ।
प्रव्राजं छिन्ननासं जटिलतिलनुदं रक्तपुष्पार्द्रवस्त्रं
मत्तं च प्रस्थितानां यदि मरणभयं कार्यहनिश्च सिद्ध्येत् ॥"

त्रिष्टुप्छन्दः । अनेन एकादशाङ्गानि पुंलिङ्गानि एकादश स्त्रीलिङ्गानि इत्यादि पुत्रचिन्ताविषयाङ्गस्पर्शनफलं च "स्थानान्यथैतानि सवर्णयित्वा" इत्यनेन व्यञ्जितम् । तथा च कृष्णीये—

"केशनखद्विजकक्षस्तनभुजनाभ्यूरुमूर्धभगचरणाः ।
ज्ञेयाः पुंल्लिङ्गाख्याः क्षिप्रं पुत्रार्थलाभकराः ॥
ग्रीवाभ्रूनासाङ्गुलिजङ्घाहनुनाभिकर्णपाण्यश्च ।
पार्ष्णिः क्रोडा नार्योऽर्थदुहितृदा दीर्घकालेन ॥

मुखपक्ष्ममेढ्रजानूदरपार्श्वशिरोललाटदेशास्तु ।
एते नपुंसकाख्याः पुत्रार्थे निष्फलाः प्रोक्ताः ॥
यदि परिमृशन् स्ववक्षः पृच्छेत्तस्याग्रतो भवति लाभः ।
अन्यत्र निम्नदेशस्पर्शे हानिं वदेत्तस्य ॥" इति ॥ ४ ॥

एवं दशान्तर्दशाकालानयनमुक्त्वा तत्र निर्देष्टव्यफलानां शुभाशुभत्वावबोधनाय संपूर्णादिसंज्ञा आह—

**सम्यग्बलिनः स्वतुङ्गभागे**
**संपूर्णा बलवर्जितस्य रिक्ता ।**
**नीचांशगतस्य शत्रुभागे**
**ज्ञेयानिष्टफला दशा प्रसूतौ ॥ ५ ॥**

इति । प्रसूतौ जननकाले । जननकालग्रहस्थितिवशाद्वक्तव्यमिति द्योतयितुं प्रसूतिग्रहणम् । दशाकालग्रहस्थितिवशाद्विशेषं वक्ष्यति । सम्यग्बलिनः स्थानदिक्कालादिषड्बलोपेतस्य दशा संपूर्णा संपूर्णेत्यन्वर्थसंज्ञका ज्ञेया । स्वतुङ्गभागे परमोच्चभागे स्थितस्य दशा च संपूर्णसंज्ञका भवति । स्वतुङ्गभागे इति पृथग्ग्रहणं स्वतुङ्गभागस्थस्य ग्रहस्येतरबलानपेक्षत्वव्यञ्जकम् । सम्यग्बलिनः दशा संपूर्णा इत्युक्त्या बलिनो दशा पूर्णा भवतीति सिद्धम् । तथैव स्वोच्चस्थस्य दशाऽपि पूर्णा भवति । आह च भगवान् गार्गिः—

"सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च ।
संपूर्णाख्या दशा ज्ञेया धनारोग्यविवर्धिनी ॥
स्वोच्चराशिगतस्याथ किञ्चिद्बलयुतस्य च ।
पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा ॥" इति ।

स्वतुङ्गभागे स्वभागे स्वक्षेत्रे स्वनवांशादौ स्वशब्देन बन्धुर्वा गृह्यते । एवं स्वभागे मित्रक्षेत्रे मित्रांशादौ तुङ्गभागे उच्चक्षेत्रे उच्चनवांशादौ च

स्थितस्य सम्यग्बलिनः शुभदृष्ट्यादिबलयुतश्चेत्तस्य दशा संपूर्णा भवति। तथा च सारावल्याम्—

“ स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
संपूर्णवीर्यरुचिरा बलिनः स्वकाले।
मित्रोच्चभागसहिता शुभदृष्टियुक्ताः
श्रेष्ठां दशां विदधति स्ववयस्सु खेटाः॥” इति।

सम्यग्बलिनः स्वतुङ्गभ अगे स्वभ स्वराशौ तुङ्गभ तुङ्गराशावपि अगे अग इत्यक्षरसङ्ख्यया त्रिंशत् त्रिंशद्भागमनुक्रान्ते इत्यर्थः। असंपूर्णा इति पदच्छेदेन दशाऽनिष्टफलदा भवतीति लब्धम्। उक्तं च जातकपारिजाते—

“ राशिसन्धिगता ये तु रोगशोकादिपीडनम्।
त्रिंशद्भागमनुक्रान्तदशा मृत्युफलप्रदा॥” इति।

बलवर्जितस्य बलहीनस्य दशा रिक्ता भवति। नीचराशिगतस्य दशा च रिक्ता ज्ञेया। ‘सम्यग्बली’ इत्यत्रस्थचतुरक्षरैः ‘बलवर्जित’ इत्यत्रस्थपञ्चाक्षरैश्च दीप्ताद्याश्चतस्रः शुभफलदा अवस्थाः पञ्चाऽनिष्टफलदा अवस्थाश्च सूचिताः। उक्तं च भगवता पराशरेण—

“ दीप्तः स्वस्थः प्रमुदितः शान्तो दीनोऽतिदुःखितः।
विकलश्च खलः कोपी नवधा खेचरोऽभवत्॥
उच्चस्थः खचरो दीप्तः स्वस्थः स्वोच्चेऽतिमित्रभे।
मुदितो मित्रभे शान्तः समभे दीन उच्यते॥
शत्रुभे दुःखितोऽतीव विकलः पापसंयुतः।
खलः खलगृहे ज्ञेयः कोपी स्यादर्कसंयुतः॥” इति।

वृत्तमौपच्छन्दसिकम्। औपच्छन्दसिकमिति चित्तानुवर्तित्वम्। अनेन स्वतुङ्गशब्देन सर्वथा तत्तुल्यतया “स्वतुङ्गवक्रोपगतैः” इत्यत्र

दृष्टसाहचर्याच्च वक्रगतिः स्मारिता । अतो वक्रगतस्यापि दशा संपूर्णा इत्येव वाच्या । उक्तं च—

"वक्रचेष्टान्विते सौम्ये भाग्यदारसुतार्थभाक् ।
तदा पुराणदानादिसमुद्रस्नानमाचरेत् ॥"
"वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान् ।
युद्धे जयं भूपतिमित्रतां च सुगन्धजाताम्बरवाग्विलासम् ॥"
"वक्रं गतस्यापि भृगोः सुतस्य दशाविपाके त्वतिराजपूज्यम् ।
मृदङ्गभेरीरवयुक्तयानं विचित्रवस्त्राभरणानि राज्यम् ॥" इति ।

शनिकुजयोस्तु पापस्य वक्रगत्या दोषफलमेवेति पक्षमवलम्ब्य,

"वक्रान्वितस्य भौमस्य दशाकाले महद्भयम् ।
चोराग्निसर्पपीडां च वनवासं पदच्युतिम् ॥"
"वक्रचारयुतो मन्दः करोति विफलां क्रियाम् ।
उद्योगभङ्गदुःखं च सोदराणां च नाशनम् ॥"

इत्युक्तम् । केचिदुच्चराशौ वक्रे च फलं नेच्छन्ति । तथा च तत्पक्षो दर्शितः सारावल्याम्—

"उच्चराशौ विलोमे च फलं नान्यैरिहेष्यते ।
कालस्यातिबहुत्वाच्च तस्मात्स्वोच्चेऽतिवक्रिते ॥" इति ।

"स्वतुङ्गवक्रोपगतैस्त्रिसंगुणम्" "वक्रसमागमगाः परिशेषाः" इत्यादिवचनैर्वक्रगतग्रहस्य पूर्णबलं तदनुगुणफलं च वक्तव्यमिति द्योतितमाचार्येण । एवमेव "नीचगृहार्कगैः" इति मूढग्रहस्य दशापि नीचस्थग्रहस्येवानिष्टफलदैव भवति । तथा च सारावल्याम्—

"नीचशत्रुगृहं प्राप्ताः शत्रुनीचांशसूर्यगाः ।
विवर्णाः पापसंबन्धाद्दशां कुर्युरशोभनाम् ॥" इति ।

यथा बलिनः स्वोच्चराशिगतस्य च दशा पूर्णा तथैव सर्वैर्बलैरपेतस्य नीचराशिगतस्य च दशा रिक्ता भवति । नीचांशगतस्य परमनीचभागस्थस्य शत्रुभागे शत्रुनवांशस्थस्य च दशाऽनिष्टफलदा ज्ञेया । तथा च गार्गिः—

" सर्वैर्बलैरपेतस्य नीचराशिगतस्य च ।
रिक्ता नाम दशा ज्ञेया धननाशस्य कारिणी ॥
यः स्यात्परमनीचस्थस्तथा चारिनवांशके ।
तस्यानिष्टफला नाम दशाऽनर्थविवर्धिनी ॥ " इति ।

अत्र शत्रुनवांशकस्थस्य परमनीचतुल्यतया नीचनवांशकस्य ततोऽप्यधिकानिष्टप्रदत्वं वाच्यम् । नीचांशगतस्य यत्र कुत्रापि स्थितस्य नीचनवांशस्थस्य दशा अनिष्टफलदा ज्ञेयेति व्याख्यया वेष्टसिद्धिः । अनेनोच्चनवांशस्थस्यापि शुभफलदत्वं सिद्धम् । तथा च सारावल्याम्—

" नीचांशगास्तुङ्गगृहोपयाता
जातस्य नीचं फलमाहुरार्याः ।
नीचंगतास्तुङ्गनवांशकस्थाः
सौम्यं फलं व्योमचराः प्रकुर्युः ॥ " इति ।

नीचांशगतस्य शत्रुभागे इत्यत्र शत्रुभागे असुरभागे नीचांशगतस्य नीच इत्यक्षरसंख्यया षष्टिः अतः षष्ट्यंशगतस्येत्यर्थः । दशाऽनिष्टफलदा क्रूरषष्ट्यंशगतस्य अनिष्टफलदत्वम् । अत एव शुभषष्ट्यंशगतस्य शुभफलदत्वं वाच्यम् । तथा च सारावल्याम्—

" नीचं गता द्वित्रिचतुर्ग्रहेन्द्राः षष्ट्यंशके शोभनभागयुक्ताः ।
स्वतुङ्गराश्यंशकसंयुता वा धरापतिर्धार्मिकचक्रवर्ती ॥ "

इति शत्रुभागे ।

औपच्छन्दसिकं छन्दः। अस्य एकार्धे षण्मात्राः षडक्षराणि अष्टौ मात्राः षडक्षराणि च सन्ति। एवं षण्मात्राः अष्टौ मात्राः द्वादशाक्षराणि च दृश्यन्ते। अतः शत्रुशब्दः दुःस्थानोपलक्षणम्। रिःफषष्ठाष्टमेष्वित्यर्थः। एतेषु स्थानेषु नीचांशगतस्य नीचराशिगतस्यैवानिष्टफलदत्वं वाच्यम्। तथा च सारावल्याम्—

" द्वित्रिचतुर्थे नीचा नवमखलाभेषु राजयोगकराः।
निधनारिव्ययसंस्थाः क्षितिपतिरपि दासदासोऽभूत्॥" इति॥५॥

अथाऽवरोह्यादिसंज्ञा आह—

**भ्रष्टस्य तुङ्गादवरोहिसंज्ञा**
**मध्या भवेत्सा सुहृदुच्चभांशे।**
**आरोहिणी निम्नपरिच्युतस्य**
**नीचारिभांशेष्वधमा भवेत्सा॥ ६॥**

इति। तुङ्गात् परमोच्चात् भ्रष्टस्य परिच्युतस्य दशा अवरोहिसंज्ञा अवरोहिसंज्ञका भवेत्। सा तदवरोहिदशैव सुहृदुच्चभांशे मित्रक्षेत्रांशे उच्चक्षेत्रांशे वा स्थितस्य मध्या भवेत्। तद्दशायाः मध्या इति संज्ञा। निम्नपरिच्युतस्य अतिनीचभागाद्भ्रष्टस्य दशा आरोहिणी आरोहिणीसंज्ञका भवेत्। तदारोहिणी दशा नीचारिभांशेषु नीचक्षेत्रांशे शत्रुक्षेत्रांशे वा अधमा भवेत्। तद्दशायाः अधमेति संज्ञा।

इन्द्रवज्रावृत्तम्। अनेन इन्द्रादिदिक्पालकाः सूचिताः। दिग्वीर्ययुक्तस्य दशा शुभप्रदा इति सूचितम्। तथा चोक्तम्—

" दिग्वीर्ययुक्तस्य कुजस्य दाये
नृपात्सुलब्धार्थरणप्रतापम्।

गोभूमिकृष्यम्बरयानलाभं
दिगन्तराक्रान्तयशःप्रतापम् ॥ " इत्यादि ।

इन्द्रवज्रावृत्तेन षष्ट्यंशे देवभागस्थिताः शुभफलदा इति सूचितम् । अत एव क्रूरषष्ट्यंशकस्थस्याशुभफलदत्वमपि वक्तव्यम् । तथा चोक्तम्—

" क्रूरषष्ट्यंशसंयुक्तभौमदायेऽतिपीडनम् ।
कारागृहप्रवेशं च समस्तविभवक्षयम् ॥
सौम्यषष्ट्यंशसंयुक्तभौमदाये शुभं भवेत् ।
विवाहदीक्षा यज्ञं च सर्वेषामुपकारकम् ॥ " इत्यादि ।

एकादशाक्षरयुक्तपादवत्त्रिष्टुप्छन्दः । अनेन सर्वेषां ग्रहाणामेकादशस्थितिः शुभावहा इति सूचितम् । तुङ्गः प्रधानः ग्रहेषु प्रधानः सूर्यः । तुङ्गात् सूर्याद्भ्रष्टस्य अवरोही इति संज्ञा । निम्नपरिच्युतस्य सूर्यात् सप्तमाद्भ्रष्टस्य आरोहीति संज्ञा । सूर्यात् पूर्वषट्कस्थस्य ग्रहस्य अधोमुखसंज्ञा, इतरषट्कस्थस्य ऊर्ध्वमुखसंज्ञा च सूचिते । ऊर्ध्वास्यस्य शुभप्रदत्वं च व्यञ्जितम् । उक्तं च—

" सूर्यस्य पूर्वषट्कस्था ये ग्रहास्तेऽप्यधोमुखाः ।
अपरस्थाश्च ये भानोरूर्ध्वास्यास्ते सुखप्रदाः ॥ " इति ।

" ऊर्ध्वास्यतुङ्गभवनस्थितभूमिजस्य
कर्मायगस्य च दशा विदधाति राज्यम् । "

इत्यत्र तूर्ध्वास्यस्थस्य शुभप्रदत्त्वमुक्तम् ।

तुङ्गः ऋजुः तस्माद्भ्रष्टः वक्रगतः तस्य वक्रगतस्य अवरोहिसंज्ञा चेत् वक्री ग्रहः अवरोही चेत् तस्य दशा मध्या भवेत् । आरोहिणः वक्रगस्य ग्रहस्यैव वक्रगत्या स्वोच्चफलं वक्तव्यम् । अन्यथा न्यूनफलमेव । अनेनैव अनुवक्रगस्य आरोहित्वे सति मध्यफलमेव वाच्यम् । तथा चोक्तम्—

"वक्रियादवरोही स्यादारोही त्वनुवक्रतः ।
वक्रस्योच्चफलं नैव दशा तस्य तु मध्यमा ॥
वक्रानुवक्रमालोच्य दशाफलमुदीरयेत् ।
ताराणामेव सर्वेषामेवं ज्ञात्वा विचक्षणः ॥" इति ।

इन्द्रवज्रावृत्तेन माहेन्द्रशास्त्रोक्तरश्मिजायुषः स्मरणम् । निम्न इत्यक्षरसंख्यया शून्यम् । नीचे ग्रहाः विगतरश्मयो भवन्तीति सूचितम् ॥ ६ ॥

संज्ञान्तरमाह—

**नीचारिभागे समवस्थितस्य**
**शस्ते गृहे मिश्रफला प्रदिष्टा ।**
**संज्ञानुरूपाणि फलानि चैषां**
**दशासु वक्ष्यामि यथोपयोगम् ॥ ७ ॥**

इति । शस्ते गृहे स्वमूलत्रिकोणगृहे स्वगृहे वा नीचारिभागे नीचांशे शत्रुक्षेत्रांशे वा समवस्थितस्य दशा मिश्रफला मिश्रफला इति संज्ञावती प्रदिष्टा । अत्र प्रशस्ते गृहे इति नोक्तम् । किन्तु शस्ते गृहे इत्येव । अनेनोच्चराशिर्न गृह्यते । उच्चराशौ तु नीचांशकवशाद्दोष एव प्रोक्त इति पूर्वमेवोक्तम् । यथा कश्चिन्नृपोऽन्यं देशं जित्वा तत्राभिषिक्तोऽपि बलहीनो भवेद्यदि रन्ध्रान्वेषिभिस्तदनुरक्तैर्जनैरभिभूतो भवति । स्वदेशे तु बलहीनोऽपि न परिभूयते । स्वजनैस्तस्मिन्ननुरागेण तस्य बलहानिरुपेक्ष्यते । एवमेवोच्चराशौ नीचांशसम्भवे नीचफलमेव वक्तव्यम् । तथा च जातकपारिजाते—

"स्वोच्चे नीचनवांशगस्य तरणेर्दायेऽपवादं भयं
पुत्रस्त्रीपितृवर्गबन्धुमरणं कृष्यादिवित्तक्षयम् ।"

"उच्चस्थितस्य धरणीतनयस्य पाके
नीचांशगस्य मरणं सुतसोदराणाम् ।"
"नीचांशोपगतस्वतुङ्गभवने जीवस्य पाके भयं
चोरारातिनृपैः कलत्रतनयद्वेषं करोत्यश्रियम् ।"
"उच्चराशिं गतः शुक्रो नीचांशकसमन्वितः ।
स्वपाके धननाशं च कुर्वीत पदविच्युतिम् ॥" इति ।

चन्द्रस्योच्चराशौ नीचांशासंभवात् फलं नोक्तम् । शनेस्तु

"धनुर्मीनतुलामेषमृगकुम्भोदये शनौ ।
चार्वङ्गो नृपतिर्विद्वान् पुरग्रामाग्रणीर्भवेत् ॥"

इति गर्गवचनेन नीचराशेरपि राजयोगप्रदत्वान्नीचांशस्यात्यनिष्टफलं नोक्तम् । तथा च जातकपारिजातके—

"स्वोच्चे नीचनवांशगो रविसुतः कुर्वीत सौख्यं फलं
पाकादौ तु दशावसानसमये कष्टं फलं प्राणिनाम् ॥" इति ।

बुधस्य स्वोच्चराशेः स्वक्षेत्रस्य चैकराशित्वात् नीचनवांशकस्थस्य मिश्रफलमेवोक्तम् । तथा च जातकपारिजाते—

"उच्चराशिगतः सौम्यो नीचांशकसमन्वितः ।
करोति कर्मवैकल्यं निजदाये च वर्धनम् ॥"

अत्र "निजदाये च निर्धनम्" इति पाठे त्वनिष्टफलमेव । एषामेवं स्थितानां ग्रहाणां दशानां फलानि च संज्ञानुरूपाणि संज्ञाया अनुरूपाणि भवन्ति । यथा संपूर्णदशायाम् ऐश्वर्यारोग्यादीनां संपूर्णता । पूर्णायां तेषां पूर्णता । रिक्तदशायां तेषामभावो धननाशश्च । अनिष्टफलदशायामनर्थ-परम्परा । अवरोहिणीदशायाम् ऐश्वर्यारोग्यादीनां क्रमेणावरोहणम् ।

आरोहिण्यामारोहणम् । मध्यायामवरोहणे सत्यपि धनारोग्यवृद्धिश्च जायते । अधमायामभिवृद्धावपि न्यूनत्वम् । मिश्रफलायां शुभाशुभफलानां मिश्रत्वम् ।

वृत्तं इन्द्रवज्रोपेन्द्रवज्रामिश्रमायाख्योपजातिः । अनेन संपूर्णादिसंज्ञा सजातीयदीप्ताद्याः सर्वा अप्यन्वर्था संज्ञा एवं दशाफलचिन्तायां प्रयोजनवत्यो भवन्तीति सूचितम् । उक्तं च भगवता पराशरेण—

"पाके प्रदीप्तस्य धराधिपत्यमुत्साहशौर्ये धनवाहने च ।
स्त्रीपुत्रलाभं शुभबन्धुपूजां क्षितीश्वरान्मानमुपैति विद्याम् ॥
स्वस्थस्य खेटस्य दशाविपाके स्वस्थो नृपाल्लब्धधनादिसौख्यम् ।
विद्यां यशःप्रीतिमहत्त्वमाराद्दारार्थभूम्यादि च धर्ममेति ॥
मुदान्वितस्यापि दशाविपाके वस्त्रादिकं गन्धसुतीर्थधैर्यम् ।
पुराणधर्मश्रवणादिलाभं वस्त्रादियानाम्बरभूषणाप्तिम् ॥
दशाविपाके सुखधर्ममेति शान्तस्य भूपुत्रकलत्रयानम् ।
विद्याविनोदान्वितधर्मशास्त्रं बह्वर्थदेशाधिपपूज्यतां च ॥
स्थानच्युतिर्बन्धुविरोधता च दीनस्य खेटस्य दशाविपाके ।
जीवत्यसौ कुत्सितहीनवृत्त्या त्यक्तो जनैर्योगनिपीडितः स्यात् ॥
दुःखार्तितस्यापि दशाविपाके नानाविधं दुःखमुपैति नित्यम् ।
विदेशगो बन्धुजनैर्विहीनश्चोराग्निभूपैर्भयमातनोति ॥
वैकल्यखेटस्य दशाविपाके वैकल्यमायाति मनोविकारम् ।
मित्रादिकानां मरणं विशेषात् स्त्रीपुत्रयानाम्बरचोरपीडाम् ॥
दशाविपाके कलहं वियोगं खलस्य खेटस्य पितुर्वियोगम् ।
शत्रोर्जनानां धनभूमिनाशमुपैति नित्यं स्वजनैश्च निन्दाम् ॥
कोपान्वितस्यापि दशाविपाके पापाः समायान्ति बहुप्रकारैः ॥
विद्याधनस्त्रीसुतबन्धुनाशं पुत्रादिकृच्छ्रं त्वथ नेत्ररोगम् ॥"

संज्ञानुरूपाणि फलानि चैषाम्, चैष् इत्यक्षरसंख्यया षट् तेषां लज्जितादि-षडवस्थानां संज्ञानुरूपाणि फलानि स्युः । तथा च पराशरहोरायाम्—

"लज्जितो गर्वितश्चैव क्षुधितस्तृषितस्तथा ।
मुदितः क्षोभितश्चैव ग्रहभावाः प्रकीर्तिताः ॥
पुत्रगेहगतः खेटः राहुकेतुयुतो भवेत् ।
रविमन्दकुजैर्युक्तो लज्जितो ग्रह एव च ॥
तुङ्गस्थानगतो वाऽपि त्रिकोणेऽपि भवेत्पुनः ।
गर्वितः सोऽपि गदितः निर्विशङ्कं द्विजोत्तम ॥
शत्रुगेहे शत्रुयुक्तो रिपुदृष्टो भवेद्यदि ।
क्षुधितः स च विज्ञेयः शनियुक्तो यथा तथा ॥
जलराशौ स्थितः खेटः शत्रुणा चावलोकितः ।
शुभग्रहा न पश्यन्ति तृषितः स उदाहृतः ॥
मित्रगेहे मित्रयुक्तो मित्रखेचरवीक्षितः ।
गुरुणा सहितो यश्च मुदितः स प्रकीर्तितः ॥
रविणा सहितो यश्च पापाः पश्यन्ति सर्वथा ।
क्षोभितं तं विजानीयाच्छत्रुणा यदि वीक्षितः ॥"

"नवालयारामसुखं नृपत्वं कलापटुत्वं विदधाति पुंसाम् ।
सदर्थलाभं व्यवहारवृद्धिं फलं विशेषादिह गर्वितस्य ॥"

"भवति मुदितयोगे वासशाला विशाला
विमलवसनभूषा भूमियोगः सुसौख्यम् ।
स्वजनजलविलासो भूमिपागारवासो
रिपुनिवहविनाशो बुद्धिविद्याविकासः ॥"

"दिशति लज्जितभाववशाद्रतिं विगतरागमतिं विमतिक्षयम् ।
सुतंगदागमनं गमनं वृथा कलिकथाभिरुचिं न रुचिं शुभे ॥

50

स क्षोभितस्यापि फलं विशेषाद्दारिद्र्यजातं कुमतिं च कष्टम् ।
करोति वित्तक्षयमङ्घ्रिबाधां धनाप्तबाधामवनीशकोपात् ॥
क्षुधितग्रहवशाद्वै शोकमोहादिपातः
परिजनपरितापश्चाधिभीत्या कृशत्वम् ।
कलिरविरिपुलोकैरर्थबाधा नराणा-
मखिलबलनिरोधो बुद्धिरोधो विषादात् ॥
तृषितखगदशादावङ्गनासङ्गमध्ये
भवति गदविकारो दुष्टकार्याधिकारः ।
निजजनपरिवादादर्थहानिः कृशत्वं
खलकृतपरितापो मानहानिः सदैव ॥" इति ।

संज्ञानुरूपेण फलानि चैषां एषां च संज्ञाः संपूर्णादिसंज्ञाः रूपेण रूपेत्यक्षरसङ्ख्यासूचितद्वादशभिः शयनाद्यवस्थाविशेषेणैव फलानि नु फलानि यच्छन्ति खलु । एवमनेन शयनादिद्वादशावस्थाश्च व्याख्याताः । एता अवस्था विस्तरेणोक्ताः पराशरेण । तथा च पराशरहोरायाम्—

शयनं चोपवेशश्च नेत्रपाणिप्रकाशनम् ।
गमनागमनं चाथ सभायां वसतिस्तथा ॥
आगमं भोजनं चैव नृत्यं लिप्सां च कौतुकम् ।
निद्रां ग्रहाणां चेष्टां च कथयामि तवाग्रतः ॥
यस्मिन्नृक्षे भवेत्खेटस्तेन तं परिपूरयेत् ।
पुनरंशेन सूर्यस्य स्वनक्षत्रं नियोजयेत् ॥
यदि दण्डं तथा लग्नमेकीकृत्य सदा बुधः ।
रविणा हरते भागं शेषं कार्येऽतियोजयेत् ॥

एते चाप्यन्वर्थसंज्ञा एव । अतस्तेषां फलमप्यूह्यम् । विस्तरभयाद्ग्रन्थान्तरेषु विस्तरेणोक्तानि फलानि नात्र लिख्यन्ते । यथोपयोगम् । उपयोगमनतिक्रम्य

यथोपयोगम् । उपयोगमित्यक्षरसंख्यया शून्यं एकं, एकं, त्रीणि च भवति सङ्कलनेन पञ्च च। पञ्च अनतिक्रम्य दशासु फलानि संज्ञानुरूपाणि वक्ष्यामि । वक्तव्यमित्यस्य स्थाने वक्ष्यामीति लटा निर्देशात् "सौर्याम्" इत्यादिवक्ष्यमाणश्लोकैरुक्तफलकथनात्पूर्वं बहु चिन्त्यं विशेषतः अनेन श्लोकेन व्यज्यमानावस्थाभेदाश्चापि चिन्त्या इति सूचितम् । एवमुपयोग-शब्देन बाल्यादिपञ्चावस्थाः सूचिताः । ताश्चापि विचिन्त्यैव दशाफलं वक्तव्यमित्यपि व्यञ्जितम् । उक्ताश्चैते बाल्यकौमारयौवनवार्धक्यमरणावस्थाः पराशरहोरायाम्—

"बालो रसांशैरसमे प्रदिष्ट-
स्ततः कुमारो हि युवाऽथ वृद्धः ।
मृतः क्रमादुत्क्रमतः समर्क्षे
बालाद्यवस्थाः कथिता ग्रहाणाम् ॥
फलं तु किञ्चिद्वितनोति बाल-
श्चार्धं कुमारः कुरुते फलस्य ।
युवा समग्रं च करोति वृद्धः
फलं च दुष्टं मरणं मृतस्य ॥" इति ।

एवं चेद्बाल्याद्यवस्थास्त्रिंशांशकान्नातिभिन्नाः । प्रायेण कुजांशकस्य बालत्वं, शन्यंशस्य कुमारत्वं, गुर्वंशस्य यौवनं, बुधांशस्य वार्धक्यं, शुक्रांशस्य मृतत्वं च भवन्ति । अनेन बुधशुक्रयोस्त्रिंशांशकस्य दोषो वक्तव्यो भवति । तन्न शास्त्रसंमतम्, बुधशुक्रत्रिंशांशगतानामपि शुभफलनिर्देशात् । अतो मित्रादिवर्गरहितत्व एव बाल्याद्यवस्थानामुपयोगः । अत एवोक्तम्— "यथोपयोगम्" इति । प्रयोजनान्तरमप्यस्ति । बाल्याद्यवस्थानां वयः-प्रयुक्तत्वादेता आयुर्दायगणने योज्या इत्यप्यूह्यम् । "यथोपयोगम्" इति

निर्देशस्यायमपि भावः। लब्धवयोभागस्य पूर्णता राश्यादावभावः, अन्ते मध्येऽनुपात इत्यर्थः ॥ ७ ॥

अथ लग्नदशाविशेषफलमाह—

**उभयेऽधममध्यपूजिता**
**द्रेक्काणैश्चरभेषु चोत्क्रमात्।**
**अशुभेष्टसमास्थिते क्रमा-**
**द्धोरायाः परिकल्पिता दशा ॥ ८ ॥**

इति। होरायाः लग्नस्य परिकल्पिता दशा उभये उभयराशौ द्रेक्काणैः अधममध्यपूजिता भवति। उभयराशिलग्नस्य प्रथमे द्रेक्काणे जातस्य लग्नदशा अधमा अल्पफलप्रदा न त्वशुभा, द्वितीयद्रेक्काणजस्य दशा मध्या, अन्त्यद्रेक्काणजस्य दशा पूजिता श्रेष्ठा भवति। चरभेषु उत्क्रमाच्च भवति। प्रथमद्रेक्काणजस्य पूजिता, मध्यद्रेक्काणजस्य मध्या, अन्त्यद्रेक्काणजस्य अधमा च लग्नदशा भवति। स्थिरे स्थिरराशौ लग्ने क्रमात् अशुभेष्टसमा भवति। प्रथमद्रेक्काणजस्य लग्नदशा अशुभा, मध्यद्रेक्काणजस्य इष्टा श्रेष्ठा, अन्त्यद्रेक्काण-जस्य समा मध्यमा च भवति। उभये लग्ने उभयराशौ होरायाः होरालग्नस्य उत्क्रमात् चरोभययोः चरादितः उत्क्रमात्, स्थित्या चरोभयस्थिरस्थित्या, दशा आयुषः अवस्था, अधममध्यपूजिता भवति। लग्ने उभये सति होरालग्नस्य चरस्थित्या अल्पायुः, उभयस्थित्या मध्यमायुः, स्थिरस्थित्या दीर्घायुश्च भवति। चरभेषु लग्ने चरराशिषु होरायाः उत्क्रमात् चरोभययो-रुभयादितः उत्क्रमात् स्थित्या उभयस्थिरचरस्थित्या आयुः अधममध्यपूजितं भवति। लग्ने चरे होरालग्नस्य उभयस्थित्या अल्पायुः। स्थिरस्थित्या मध्यमायुः, चरस्थित्या दीर्घायुश्च भवति। स्थिरे लग्ने स्थिरे होरालग्नस्य क्रमात् स्थिरोभयचरस्थित्या आयुः अशुभेष्टसमा अल्पपूर्णमध्यमं भवति।

स्थिरे लग्ने होरालग्नस्य स्थिरस्थित्या अल्पायुः, उभयस्थित्या पूर्णायुः, चरस्थित्या मध्यमायुश्च भवति। उभये इति उभयशब्दस्य बहुवचनं स्यात्। ततः लग्नहोरालग्नवदन्येऽपि द्विका एवं चिन्त्या भवन्ति। होराया इत्यत्र होः रायाः इत्यपि छेदः। हु इत्यक्षरसंख्यया अष्टौ होरित्यष्टमस्य लग्नस्य चरादित्वे सिद्धे अष्टमस्यापि सिद्धत्वात् विवेवैयर्थ्यं भवति। अतस्तत्परिहाराय अष्टमेशलग्नेशयोरपि लग्नहोरयोरिव चरादिस्थित्या पूर्णाद्यायुः प्रकल्प्यमिति लब्धम्। रायाः इत्यत्र रा इति राज्ञी चन्द्रः, अतः रायाः इत्यस्य चन्द्रस्येत्यर्थः। पूर्ववल्लग्नचन्द्रयोरपि वक्तव्यमिति भावः। तथा च भगवान् जैमिनिः—"आयुः पितृदिनेशाभ्याम्" "एवं मन्दचन्द्राभ्याम्" "पितृकालतश्च" "संवादात्प्रामाण्यम्" इति। अत्र पितृ इति पञ्चषष्टिः मण्डलशुद्धया लग्नं भवति। एवं दिनमित्यष्टमः। अतः प्रथमसूत्रेण लग्नेशाष्टमेशाभ्यामायुश्चिन्त्यमिति विहितम्। मन्द इति लग्नम्। अतो द्वितीयसूत्रेणैवं लग्नचन्द्राभ्यामायुश्चिन्त्यमिति विहितम्। मन्द इति शनिरिति पक्षे तु शनिचन्द्राभ्यामायुरेवं चिन्त्यमिति विहितम्। तत्पक्षे अस्मिन् श्लोके होरित्यस्याष्टमकारकग्रहणेनेष्टसिद्धिः। पितृ इति लग्नं काल इति होरालग्नम्। एवं लग्नहोरालग्नाभ्यामायुश्चिन्त्यमिति तृतीयसूत्रेण विहितम्। तत्प्रकारस्तु—तत्रैव "प्रथमयोरुत्तरयोर्वा दीर्घम्" "प्रथमद्वितीययोरन्त्ययोर्वा मध्यम्" "मध्ययोराद्यन्तयोर्वा हीनम्" इति कथितः। तत्र द्वयोरपि प्रथमयोश्चरयोः अथवा उत्तरयोः एकः स्थिरे इतरः उभये च चेद्दीर्घायुः। द्वयोः स्थिरयोरथवा एकः चरे इतरः उभये च चेदल्पायुः। द्वयोरुभयोरथवा एकः चरे इतरः स्थिरे चेन्मध्यमायुरिति सूत्रार्थः। आयुर्गणनप्रकारं तु पूर्वश्लोके बालाद्यवस्थासूचनेन सूचितम्। तत्प्रकारस्त्वेवम्। लग्नस्फुटं पञ्चराशयो द्वादशभागाः स्यात्। होरालग्नं च सप्तराशयो दशभागाः स्यात्। तदा लग्नं उभयराशिः, होरालग्नं तु

स्थिरराशिः, अतो दीर्घायुर्वक्तव्यम् । आयुषो दीर्घमध्याल्पभागाना-मेकैकस्य द्वात्रिंशद्वत्सर इति पक्षेऽत्र चतुःषष्टिसंवत्सरेभ्योऽधिकं वयो वाच्यम् । अधिकभागस्त्वेवं लभ्यते । लग्नस्य षोडश, होरालग्नस्य षोडश । राश्यादौ पूर्णं राश्यन्ते शून्यं मध्येऽनुपाततश्च वत्सराः भवन्ति । लग्नस्य गन्तव्यभागाः अष्टादश । अतः अनुपाततः ($\frac{१८}{३०}$×१६) नव संवत्सराः सप्तमासाः षड्दिनानि । एवं होरालग्नस्य गन्तव्यभागाः विंशतिः । अतोऽस्य वयःप्रमाणं ($\frac{२०}{३०}$×१६) दशाब्दाः अष्टौ मासाः । एवं सङ्कलनेन विंशतिरब्दाः त्रयो मासाः षड्दिनानि । अनेन चतुःषष्टिसंवत्सरानपि संयोज्य आयुःप्रमाणं चत्वार्यशीतिरब्दाः त्रयो मासाः षड्दिनानि भवति । उभयेऽधममध्यपूजिता उभयश्च उभौ च उभये । उभाविति स्थिरचरौ । व्युत्क्रमादिति निर्देशेनैते उभयस्थिरचराः भवन्ति । ते क्रमेण अधममध्य-पूजिताः भवन्ति आयुर्विषये इत्यर्थः । एतल्लग्नेशस्थितिवशाद्वक्तव्यमित्यत्र न सन्देहः । तस्यैव हि आयुर्विनिर्णये प्रधानत्वात् । एवं लग्नेशे उभयराशौ द्वात्रिंशदब्दा अल्पायुर्भवति । लग्नेशे स्थिरराशौ षट्त्रिंशदब्दा अल्पायुः । लग्नेशे चरराशौ चत्वारिंशदब्दा अल्पायुः । त्रिविधायुःप्रमाणेषु तारतम्येन अधममध्यपूजिता इति निर्देशः । द्विगुणितान्येतानि मध्यमायुःप्रमाणानि भवन्ति । त्रिगुणितानि दीर्घायुःप्रमाणानि भवन्ति । एष हि संप्रदायः । श्लोकस्य चत्वारिंशदक्षरैश्च पूजितमल्पायुश्चत्वारिंशदब्दा इति सूचितम् ।

एवं लग्नेशस्थितिवशाल्लब्धाल्पाद्यायुःप्रमाणैः "प्रथमयोरुत्तरयोर्वा दीर्घम्" इत्यादिवचनैश्च द्रेक्काणादिभिरपि चिन्त्यमिति "द्रेक्काणैश्च" इति निर्देशाद् व्यञ्जितम् । "घो रायाः परिकल्पिता दशा" इति पदच्छेदेन 'घो' इत्यक्षरसङ्ख्यासूचितनवांशैः 'रायाः' इत्यक्षरसङ्ख्या-सूचितद्वादशांशैश्च दशा आयुर्वत्त्वदशा परिकल्पिता इति व्याख्यया नवांशद्वादशांशैरप्येवं चिन्त्यमिति सिद्धम् । रा इति राजा चन्द्रः रा इति

स्त्रीलिङ्गनिर्देशात् रायाः इति पञ्चमी । चन्द्रादित्यर्थः । चन्द्रादप्येवं लग्नेशाष्टमेशयोश्चिन्त्यमिति भावः । रायाः चन्द्रस्य होः जुहोतीति क्विन्-प्रत्ययान्तत्वात् यजमानस्येत्यर्थः । चन्द्रस्य यजमानश्चन्द्रलग्नाधिपः । तस्य लग्नेशस्यापि चरादिस्थित्या आयुषोऽल्पमध्यदीर्घत्वं निरूपणीयमिति गम्यते । उक्तं च—

लग्नेन्द्वोस्तदधीशयोरपि मिथो लग्नेशरन्ध्रेशयो-
द्रेक्काणात्स्वनवांशकादपि मिथस्तद्द्वादशांशात्क्रमात् ।
आयुर्दीर्घसमाल्पतां चरनगन्यङ्गैश्चरेऽथ स्थिरे
ब्रूयाद्द्वन्द्वचरस्थिरैरुभयमे स्थास्नुद्विदेहाटनैः ॥" इति ।

वैतालीयं छन्दः । षण्मात्राः पञ्चाक्षराणि अष्टौ मात्राः पञ्चाक्षराणि च प्रत्यर्धं दृश्यन्ते । तत्र षण्मात्राः षष्ठभावकारकस्थशनेरुपलक्षणम् । अष्टौ मात्रा अष्टमेशस्योपलक्षणम् । दशाक्षरैः कर्माधिपः सूचितः । होरायाः परिकल्पिता दशा इति निर्देशेन लग्नाधिपोऽपि ग्राह्यः । एते चत्वारो ग्रहा आयुष्कारका इति सूचितम् । तथा च दर्शितम्—

"कर्मेशरन्ध्रतनुपा बलशालिनश्चे-
ज्जातश्चिरायुरिननन्दनयोगहीनाः ।
द्वावप्यतीव बलिनौ यदि मध्यमायु-
रेको बली लघुतरायुरनायुरन्यः ॥" इति ॥ ८ ॥

अथ निसर्गदशाक्रममाह—

**एकं द्वे नवविंशतिर्धृतिकृती पञ्चाशदेषां क्रमा-**
**च्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः ।**
**स्वे स्वे पुष्टफला निसर्गसमये पक्तिर्दशायाः क्रमा-**
**दन्त्ये लग्नदशा शुभेति यवना नेच्छन्ति केचित्तथा॥९॥**

इति । निसर्गसमये इति निर्देशात् "एकं द्वे" इति नैसर्गिकदशावर्षा इति सिद्धम् । एषां चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां चन्द्रकुजबुधशुक्र-गुरुरविशनीनां क्रमात् यथाक्रमं एकं द्वे नव विंशतिः धृतिकृती पञ्चाशच्च समाः स्युः । क्रमादित्युक्त्या चन्द्रादयः क्रमेण निसर्गदशानाथा भवन्तीति च सिद्धम् । एवं प्रथमं चन्द्रस्य दशावर्षः एकः । ततः कुजस्य द्वे वर्षे । ततो बुधस्य नव वर्षाः । अनन्तरं शुक्रस्य विंशतिर्वर्षाः । ततः गुरोः धृतिः अष्टादश वर्षाः । ततः सूर्यस्य कृतिः विंशतिवर्षाः । ततः शनेः पञ्चाशत् । एकं द्वे नव विंशतिरिति व्यस्ताः । धृतिकृतीति समस्तपदम् । पञ्चाशदिति पृथगुक्तम् । सूर्याश्वयतियुतवृत्तत्वाद् "धृतिकृती" इत्यन्ते यतिश्च दृश्यते । अनेनायमर्थः सूचितः । प्रायेण 'एकं द्वे नवविंशतिः' इति द्वात्रिंशदब्दा अल्पायुर्भागाः । तदुपरि धृतिकृतीति अष्टत्रिंशदब्दाः मध्यमायुर्भागाः । एवं द्वात्रिंशत्परतः आसप्ततेर्मध्यमायुः । ततः पश्चात् पञ्चाशद्वत्सराः दीर्घायुर्भागाः । दैवाकरिरिति निर्देशात् पञ्चाशदब्देष्वपि अन्त्यकृत्यब्दाः उत्तमायुर्भागाः । आद्यत्रिंशदब्दाः दीर्घायुर्भागा इत्यपि गम्यते । एवम् आसप्ततेराशताच्च दीर्घायुः शतादूर्ध्वमुत्तमायुश्च भवति । तथा चोक्तम्—

"त्रिविधश्चायुषां ज्ञानं स्वल्पायुर्मध्यमोत्तमाः ।
द्वात्रिंशात्पूर्वमल्पं स्यात्तदूर्ध्वं मध्यमं भवेत् ॥
आसप्ततेस्तदूर्ध्वं तु दीर्घायुरिति संमतम् ।
उत्तमायुः शतादूर्ध्वमिह शंसन्ति तद्विदः ॥" इति ।

अनेन नैसर्गिकदशावर्षकथनेन ग्रहाणां बालत्वादिविभागः सूचितः । तत्र चन्द्रः अतिबालः । कुजः बालः । बुधः कुमारः । शुक्रो युवा । गुरुः मध्यवयस्कः । सूर्यो वृद्धः । शनिरतिवृद्धः । उक्तं च पराशरेण—

"ग्रहेषु मन्दो वृद्धोऽस्ति आयुर्वृद्धिप्रदायकः ।
नैसर्गिके बहुसमान् ददाति द्विजसत्तम ॥" इति ।

स्वे स्वे पुष्टफलाः स्वकीयसुस्थानेषु शुभफलदाः। निसर्गदशाधिपेषु ग्रहेषु बलवत्सु उपचयस्थानेषु स्थितेषु तेषां दशासु शुभफलं वाच्यम्। अन्यथा विपरीतम्।

स्वे स्वे निसर्गसमये तत्तद्ग्रहस्य निसर्गदशासमये, दशायाः क्रमात् पक्तिः आयुर्दायाध्यायप्रकारेणानीतायाः दशायाः पाकः, समकालीना भवति यदि तर्हि पुष्टफला संपूर्णफला भवति। एवमेवान्तर्दशानामपि "श्रेष्ठा दशा स्वे वयसि ग्रहस्य" इति यवनेश्वरवचनेन "पुष्टफला" इति संपूर्णशुभफलदत्वं विवक्षितम्। अनेन निसर्गदशावैपरीत्ये दोषफलमपि भवतीति सूचितम्। यवनाः अत्र निसर्गदशाक्रमे अन्त्ये परमायुषः परतः यदि जीवति तदा लग्नदशा इति वदन्तीति शेषः। शुभा सा च दशा शुभदा भवति। "समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा" इति परमायुष उक्ताद्वर्षप्रमाणाद् नैसर्गिकोक्तदशावर्षप्रमाणस्य पञ्चदिनैर्न्यूनतया लग्नदशायाः पञ्चदिनानि वक्तव्यानीत्यपि द्योत्यते। "लग्नदशा शुभेति" इत्यत्र शु इत्यक्षरसङ्ख्यया पञ्च। शुना भाति शुभा इति व्युत्पत्त्यापि लग्नदशायाः पञ्चदिनप्रमाणत्वं वक्तुं शक्यम्। केचित् तथा "अन्त्ये लग्नदशा" इति यवनैरुक्तप्रकारं नेच्छन्ति। अयं पक्षो नाऽऽचार्यसम्मतः। केचिन्निसर्गदशाया अपि पिण्डाद्यायुर्वदानयनमिच्छन्ति। एतदपि नाऽऽचार्यस्य मतम्।

'उभय' इत्यारम्भसामर्थ्याद् उभयद्रेक्काणजः समपुण्यपापयुतः, स्थिरद्रेक्काणजः पापाधिक्ययुतः, चरद्रेक्काणजः पुण्याधिक्ययुतः इति सूचितम्।

वृत्तं शार्दूलविक्रीडितम्। अनेन राहुकेतू उडुदशा च स्मारिताः। विंशोत्तरी उडुदशा च नैसर्गिकदशावद् विंशोत्तरशतवर्षप्रमाणतया सर्वेषां भवतीति विंशोत्तरशतमात्रायुक्तशार्दूलविक्रीडितवृत्तेन व्यञ्जितम्। उडुदशाक्रमे च नैसर्गिकदशाविषये उक्तप्रकारेण अन्त्ये पञ्चदिनानि लग्नदशा

वक्तव्या । अन्त्ये इत्यक्षरसङ्ख्यया दश । अतो दशमे नवदशानां परतो लग्नदशा शुभा पञ्चदिनवती भवतीति व्याख्यया वेष्टसम्पत्तिः ।

एतच्छ्लोकादारभ्य दशसु श्लोकेषु शार्दूलविक्रीडितं वृत्तमेव प्रयुक्तम् । अनेनात्र कथितफलविशेषाः निसर्गपैण्ड्यांशकरश्मिचक्रनक्षत्र-दायाष्टकवर्गादिसकलविधदशास्वपि योज्या इति सूचितम् ॥ ९ ॥

अथ दशान्तर्दशाप्रारम्भकालस्य पाकस्वामिस्थितिवशात् फलविशेष-माह—

**पाकस्वामिनि लग्नगे सुहृदि वा वर्गेऽस्य सौम्येऽपि वा**
**प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे ।**
**मित्रोच्चोपचयत्रिकोणमदगः पाकेश्वरस्य स्थितः**
**चन्द्रः सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा ॥ १० ॥**

इति । पाकस्वामिनि दशापाकपतौ अन्तर्दशापाकपतौ वा, लग्नगे दशारम्भ-काललग्नस्थिते, अस्य सुहृदि मित्रे वा दशारम्भकाललग्नस्थिते, वर्गे वर्गेषु षड्वर्गेषु सप्तवर्गेषु वाऽन्यतमे लग्नगे दशारम्भकाललग्नस्थिते, सौम्येऽपि शुभग्रहे वा लग्नगे दशारम्भकाललग्नस्थिते, पाकपे त्रिदशषड्लाभेषु वा दशारम्भकाललग्नाद् उपचयस्थिते वा, प्रारब्धा दशा मूलदशा अन्तर्दशा वा, शुभदा शुभफलप्रदा भवति । तथा च श्रीपतिः—

"दशापतिर्लग्नगतो यदि स्यात्
त्रिषड्दशैकादशगश्च लग्नात् ।
तत्सप्तवर्गेऽप्यथ तत्सुहृद्वा
लग्ने शुभो वा शुभदा दशा स्यात् ॥" इति ।

अथवा पाकस्वामिनि लग्नगे, सुहृदि वर्गे मित्रवर्गे वा, सौम्ये वर्गेऽपि

वा शुभवर्गे वा, पाकपे त्रिदशषड्लाभेषु वा प्रारब्धा दशा शुभदा भवति। तथा च सारावल्याम्—

"पाकस्वामिनि लग्ने सुहृदां वर्गेऽथवाऽपि सौम्यानाम्।
श्रेष्ठदशायाः स्फूर्तिर्लग्नादुपचयगृहस्थे वा ॥" इति।
"सविता दशाफलानां पाचयिता चन्द्रमाः प्रपोषयिता।
राशिविशेषेणेन्दोरतः फलोक्तिर्दशारम्भे ॥"

इत्युक्तप्रकारेणाद्य चन्द्रस्य दशापोषयितृत्वात्तच्चारवशाद्दशान्तर्दशासु शुभाशुभदानकालविशेषं चन्द्रचारेण दर्शयति। पाकेश्वरस्य दशान्तर्दशानाथस्य, मित्रोच्चोपचयत्रिकोणमदगः बन्धुक्षेत्रगतः उच्चराशिगतः उपचयराशिस्थितः त्रिकोणगः सप्तमगो वा चन्द्रः, सत्फलबोधनानि शुभफलबोधनं शुभफलानुभवं कुरुते। 'चन्द्रः सत्फलमेव करोति' इति वक्तव्ये कुतः 'चन्द्रः सत्फलबोधनानि कुरुते' इत्युक्तमिति चेदुच्यते। न केवलं सत्फलानुभूतिर्भवति किंत्वितरजनदृष्ट्याऽपि सत्फलानुभूतिर्भवतीति दर्शयितुमेवमुक्तम्। अतः उक्तस्थानाद्, अन्यथा अन्यत्र स्थितः चन्द्रः, पापानि अशुभफलं कुरुते। चन्द्रस्य पोषयितृत्वादुक्तस्थानादन्यत्र स्थिते चन्द्रे स्वोच्चगो ग्रहो शुभफलं दातुं न प्रभवति। तथा च सारावल्याम्—

"विपरीतस्थिते चन्द्रे दशादौ पर्यवस्थिते।
स्वोच्चगस्यापि खेटस्य दशा न प्रतिपूजिता ॥" इति।

वृत्तं शार्दूलविक्रीडितम्। सूर्याश्वयतियुतम्। अतश्चन्द्रचारवशादुक्तशुभाशुभफलानि चन्द्राश्रितभावस्य वक्तव्यानीति सूचितम्। तथा चोक्तम्—

"उक्तेषु राशिषु गतेषु विधोः स भावः
स्याज्जन्मकालभवमूर्तिधनादिभावः।

तत्तत्प्रवृद्धिकृदसौ कथितो नराणां
तद्भावहानिकृदथेतरराशिसंस्थः ॥ इति ॥ १० ॥

अथ दशारम्भकालचन्द्रस्य स्थितिवशाच्छुभाशुभफलमाह—

**प्रारब्धा हिमगौ दशा स्वगृहगे सौख्यार्थमानावहा**
**कौजे दूषयति स्त्रियं बुधगृहे विद्यासुहृद्वित्तदा ।**
**दुर्गारण्यपथालया कृषिकरी सिंहे सितर्क्षेऽन्नदा**
**कुस्त्रीदा मृगकुम्भयोर्गुरुगृहे मानार्थसौख्यावहा ॥ ११ ॥**

इति । हिमगौ चन्द्रे, स्वगृहगे स्वक्षेत्रगते, प्रारब्धा दशा, सौख्यार्थमानावहा आरोग्यसौख्यैश्वर्यबहुमानप्रदा भवति । कौजे चन्द्रे कुजक्षेत्रगते, प्रारब्धा दशा स्त्रियं दूषयति भार्यायाः परपुरुषसंसर्गापवादः मोष्टृत्वाद्यपवादो वा भवेत् । अथवा स्त्रीदोषं करोति स्त्रीनाशमपि करोतीत्यर्थः । तथा च सारावल्याम्—

"कन्यां दूषयति नरः कुजभवने हन्ति वा युवतिम् ॥" इति ।

बुधगृहे चन्द्रे प्रारब्धा दशा विद्यासुहृद्वित्तदा विद्यां शास्त्रज्ञानं मित्रधनप्राप्तिं च करोति । सिंहे कुजे सिंहस्थिते दुर्गारण्यपथालया दुर्गः गिरिः, अरण्यं वनं, पन्थाः मार्गः, तेषु वासं कारयति । तद्दशायां दुर्गारण्यपथावासः संभवतीत्यर्थः । कृषिकरी दुर्गारण्यपथेषु कृषिं कारयति । आकृषिकरी इति वा पदच्छेदः । कृष्यादिसेतुकर्मान्तं कारयतीत्यर्थः । दुर्गेषु दुर्गनिर्माणं गृहनिर्माणं कृषिं च कारयति । अरण्येषु कृषिं पथिषु सेतुकर्म च कारयति ।

"स्त्रीद्वेषी प्रियमांसकाननगः कुप्यत्यकार्ये चिरम्"

इति चन्द्रस्य सिंहस्थितिफलं वक्ष्यति । अतः अरतिर्वाच्या । स्त्रीपुत्रादिभिः कलहश्च वक्तव्यः । यस्मात् सारावल्याम्—

"दुर्गारण्यनिवासं कर्षणगृहकर्मसेतुकर्मान्तम् ।
सिंहे शशी प्रकुरुते स्त्रीपुत्रविवादमरतिं च ॥" इति ।

सितर्क्षे चन्द्रे शुक्रक्षेत्रगते अन्नदा अन्नपानादि ददाति । "अन्नं ब्रह्मेति व्यजानात्" इति कोशपरिगणनेऽप्युक्तान्नमयकोशो अन्नशब्देन गृह्यते । अतोऽन्नमयकोशस्य शरीरस्य सकलविधसौख्यं ददातीत्यर्थः । "युवा स्यात् साधु युवा ध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः ।" इति तैत्तिरीयब्रह्मानन्दवल्ल्युक्तानन्ददायित्वं व्यञ्जितम् । अनेन शुक्रक्षेत्रगते चन्द्रे प्रारब्धा दशा अन्नपानारिविनाशनाद्यतुलं सौख्यं ददातीति वक्तव्यम् । तथा च सारावल्याम्—

"शौक्रेऽन्नपानमतुलं सौख्यं चन्द्रेऽरिनाशं च ।" इति ।

मृगकुम्भयोः मृगे कुम्भे वा चन्द्रे प्रारब्धा दशा कुस्त्रीदा कुत्सितस्त्रीप्रदा भवति । कुस्त्रीशब्देन वृद्धविरूपकुलटादयो गृह्यन्ते । अथवा आ कुस्त्रीदा इति पदच्छेदेनेष्टसंपत्तिः । उक्तं च सारावल्याम्—

"परिणतवयसमरूपां सौरगृहे बन्धकीं वाऽपि"

इति । गुरुगृहे चन्द्रे गुरुगृहे स्थिते प्रारब्धा दशा मानार्थसौख्यावहा भवति। गुरुगृहे "मानार्थसौख्यावहा" इति मानशब्दस्य प्रथमनिवेशनम्। स्वक्षेत्रे "सौख्यार्थमानावहा" इति सौख्यशब्दस्य प्रथमनिवेशनम् । गुरुः पुरुषगृहः चन्द्रः स्त्रीग्रहः । अतः चन्द्रे कुलीरे शोभनस्त्रीलाभोऽपि वक्तव्यः । चन्द्रे गुरुगृहे आज्ञाप्तिश्च निर्देष्टव्येति सूचितम् । तथा चोक्तं सारावल्याम्—

"सौम्यस्त्रीधनलाभः कुलीरगेन्दौ भवेद्दशारम्भे ।" इति ।
"सुखधनमानाज्ञाप्तिं जीवगृहे दिशति शीतांशुः ।" इति च ।

अथवा 'गुरुगृहे सा कर्किवत्पूजिता' इति वक्तव्ये 'मानार्थसौख्यावहा' इति पौनरुक्त्येन कर्किणि मानार्थसौख्यानामन्यतमस्यानुभवः गुरुगृहे चन्द्रे आरब्धदशायां त्रयाणामप्यनुभवो भवतीति सूचितम् ।

"सौख्यार्थमानावहा" इति सौख्यशब्देनारम्भसामर्थ्याद् यस्य कस्यापि शुभदस्य वा अशुभदस्य वा दशा चन्द्रे कर्कटके स्थिते प्रारब्धा चेत्सा दशा सौख्यदैव भवतीति सूचितम् । अन्तर्दशास्वप्येष एव विधिः ।

वृत्तं शार्दूलविक्रीडितम् । सूर्याश्रयतियुतत्वाच्चन्द्रस्य द्वादशराशिषु चारवशात्फलकथने ग्रहदृष्ट्यापि फलविशेषो वक्तव्य इत्यपि सूचितम् । तथा च सारावल्याम्—

"बन्ध्वर्थक्षयरोगाः कुजसौराभ्यां बुधेन पाण्डित्यम् ।" इति ।

अनेन वृत्तेन द्वादशराशिषु सप्तग्रहाणामन्यतमस्य पाकेश्वरस्य चारवशादपि फलं वाच्यमिति सूचितम् । तथा च मन्त्रेश्वरः—

"पाकप्रभुर्गोचरतः स्वनीचं
मौढ्यं यदा याति विपक्षभं वा ।
कष्टं विदध्यात्स्वगृहं स्वतुङ्गं
वक्रं गते सौख्यफलं तदानीम् ॥" इति ।

श्रीपतिश्चाह—

"यावन्ति वर्षाणि दशा च सा स्या-
च्चारक्रमात्तत्र दशापतिः सः ।
यत्र स्थितस्तद्भवनाद्विधोश्च
स्थितेः प्रकल्प्यं सदसत्फलं हि ॥"

इति ॥ ११ ॥

अथ सूर्यदशाफलमाह—

**सौर्या स्वं नखदन्तचर्मकनकक्रौर्याध्वभूपाहवैः**
**तैक्ष्ण्यं धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः ।**
**भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापद-**
**स्त्यागः पापरतिः स्वभृत्यकलहो हृत्क्रोडपीडामयाः ॥ १२ ॥**

इति । सौर्या सूर्यसम्बन्धिन्यां सूर्यस्येत्यर्थः । दशायामन्तर्दशायां वा । नखदन्तचर्मकनकक्रौर्याध्वभूपाहवैः । नखाः व्याघ्रादिनखाः, दन्ताः गजदन्तादयः, चर्म व्याघ्रमृगाद्यजिनम्, कनकं स्वर्णम्, एतेषां क्रयविक्रयेण। क्रौर्यं क्रूरकर्म, अध्वशब्दः अध्वगमनोपलक्षणम्, दूरदेशयात्रेति यावत् । भूपशब्दः भूपसेवापरः, आहवः युद्धम्, एतैश्च स्वं धनं भवतीति शेषः । तैक्ष्ण्यं क्षिप्रकारित्वं, धैर्यं धियं राति इति धीरः, तस्य भावः शुभाशुभप्राप्तौ औदासीन्येन वर्तित्वम् । अजस्रं सर्वदा उद्यमरतिः उत्साहशीलत्वम् । ख्यातिः यशः । प्रतापोन्नतिः नामश्रवणमात्रेणारीणां भयोत्पादकत्वं प्रतापः तस्य औन्नत्यम् । एतानि शुभफलानि सूर्यदशायां भवन्ति । एवं शुभफलदस्य सूर्यस्य फलविशेषमुक्त्वा अनिष्टफलदस्य वक्तव्यान्यनिष्टफला-न्याह । भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवाः । भार्या कलत्रम् । पुत्राः धनम् । अरयः शत्रवः । शस्त्राणि आयुधानि । हुतभुक् अग्निः । भूपाः नृपाः । एतैर्निमित्तैः व्यापदः आपदः भवन्ति । त्यागः सङ्गराहित्यम् । पापरतिः पापकर्मसु प्रीतिः । स्वभृत्यकलहः स्वभृत्यैः कलहः । हृत्क्रोड-पीडामयाः हृदयपीडारोगाः जठरपीडारोगाश्च जायन्ते । भार्यापुत्रधनानां नाशः, शत्रुशस्त्राग्निनृपेभ्यो भयम्, त्यागादयः, हृदयरोगः, जठररोगश्च जायन्त इति भावः । 'चर्मे'त्युक्त्या सूर्यस्य त्वग्दोषकारकत्वं 'हृत्क्रोडामयाः' इति निर्देशेन हृत्क्रोडरोगकारकत्वं च सूचितम् । "संज्ञाध्याये यस्य

यद्द्रव्यमुक्तं कर्माजीव" इति श्लोकोक्तप्रकारेणास्थिस्रुतिः पित्तोष्णादि-निमित्तकामयाश्चापि रोगचिन्तायां सूर्यस्य वक्तव्याः । तथा च मन्त्रेश्वरः—

" पित्तोष्णज्वरतापदेहतपनापस्मारहृत्क्रोडज-
व्याधीन्वक्ति रविर्दृगार्त्यरिभयं त्वग्दोषमस्थिस्रुतिम् ।
काष्ठाग्न्यस्त्रविषार्तिदारतनयव्यापच्चतुष्पाद्भयं
चोरक्ष्मापतिधर्मदेवफणभृद्भूतेशभूताद्भयम् ॥ " इति ।

" सूर्यकाष्ठ " इत्यादयोऽप्यत्र योज्याः ।

वृत्तं शार्दूलविक्रीडितम् । सूर्याश्रयतियुतम् । अनेन द्वादशभाव-स्थित्या द्वादशभावाधिपत्यवशात् सप्तग्रहाणां योगदृष्टिवशाच्चापि तत्तद्दशायां फलानि वक्तव्यानीति सूचितम् । उक्तं च—

" केन्द्रेशस्य सतोऽसतोऽशुभशुभौ कुर्याद्दशाकोणपाः
सर्वे शोभनदास्त्रिवैरिभवपा यद्यप्यनर्थप्रदाः । "

" करोति यद्भावगतस्य पाके
तद्भावजन्यं त्वशुभं शुभं वा ।
शुभं शुभव्योमचरस्य पाके
पापस्य पापेऽप्यशुभं वदन्ति ॥ "

" सौम्यान्वितग्रहदशातिशुभप्रदा स्यात्
पापान्वितस्य विफलं परिपाककाले ।
मिश्रग्रहेण सहितस्य दशापहारे
मिश्रं फलं भवति मिश्रफलान्वितस्य ॥ " इति ।

एतदुत्तरषट्श्लोकेष्वपि योज्यम् ।

सप्तग्रहाणां राहुकेत्वोरपि द्वादशस्वपि भावेषु संज्ञाध्यायोक्तगुण-द्रव्यदेवतादिभिस्तत्र तत्र सूचितव्रणादिकारकत्वेनात्रोक्तफलानि यथासम्भवं

युक्त्या विचिन्त्य वक्तव्यानीति सूचयितुं चाचार्येण दशाफलानि शार्दूल-विक्रीडितेनोक्तानि ॥ १२ ॥

अथ चन्द्रदशाफलमाह—

**इन्दोः प्राप्य दशां फलानि लभते मन्त्रद्विजात्युद्भवा-**
**नीक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः ।**
**निद्रालस्यमृदुद्विजामररतिः स्त्रीजन्म मेधाविता**
**कीर्त्यर्थोपचयक्षयौ च बलिभिर्वैरं स्वपक्षेण च ॥ १३ ॥**

इति । इन्दोः दशां मूलदशामन्तर्दशां वा प्राप्य मन्त्रद्विजात्युद्भवानि मन्त्रोद्भवानि दक्षिणादीनि, द्विजात्युद्भवानि ब्राह्मणोद्भवानि च फलानि धनानि च लभते । तथैव इक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः इक्षुविकाराः गुडशर्करादयः, क्षीरविकाराः दधिघृतादयः, वस्त्राणि त्वक्फलकृमिरोमजरूप-चतुर्विधवस्त्राणि, कुसुमानि पुष्पाणि । अथवा कु इति कुङ्कुमोपलक्षणं, सु इति सुमोपलक्षणं, म इति इतरमण्डनद्रव्योपलक्षणम् , एवं कुसुमानि इति शब्दः कुङ्कुमपुष्पचन्दनादीनां ग्राहकः । क्रीडा क्रीडादयः । तिलं तैलादिस्नेह-द्रव्याणामुपलक्षणम् । अन्नं ओदनपेयादीनि मोदकादीनि च । श्रमः शरीरव्या-यामः । एतैश्च फलानि धनानि लभते । निद्रालस्यमृदुद्विजामररतिः निद्रा आलस्यं, मृदु मृदुजनाः, द्विजाः, ब्राह्मणाः, अमराः देवाः, एतेषु रतिः प्रीतिः । स्त्रीजन्म स्त्रीप्रसूतिः । मेधाविता मेधावित्वम् । कीर्त्यर्थोपचयक्षयौ च कीर्तिः अर्थः एतयोर्वृद्धिनाशौ च । एतेऽपि चन्द्रदशान्तर्दशासु वक्तव्याः । बलवशाच्छुभाशुभफलानि वक्तव्यानि । पूर्वोक्तप्रकारेण संज्ञाध्यायव्रणकारक-प्रकरणाद्युक्तान्यप्यत्रोक्तैश्च रोगचिन्तायां योज्यानि । आह च मन्त्रेश्वरः—

" निद्रालस्यकफातिसारपिटकाशीतज्वरं चन्द्रमाः
शृङ्ग्यब्जाहतिमग्निमान्द्यमरुचिं योषिद्व्यथाकामिलाः ।

चेतःशान्तिमसृग्विकारमुदकाङ्क्षीतिं च बालग्रहा-
दुर्गाकिंनरधर्मदेवफणभृद्यक्ष्याश्च भीतिं वदेत् ॥ "

इति । वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ १३ ॥

अथ कुजदशाफलमाह—

**भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनं**
**प्रद्वेषः सुतमित्रदारसहजैर्विद्वद्गुरुद्वेषिता ।**
**तृष्णासृग्ज्वरभङ्गपित्तजनिता रोगाः परस्त्रीष्टता**
**प्रीतिः पापरतैरधर्मनिरतिः पारुष्यतैक्ष्ण्यादि च ॥ १४ ॥**

इति । भौमस्य कुजस्य दशायामन्तर्दशायां वा । अरिविमर्दभूपसहजक्षित्याविकाजैः अरिविमर्दः शत्रुजयः, भूपः राजा, सहजाः भ्रातरः, क्षितिः क्षेत्राणि, आविकानि अविभवानि कम्बलादीनि, अजाः, एतैः धनं भवति । तथा सुतमित्रदारसहजैः पुत्रमित्रभार्याभ्रातृभिः प्रद्वेषः अनिमित्तको द्वेषः । विद्वद्गुरुद्वेषिता विद्वज्जनान् गुरूंश्च द्वेष्टुं शीलम् । तृष्णासृग्ज्वरभङ्गपित्तजनिता तृष्णा पिपासा, असृक् रक्तम्, ज्वरः, भङ्गः अभिघातः, पित्तं, एतैः जनिताः रोगाः । परस्त्रीष्टता अन्यभार्यासक्तत्वम्, पापरतैः सह प्रीतिः, अधर्मनिरतिः हिंसाद्यधर्मनिरतत्वम् । पारुष्यतैक्ष्ण्यादि च कटुभाषित्वनिर्घृणत्वादि च । एतानि फलानि च निर्देष्टव्यानि । अत्र प्रथमपादेन शुभफलानि निर्दिष्टानि । इतरैरनिष्टफलानि च । बलवशाच्छुभाशुभे वाच्ये ।

पूर्ववदत्रापि रोगचिन्तायामेतानि योज्यानि । तथा च फलदीपिकायाम्—

" तृष्णासृक्कोपपित्तं ज्वरमनलविषास्त्रार्तिकुष्ठाक्षिरोगान्
गुल्माऽपस्मारमज्जाविहतिपरुषतापामिकादेहभङ्गान् ।

भूपारिस्तेनपीडां सहजसुतसुहृद्वैरियुद्धं विधत्ते
रक्षोगन्धर्वघोरग्रहभयमवनीसूनुरूर्ध्वाङ्गरोगम् ॥"

इति । वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ १४ ॥

अथ बुधदशाफलमाह—

**बौध्यां दौत्यसुहृद्गुरुद्विजधनं विद्वत्प्रशंसा यशो**
**युक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः ।**
**हास्योपासनकौशलं मतिचयो धर्मक्रियासिद्धयः**
**पारुष्यश्रमबन्धमानसरुजा पीडा च धातुत्रयात् ॥ १५ ॥**

इति । बौध्यां बुधस्य दशायामन्तर्दशायां वा । दौत्यसुहृद्गुरुद्विजधनं दौत्येन दूतकर्मनिमित्तकं, सुहृद्भिः मित्रनिमित्तकं, गुरुभिः गुरुनिमित्तकम्, द्विजैः ब्राह्मणनिमित्तकं च धनं भवति । विद्वत्प्रशंसा विद्वज्जनैः प्रशंसा । यशो-युक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः यशः कीर्तिः, युक्तिद्रव्याणि पिटकादयः, सुवर्णं स्वर्णम्, वेसरः अश्वः, मही क्षेत्रम्, सौभाग्यं, सौख्यम्, एतेषामाप्तयः भवन्ति । हास्योपासनकौशलं प्रहसनव्यवहारे सेवायां च कुशलत्वम् । मतिचयः शास्त्रपरिशीलनेन बुद्धेरभिवृद्धिः । धर्मक्रियासिद्धयः धर्मक्रियाः तत्फलानि च भवन्ति । एवं बुधदशायां इष्टफलान्युक्त्वा अनिष्टफलमाह । पारुष्यश्रमबन्धमानसरुजा पारुष्यं वाक्-कटुत्वं, श्रमः भारवहनोद्भवः, बन्धः पारतन्त्र्यम्, मानसरुक् मनस्तापः एतैः पीडा भवति । धातुत्रयाच्च वातपित्तकफात्मकत्रिदोषकोपेन च सन्निपातात्मिका पीडा भवति । एतेऽपि पूर्ववद्रोगचिन्ताविषये योज्याः । तथा च मन्त्रेश्वरः—

"भ्रान्तिं दुर्वचनं दृगामयगलघ्राणोत्थरोगं ज्वरं
पित्तश्लेष्मसमीरजं विषमपि त्वग्दोषपाण्डूामयान् ।

दुःस्वप्नं च विचर्चिकाग्निपतने पारुष्यबन्धश्रमान्
गन्धर्वक्षितिहर्म्यवाहिभिरपि ज्ञो वक्ति पीडां ग्रहैः ॥"

इति । वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ १५ ॥

अथ गुरुदशाफलमाह—

**जैव्यां मानगुणोदयो मतिचयः कान्तिः प्रतापोन्नतिः**
**माहात्म्योद्यममन्त्रनीतिनृपतिस्वाध्याययज्ञैर्धनम् ।**
**हेमाश्वात्मजकुञ्जराम्बरचयः प्रीतिश्च सद्भूमिपैः**
**सूक्ष्मोहागमनैपुणं श्रवणरुग्वैरं विधर्माश्रितैः ॥ १६ ॥**

इति । जैव्यां गुरोर्दशायामन्तर्दशायां वा । मानगुणोदयः मानस्य बहुमानस्य गुणानां चोदयः उत्कर्षः । मतिचयः शास्त्रोपस्कृतबुद्धिवृद्धिः । कान्तिः मनोहरत्वम् । प्रतापोन्नतिः प्रतापस्य वृद्धिः । माहात्म्योद्यममन्त्रनीतिनृपति-स्वाध्याययज्ञैः माहात्म्यं महात्मनो भावः, उद्यमः व्यवसायः, मन्त्राः वेदेषु शैववैष्णवाद्यागमेषु च प्रसिद्धाः मन्त्राः, नीतिः चाणक्यादिकृतनीतिशास्त्राणि, नृपतिः राजा, स्वाध्यायः वेदाभ्यासो जपश्च, यज्ञाः अग्निष्टोमवाजपेयादि-यागाः, एतैः धनं भवति । हेमाश्वात्मजकुञ्जराम्बरचयः हेम स्वर्णम्, अश्वाः, आत्मजाः पुत्राः, कुञ्जराः गजाः, अम्बराणि वस्त्राणि, एतेषां चयः वृद्धिर्भवति । सद्भूमिपैः शीलसंपन्नैर्नृपैः । प्रीतिः संमानेनामोदः भवति । सूक्ष्मोहागमनैपुणं सूक्ष्माणां दुरवबोधानां ऊहेषु आगमेषु च नैपुणं कौशलं भवति । अथानिष्टफलमुच्यते । श्रवणरुक् कर्णरोगः कर्णरोगस्य कफ-मूलतया कफनिमित्तकरोगा वाच्याः । विधर्माश्रितैः धर्ममर्यादामतिक्रान्तैः सह, वैरं विरोधो भवति । उक्तं च मन्त्रेश्वरेण रोगचिन्ताविधौ—

"गुल्मान्त्रज्वरशोकमोहकफजान् श्रोत्रार्तिमोहामयान्
देवस्थाननिधिप्रपीडनमहीदेवेशशापोद्भवम् ।

रोगं किन्नरयक्षदेवफणभृद्विद्याधराद्युद्भवं
जीवः सूचयति स्वयं बुधगुरू तृष्णापचारोद्भवम् ॥"

इति । वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ १६ ॥

अथ शुक्रदशाफलमाह—

**शौक्र्यां गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बर-**
**स्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः ।**
**कौशल्यं क्रयविक्रये कृषिनिधिप्राप्तिर्धनस्यागमो**
**वन्यव्याधनिषादधर्मरहितैर्वैरं शुचः स्नेहतः ॥ १७ ॥**

इति । शौक्र्यां शुक्रस्य दशायामन्तर्दशायां वा । गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बरस्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः । आगमशब्दः प्रत्येकं योज्यः । गीतरतिप्रमोदागमः गीतशब्देन गीतनृत्तवादित्रा गृह्यन्ते, रतिः कामशास्त्रोक्तबहुप्रकारस्त्रीपुरुषसंप्रयोगः, एताभ्यां गीतरतिभ्यां प्रमोदागमः आनन्दप्राप्तिर्भवति । सुरभिद्रव्याणां चन्दनकर्पूरकस्तूरिकादीनाम् आगमः । अन्नपानयोः रसनेन्द्रियतोषकरयोः स्वाद्वन्नपानयोः आगमः । अम्बरस्य वस्त्रस्य आगमः । स्त्रिय आगमः कलत्रसंप्राप्तिः । द्युतेः कान्तेः आगमः । मन्मथोपकरणानां पर्यङ्कशयनोपधानताम्बूलादीनाम् आगमः । ज्ञानस्य मन्मथोपकरणज्ञानस्य काव्यनाटकादिज्ञानस्य आगमः । इष्टमित्राणां स्निग्धानां बन्धूनां च आगमः भवति । क्रयविक्रये वाणिज्ये कौशल्यं कुशलता । कृषिनिधिप्राप्तिः कृषिः कृषिकर्म तस्माद्धनस्य निधेश्च प्राप्तिः । अनिष्टफलमाह । वन्यव्याधनिषादधर्मरहितैः । वन्याः वनचराः, व्याधाः, निषादाः हीनजातयः, धर्मरहिताः धर्महीनाः पाषण्डादयः, एतैः वैरं विरोधो भवति । स्नेहतः स्नेहनिमित्तात् शुचः शोकाश्च जायन्ते । बन्धुमित्रवियोगो भवतीति भावः । उक्तं च रोगनिर्णयावसरे मन्त्रेश्वरेण—

"पाण्डुश्लेष्ममरुत्प्रकोपनयनव्यापत्प्रमेहामयान्
गुह्यस्यामयमूत्रकृच्छ्रमदनव्यापत्तिशुक्रस्तुतिम् ।
वारस्त्रीकृतदेहकान्तिविहतिं शोषामयं योगिनीं
यक्षीमातृगणाद्भयं प्रियसुहृद्भङ्गं सितः सूचयेत् ॥

इति । वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ १७ ॥

अथ शनिदशाफलमाह—

**सौरीं प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयः**
**श्रेणीग्रामपुराधिकारजनिता पूजा कुधान्यागमः ।**
**श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा**
**भृत्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यङ्गताम् ॥१८॥**

इति । सौरीं शनिसम्बन्धिनीं दशामन्तर्दशां वा प्राप्य । खरोष्ट्रपक्षिमहिषी-वृद्धाङ्गनावाप्तयः खराणां उष्ट्राणां, पक्षिणां महिषीणां, वृद्धस्त्रीणां च अवाप्तयः लाभाः भवन्ति । श्रेणीग्रामपुराधिकारजनिता श्रेणी शिल्प्यादि-समानजातीयानां संहतिः ।

"कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।"

इत्यमरः ।

"कारुः शिल्पिप्रभृतीनां निवहः श्रेणिरुच्यते ।"

इति व्यवहारनिर्णयोद्धृतकात्यायनवचनं च । कर्माजीवे आचार्येणापि— "सौरांशे श्रमवधभारशिल्पैः" इति शनिना शिल्पिनिमित्तार्थागमं वक्ष्यति । "कृदिकारादक्तिनः" इति क्तिन्प्रत्ययान्तवर्जं सर्वेभ्योऽपि कृदिकारेभ्यो विभाषया ङीष्विधानात् श्रेणी । ग्रामः पुरः एतेषु अधिकारजनिता पूजा भवति । श्रेण्यधिकारेण ग्रामाधिकारेण पुराधिकारेण वा पूजितो भवति ।

कुधान्यागमः कुत्सितधान्यनिमित्तक आगमः लाभो भवति। अथवा उच्चादिबलयुक्तस्य गुरुदृष्टस्य शनेर्दशायां खरोष्ट्राणां युद्धोपयोगिवाहनानां खरपक्षिणां विमानानां च आगमः भवति। खरोष्ट्रशब्दो गजाश्वादीनामपि ग्राहकः। महिष्याः आगमः। महिषीशब्दो राजमहिषीपरः। वृद्धाङ्गस्य वृद्धस्य अङ्गस्य मनसः आगमो भवति। ज्ञानवृद्धो भवतीत्यर्थः। नावां आगमो भवति। श्रेणीग्रामपुराधिकारजनितायाः पूजायाः आगमो भवति। जनसम्मतो राजा भवतीत्यर्थः। कु धान्यागमः। कोः भूमेः धान्यानां च आगमो भवति। पाण्डित्येनार्थैश्च युक्तो जनकीयनेता सम्राट् च भवतीति सारः।

अनिष्टफलान्याह। श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमाः। श्लेष्मणा कफेन, ईर्ष्यया अक्षान्त्या, अनिलेन वातेन, कोपेन अनुचितकोपेन, मोहेन अज्ञानेन, मलिनेन मोषणादिनीचकर्मणा च, व्यापत्तिः आपद्, तन्द्री निद्राया आदावन्ते च यदालस्यं तत्, श्रमश्च एते भवन्ति। भृत्यापत्यकलत्रभर्त्सनमपि भृत्येभ्यः अपत्येभ्यः कलत्रेभ्यश्च भर्त्सनं तर्जनं व्यङ्गतां च अङ्गच्छेदं च प्राप्नोति। अनेन शनेरङ्गवैकल्यकारकत्वं सूचितम्। रोगनिर्णयाध्याये मन्त्रेश्वरश्चाह—

"वातश्लेष्मविकारपादविहतिं चापत्तितन्द्राश्रमान्
भ्रान्तिं कुक्षिरुगन्तरुष्णभृतकध्वंसं च पार्श्वाहतिम्।
भार्यापुत्रविपत्तिमङ्गविहतिं हृत्तापकर्मात्मजो
वृक्षाश्मक्षतिमोहकश्मलगणैः पीडा पिशाचादिभिः॥" इति।

"भौमस्य" इति कुजदशाफलकथने निर्देशात् अत्र "सौरीम्" इति निर्देशाच्च शार्दूलविक्रीडितेन वृत्तेन राहुकेत्वोरपि तत्तत्स्वभावादिवशात् शनिवद्राहुः कुजवत्केतुरिति न्यायेन च रोगादिनिर्णयः कार्यः। एवं राहोः

सर्पपिशाचविषादिभयं केतोः गुरुतुल्यत्वाच्च ब्रह्मक्षत्रविरोधादि च वक्तव्यम् । सौरीमिति निर्देशात् मान्दितोऽपि वक्तव्यम् । तस्यापि सर्पाकृतित्वाद्विषं वाच्यम् । 'व्यङ्गताम्' इति विगताङ्गतया प्रेतः निर्दिष्टः । एवं मान्देः प्रेतपीडाऽपि वाच्या । तथा च मन्त्रेश्वरः—

"स्वर्भानुर्हृदि तापकुष्ठविमतिं व्याधिं विषं कृत्रिमं
पादार्तिं च पिशाचपन्नगभयं भार्यातनूजापदम् ।
ब्रह्मक्षत्रविरोधशत्रुजभयं केतुस्तु संसूचयेत्
प्रेतोत्थं च भयं विषं च गुलिको देहार्तिमाशौचजम् ॥" इति ।

राहुकेत्वोर्दशाफलमप्येवमेव चिन्त्यम् ॥ १८ ॥

अथ दशाफलानां विषयविभागं लग्नदशाफलं चाह—

**दशासु शस्तासु शुभानि कुर्व-**
**न्त्यनिष्टसंज्ञास्त्वशुभानि चैव ।**
**मिश्रासु मिश्राणि दशाफलानि**
**होराफलं लग्नपतेः समानम् ॥ १९ ॥**

इति । शस्तासु संपूर्णपूर्णरोहिणीसंज्ञासु दशासु ग्रहाः शुभान्येव उक्तफलेषु शुभफलान्येव कुर्वन्ति नेतराणि । अनिष्टसंज्ञासु रिक्तानिष्टफलावरोहिणी-संज्ञितासु दशासु अशुभानि च उक्तफलेषु अशुभफलान्येव कुर्वन्ति नेतराणि । मिश्रासु मध्यामिश्रफलासंज्ञितासु दशासु मिश्राणि शुभाशुभफलानि संकीर्णानि कुर्वन्ति । अधमदशायां शुभफलस्याल्पत्वं वाच्यम् । होराफलं होरायाः लग्नस्य फलं दशाफलं लग्नपतेः लग्नाधिपदशायाः समानं भवति । एवं योगारिष्टा व्याख्याताः ।

वृत्तं इन्द्रवज्रोपेन्द्रवज्रामिश्रा मालाख्या उपजातिः । अनेन सजातीयप्रदीप्तादिसंज्ञानुरूपाण्यपि दशाफलानि भवन्तीति सूचितम् ।

दशानां शुभाशुभमिश्रविभागेन दशा अपि पूर्वमध्यान्त्यात्मकभागत्रयाश्रित-शुभाशुभफलप्रदा भवन्तीति सूचितम्। तथा च जातकपारिजाते—

"दशादौ दिननाथस्य पितृरोगं धनक्षयम्।
सर्वबाधाकरं मध्ये दशान्ते सुखमाप्नुयात्॥" इति।

"आदौ भावफलं मध्ये राशिस्थानफलं विदुः।
पाकावसानसमये चाङ्गजं दृष्टिजं फलम्॥"

"भूनन्दनस्य पाकादौ मानहानिर्धनक्षयः।
मध्ये नृपाग्निचोराद्यैर्भीतिश्चान्ते तथा भवेत्॥" इति।

"दशादौ दुःखमाप्नोति दशामध्ये महत्सुखम्।
दशान्ते फणिनाथस्य पितृनाशं पदच्युतिम्॥" इति।

"दशादौ गुरुबन्ध्वार्तिं दशामध्ये धनायतिम्।
दशान्ते सुखमाप्नोति केतोर्दायफलं त्रिधा॥" इति।

अत्राऽन्तर्दशाफलानामनुक्त्या "एकर्क्षगोऽर्धमपहृत्य ददाति तु स्वम्" इत्यन्तर्दशानाथस्य दशानाथादपहृत्य स्वफलप्रदत्वकथनाच्च दशान्तर्दशयोस्तुल्यफलत्वाद् दशाशब्देन मूलदशा अन्तर्दशा च गृह्येते।

दशासु मूलदशासु अन्तर्दशासु च शस्तासु शुभान्येव कुर्वन्ति। मूलदशासु अन्तर्दशासु च अनिष्टसंज्ञासु अशुभान्येव कुर्वन्ति। तथा च सारावल्याम्—

"अन्तर्दशा शुभायां मूलदशायां शुभा यदा भवति।
भवति तदा बहुसौख्यं धनलब्धिरतीव पुरुषाणाम्॥"

"क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशां यदा कुरुते।
पुंसः स्यात्सन्देहस्तदारियोगः सदैव महान्॥" इति।

दशासु शस्तासु शुभानि कुर्वन्ति। दशानाथा ग्रहाः शस्तासु शुभयोगवीक्षणादियुक्तासु दशासु स्थितेषु। प्रवेशसमये इत्यर्थाल्लब्धम्।

शुभानि कुर्वन्ति इत्येको योगारिष्टभङ्गः । दशासु शस्तासु सत्सु अन्तर्दशाधिपेषु बलहीनेष्वपि शुभानि कुर्वन्तीत्यपरो योगारिष्टभङ्गः ।

अनिष्टसंज्ञाश्च शुभाः शस्तासु दशासु अशुभानि निकुर्वन्ति । अनिष्टसंज्ञाः युद्धपराजयादिनाऽनिष्टसंज्ञा अपि शुभाः शुभग्रहाः शस्तासु दशासु स्थिताः स्वोच्चादिशुभसंस्थिताः अशुभानि अशुभफलानि निकुर्वन्ति, न स्वशुभकर्मणां फलं दत्वा व्ययं कुर्वन्ति । अशुभफलानि नाशयन्तीति भावः । एष तृतीयो योगारिष्टभङ्गः । उक्तं च सारावल्याम्—

" प्रवेशे बलवान् खेटः शुभैर्वा सन्निरीक्षितः ।
सौम्याधिमित्रवर्गस्थो मृत्युकृन्न भवेत्तदा ॥
अन्तर्दशाधिनाथस्य विबलस्य दशा यदा ।
बलिनः स्यात्तदा भङ्गो दशाऽरिष्टस्य तद्ध्रुवम् ॥
युद्धे च विजितो योऽसौ खेचरः स शुभो यदि ।
दशायां न भवेत्कष्टं स्वोच्चादिशुभसंस्थिते ॥ " इति ।

अनिष्टसंज्ञासु तत्तद्भावात्कारकाद्वा अनिष्टस्थानभूतसंज्ञेत्यक्षरसंख्यासूचितसप्तमस्थानस्थितानां ग्रहाणां दशान्तर्दशासु अशुभानि तत्तद्भावस्य दोषफलानि वक्तव्यानि । तथा च जातकपारिजाते—

" तत्तद्भावस्य कामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात्तद्युतेक्षककारकैः ॥

इति ॥ १९ ॥

दशाफलकथने वक्तव्यानत्रानुक्तान्विशेषानाह—

**संज्ञाध्याये यस्य यद्द्रव्यमुक्तं**
**कर्माजीवे यस्य यच्चोपदिष्टम् ।**

भावस्थानालोकयोगोद्भवं यत्
तत्तत्सर्वं तस्य योज्यं दशायाम् ॥ २० ॥

इति। संज्ञाध्याये यस्य यस्य ग्रहस्य यद्द्रव्यं "ताम्रं स्यात्" इत्यादि यद्द्रव्यमुक्तम्, तत्सर्वं तस्य ग्रहस्य दशायां योज्यम्। द्रव्यमत्रोपलक्षणमात्रम्। दशाधिनाथस्य गुणवशात्तद्गुणस्योत्कर्षः। उक्तं च जातकपारिजाते—

"सत्त्वादिग्रहपाकभुक्तिसमये तत्तद्गुणो जायते"

इति। देवतावशात्तत्तद्देवतानुग्रहो व्याधिरूपनिग्रहो वा। अत एव रोगविषये सूर्यस्य योगकर्तृत्वे तस्य रुद्रदैवत्याद्भूतेशभूताद्भयं निर्दिष्टम्। द्रव्यशब्देन अन्यशास्त्रेषु कथिता अत्र तत्र सूचिता धातुमूलजीवद्रव्या अपि विवक्षिताः। तत्तद्दशान्तर्दशानां शुभाशुभफलवशात्तत्तद्द्रव्यस्य कर्म वा लाभनाशौ वाच्यौ। दशानाथान्तर्दशानाथयोर्जीवत्वे जीवद्रव्यं वाच्यं मूलत्वे मूलद्रव्यं धातुत्वे धातुद्रव्यं च। दशानाथे जीवे इतरस्य मूलधातुत्ववशात् जीवमूलं जीवधातुर्वा वक्तव्यः। एवं मूलजीवमूलधात्वादयश्चिन्त्याः।

तथा कर्माजीवे यस्य ग्रहस्य यत्कर्म उपदिष्टं "अर्कांशे तृणकनक" इत्यादिनोक्तं तदपि तस्य दशायां योज्यम्। भावस्थानालोकयोगोद्भवम्। भावोद्भवं "शूरः स्तब्धो" इत्यादिफलम्। स्थानोद्भवं "प्रथितश्चतुरोऽटनो" इत्यादि, "कुलसमकुलमुख्य" इत्यादि च फलम्। आलोकोद्भवं "चन्द्रे भूपबुधौ" इत्यादिफलानि। योगोद्भवं राजयोगनाभसयोगव्यतिरिक्तानां सर्वेषामपि योगानामुक्तफलं च यत् तत्सर्वं तस्य तत्फलकारकस्य दशायाम् अन्तर्दशायां वा योज्यम्। राजयोगानां "कर्मलग्नयुतपाकदशायां राज्यलब्धिः" इति विधिना पाकदशा वाच्या। नाभसानां तु "नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपि" इति समस्तदशास्वपि फलं योज्यम्।

वृत्तं शालिनी। अनेन दशानाथस्योक्ताः सर्वेऽपि गुणादयस्तत्तद्दशायां

भवन्तीति सूचितम् । अब्धिलोकयतियुतत्वात् दशागुणानुसारेण अब्धिपद-सूचितचतुर्थभावद्योतितक्षेमाय लोकशब्दसूचितसप्तमस्थानद्योतितमारकलक्षण-दोषाय वा भवतीत्यपि व्यञ्जितम् ॥ २० ॥

महाभूतकृतच्छायाभिव्यञ्जकत्वफलमाह—

**छायां महाभूतकृतां च सर्वे-**
**ऽभिव्यञ्जयन्ति स्वदशामवाप्य ।**
**कम्ब्वग्निवाय्वम्बरजान् गुणांश्च**
**नासास्यदृक्त्वक्छ्रवणानुमेयान् ॥ २१ ॥**

इति । सर्वे ग्रहाः स्वदशामवाप्य स्वां स्वीयां महाभूतकृतां "शिखिभूख-पयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण" इत्युक्तस्वस्वभूतकृतां छायां कान्तिं अभिव्यञ्जयन्ति । सर्वे इति निर्देशात्सूर्यचन्द्रावप्येवं कुरुत इत्य-वगन्तव्यम् । "वह्न्यम्बु" इति देवताप्रकरणे तयोः अग्न्यात्मकत्वं जलात्मकत्वं च स्फुटं दर्शितम् । एवं सूर्यकुजौ आग्नेयीं छायामभिव्यञ्जयतः । चन्द्रशुक्रौ आप्यां छायामभिव्यञ्जयतः । बुधः पार्थिवीं छायामभिव्यञ्जयति । गुरुः नाभसीं छायामभिव्यञ्जयति । शनिः वायवीं छायामभिव्यञ्जयति । उक्तं च छायालक्षणमाचार्येण संहितायाम्—

"छाया शुभाशुभफलानि निवेदयन्ती लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रतिभासयन्ती दीपप्रभा स्फटिकरत्नघटस्थितेव ॥
स्निग्धद्विजत्वङ्नखरोमकेशच्छाया सुगन्धाथ महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृद्धिम् ॥
स्निग्धा सिता सहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।

सर्वार्थसिद्धिजननी जननीव चाप्या
छाया शुभा तनुभृतां फलमादधाति ॥
चण्डा धृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयी च प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥
मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताऽप्युदारा
निधिरिव गगनोत्था श्रेयसे स्वच्छवर्णा ॥" इति ।

शरीरे तेजस आधिक्येन, शक्तिमत्तया, आतपाग्निभ्यामक्षीणत्वेन च कुजरव्योरन्यतरस्य दशोह्या । तत्राप्ययं विवेकः कार्यः । रविदशायां रात्रौ भयं निशान्धत्वं नयनदौर्बल्यं भवनाद्बहिः सञ्चारानौत्सुक्यं च भवन्ति । कुजदशायां तु रात्रौ मनसः प्रसन्नता, बहिःप्रदेशसञ्चारोत्सुकता, मोषणाभिलाषा च जायन्ते । तथैव स्थलजरसप्रियत्वेन शुक्रदशा जलजरसप्रियत्वेन चन्द्रदशा चोह्या । एतत् सर्वं नष्टजातकगणने प्रयोजनवत् ।

नासास्यदृक्त्वक्छ्रवणानुमेयान् नासिकया, रसनेन्द्रियेण, नयनेन, त्वचा, श्रोत्रेण, च अनुमेयान्, क्ष्म्ब्वग्निवाय्वम्बरजान् पृथिव्यप्तेजोवाय्वाकाशजान् गुणान् गन्धरसरूपस्पर्शशब्दान् गुणांश्च अभिव्यञ्जयन्ति । यथा आदित्यदशायां बलवतः आदित्यस्य गृहे स्थितस्य दशायां वा नयनानुमेयरूपावाप्तिः । एवं कुजस्य च चन्द्रस्य दशायां शुक्रस्य दशायां वा जिह्वानुमेयगुणानां संभवः । बुधस्य दशायां नासानुमेयद्रव्यलाभः । गुरोः श्रोत्रानुमेयवचनलब्धिः । शनिदशायां त्वगनुमेयस्पर्शोपलब्धिः ।

अनेन जातकाभावे छाययाऽपि दशानाथस्य निर्णयः कर्तुं शक्यते । यथा सुगन्धवत्त्वाद् गन्धद्रव्यादिलेपनस्पृहया च बुधकृता पार्थिवा छाया

ऊह्या। मनोज्ञरूपाद् आदित्येन वा कुजेन वा कृता आग्नेयी छाया। मृष्टरसभोजनप्रियत्वात् शुक्रेण वा चन्द्रेण वा कृता आप्या छाया। मृदुस्पर्शवत्वात् मृदुस्पर्शाभिरत्या च शनिकृता वायवी छाया। मृदुभाषित्वात् गीतवादित्राद्यभिरुच्या च गुरुकृता नाभसी छाया च ऊह्या। एवं छायां निर्णीय दशानाथोऽपि युक्त्या निर्णेतव्यः।

अर्थान्तरस्याऽपि ध्वनिः। सर्वे महाभूतकृतां महाभूतगुणितां छायां स्वदशामवाप्याभिव्यञ्जयन्ति। का मे दशा इति प्रश्ने प्रश्नकालच्छायां अङ्गुलानि कृत्वा महाभूतेत्यक्षरसङ्ख्यासूचितैः पञ्चाशीतियुक्तैश्चतुष्षष्टिशतैः (६४८५) गुणित्वा ग्रहसङ्ख्यया हृत्वा शिष्टेन रव्यादिक्रमेण दशां वदेदिति सारः। उडुदशापक्षे नवभिर्हृत्वा शिष्टेन चन्द्रकुजराह्वादीनां वदेत्।

कम्ब्वग्निवाय्वम्बरजान् गुणांश्च। "पूर्वार्धे विषयादयः कृतगुणाः" इति पूर्वमेवोक्तम्। अतो मेषादिकन्यान्तं क्रमेण मीनादितुलान्तं व्युत्क्रमेण च गन्धरसरूपस्पर्शशब्दमनांसि कल्पयित्वा प्रश्नकालोदितराशिगुणवशात्ततस्तदाश्रितदशां वदेत्। उदयराशौ मनसि चन्द्रस्य शुक्रस्य वा दशा भवति। बलाबलवशाद्विवेकः कार्यः।

वृत्तमिन्द्रवज्रा। त्रिष्टुप्छन्दः। अनेन भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचकपशुपक्षिस्वभावयुतानामेकादशविधानां पुरुषाणां मध्ये सुरसत्वस्य गुरुदेवताकखप्रकृतिकस्य च श्रैष्ठ्यं व्यञ्जितम्। उक्तं चाऽऽचार्येण संहितायामेष विभागः—

"महीस्वभावः शुभपुण्यगन्धः सम्भोगवान् सुश्वसनः स्थिरश्च।
तोयस्वभावो बहुतोयपायी प्रियाभिलाषी रसभोजनश्च॥
अग्निप्रकृत्या चपलोऽतितीक्ष्णः चण्डः क्षुधालुर्बहुभोजनश्च।
वायोः स्वभावेन चलः कृशश्च क्षिप्रं च कोपस्य वशं प्रयाति॥
खप्रकृतिर्निपुणो विवृतास्यः शब्दगतेः कुशलः सुषिराङ्गः।

त्यागयुतः पुरुषो मृदुकोपः स्नेहरतश्च भवेत्सुरसत्त्वः ॥"
मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः ।
संविपाकशीलवान् नित्यमेव मानवः ॥
तीक्ष्णप्रकोपः खलचेष्टितश्च पापश्च सत्त्वेन निशाचराणाम् ।
पिशाचसत्त्वश्चपलोऽमलाक्तो बहुप्रलापी च समुल्बणाङ्गः ॥
भीरुः क्षुधालुर्बहुभुक् च यः स्याज्ज्ञेयः स सत्त्वेन नरस्तिरश्चाम् ।
एवं नराणां प्रकृतिः प्रदिष्टा यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम् ॥"

इति ॥ २१ ॥

दशाकालवशात् फलं भुञ्जानस्यावस्थां प्राह—

**शुभफलददशायां तादृगेवान्तरात्मा**
**बहु जनयति पुंसां सौख्यमर्थागमञ्च ।**
**कथितफलविपाकैस्तर्कयेद्वर्तमानां**
**परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः ॥ २२ ॥**

इति । शुभफलददशायां शुभफलप्रदातुः ग्रहस्य दशायां, अन्तरात्मा तद्दशाफलमनुभवतः पुरुषस्य अन्तरात्माऽपि, तादृक्शुभफलप्रदाता ग्रहः यादृक् तादृग्भवति । "राजानौ रविशीतगू" इत्युक्तप्रकारेण रविचन्द्राभ्यां राजसदृशः गुरुशुक्राभ्यां मन्त्रिसदृशः इत्यादि च भवति । पुंसां सौख्यं अर्थागमं च धनलाभं च दशानाथः बहु जनयति । अशुभफलदातुर्दशायां नीचतुल्यत्वं सौख्यहानिरर्थनाशश्च जायन्त इत्यपि सूचितम् । शुभफलदशायां पौरुषप्राप्तिर्जायते । अशुभफलदशायां पौरुषहानिश्च जायत इति भावः ।

वृत्तं मालिनी । अस्य षष्टिसंख्याकैरक्षरैः षष्टिनाडीयुक्तनक्षत्रवशाद्गणनीयोडुदशा भोगिलोकयतिना अष्टदशायुक्तपैण्ड्यादिदशाः सप्तग्रहयुता कालचक्रदशा च स्मारिताः । अथवा "शुभफलददशायां"

इत्यत्र शुभानां "शु" इत्यक्षरसंख्यया पञ्च "भ" इति चत्वारि सङ्कलनेन नव भवति। अतः नवानामित्यर्थः। नवानां ग्रहाणां फलं शुभफलं तद्ददाति इति शुभफलदा सा दशा। एवं शुभफलददशा उडुदशा भवति। उक्तफलं सर्वविधदशास्वपि योज्यमिति सारः।

शुभफलददशायामित्यत्र शुभशब्दः नवमभावपरः। अथवा शु इत्यक्षरसङ्ख्यया सूचितपञ्चमभावपरो वा। भ इति राशिरत्र भावपरः। पञ्चमनवमभावफलददशायां सौख्यमर्थागमं च ग्रहाः जनयन्तीत्युडुदशाफलनिर्णयावसरे त्रिकोणाधिपानां शुभदत्वं सूचितम्।

कथितफलविपाकैः उक्तफलपक्तिलक्षणैः वर्तमानां दशां तर्कयेत्। महाभूतकृतच्छायया तत्कालदशा ऊह्येत्यर्थः।

स्वप्ने मनोराज्ये वा फलोक्तिः परिणमति। यथा वह्नेर्धूमोद्भवस्याऽऽर्द्रेन्धनसंयोगः कारणं भवति तथा दशायां फलपक्तेर्दृश्यत्वस्य ग्रहाणां वीर्यवत्वं कारणं भवति। एवं दशाफलानां नित्यत्वमदृश्यत्वकारणं च दर्शितम्। नाटकादावभिनयेनापि राजयोगादीनां फलपक्तिर्भवतीति च द्योत्यते। स्वप्नादिगतानुभवेनापि दशा निर्णेतव्येति भावः। स्वप्नचिन्ता स्ववीर्यैरिति ग्रहाणां स्वप्नाद्यवस्थाः स्वस्वबलाबलवशाद्भवन्तीति सूचितत्। अतः फलपक्तिश्च तदवस्थानुगुणकाले भवति। स्वप्नाद्यवस्थागतग्रहाः जातकिनः स्वप्नाद्यवथास्वेव फलं ददतीति भावः। तथा च जातकपारिजाते—

"स्वोच्चांशं स्वनवांशं च जागरूकं वदन्ति हि।
सुहृन्नवांशकः स्वप्नं सुप्तं नीचारिभांशकम्॥"

इति॥ २२॥

अथ तुल्यबलयोः फलयोर्विरोधं परिहरति—

**एकग्रहस्य सदृशे फलयोर्विरोधे**
**नाशं वदेद्यदधिकं परिपच्यते तत्।**

**नान्यो ग्रहः सदृशमन्यफलं हिनस्ति**
**स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः ॥ २३ ॥**

इति । एकग्रहस्य सदृशे फलयोर्विरोधे । एकस्य ग्रहस्य केनापि निमित्तेन पुष्टिकरत्वं निमित्तान्तरेण हानिकरत्वमस्ति चेत् पुष्टिकरत्वहानिकरत्वयोः नाशं उभयोरपि फलयोर्नाशं वदेत् । यत् यत्फलं, अधिकं आधिपत्यराश्यंशकेक्षणादिभिः अधिकं भवति तत् परिपच्यते दशायां दृश्यते । एकग्रहस्य फलविरोधस्य परिहारमुक्त्वा भिन्नयोर्ग्रहयोः फलविरोधं परिहरति । अन्यो ग्रहः सदृशं तुल्यबलं, अन्यफलं अन्यग्रहकृतविरोधफलं, न हिनस्ति न नाशयति । स्वां स्वां दशामुपगताः ग्रहाः, स्वफलप्रदाः स्वहेतुकशुभाशुभफलप्रदातारः स्युः । शुभफलकर्तुर्दशायां शुभफलावाप्तिः, अशुभफलकर्तुर्दशायामशुभफलावाप्तिरिति भावः । एवं कुजेन वित्तनाशः गुरुणा धनवृद्धिश्च वक्तव्या चेत् कुजदशायां धननाशः गुरुदशायां धनवृद्धिश्च संभवति ।

शुभफलददशायां तादृगेवान्तरात्मा । दैवज्ञस्य अन्तरात्मा प्रश्नसमये प्रष्टुः शुभफलददशायां तादृग्भवति प्रसन्नो भवति । दैवज्ञः स्वमनोवस्थावत्प्रष्टुर्दशागुणं वदेत् । अथवा प्रष्टुः दैवज्ञस्य वा अन्तरात्मा यदा शुभकर्मणि रतस्तदा शुभफलददशां वदेत् । अन्यथाऽशुभफलददशां वदेत् ।

पुंसां अर्थागमश्च इति धर्मार्थकाममोक्षात्मकपुरुषार्था व्यञ्जिताः । अतश्चन्द्रेण धर्मसिद्धिं बुधेनार्थसिद्धिं शुक्रेण कामसिद्धिं गुरुणा मोक्षसिद्धिं च ब्रूयात् ।

वृत्तं वसन्ततिलकम् । मेषवृषौ वसन्तराशी तावत्रोदाहरणेन वक्तव्याविति सूचितम् । यथा मेषलग्नस्य कुजो लग्नाधिपः अष्टमाधिपश्च । तस्मिन् पञ्चमस्थे लग्नाधिपतित्वात् शुभफलं अष्टमाधिपतित्वादशुभफलं वा वाच्यमिति चेदाह । यदधिकं अधिकमिति "अव्ययं विभक्तिसमीप" इति विभक्त्यर्थे अव्ययीभावसमासः । के इत्यर्थः । क इत्यक्षरसंख्यया

एकम् । अतः के इत्यस्य लग्ने इत्यर्थः । यत्फलं लग्ने भवति लग्नाधिपत्येन भवति तत्परिपच्यते । एवं कुजस्य लग्नाधिपतित्वेन पुत्रप्राप्तिरूपशुभफलमेव वाच्यम् । न त्वष्टमाधिपत्यकृतदुष्टफलम् । एवं वृषजातस्य शुक्रस्य लग्नाधिपत्यशुभफलमेव वक्तव्यम् । न तु षष्ठाधिपत्यकृतदुष्टफलम् । कलत्रभावविषये तु तस्माद्व्ययस्थानतया षष्ठाधिपत्यदोषस्य प्राबल्यम् "शुक्रे वृश्चिकगे मदे मृतवधूः" इत्यादिना सिद्धम् । एवं तुलावृश्चिकयोश्चापि भवति । अत एवोक्तं फलदीपिकायां भावचिन्ताविधौ—

"यद्भावेष्वशुभोऽपि वोदयपतिस्तद्भाववृद्धिं दिशे-
दुःस्थानाधिपतिः स चेद्यदि तनोः प्राबल्यमन्यस्य न ।
अत्रोदाहरणं कुजे सुतगते सिंहे झषे वा स्थिते
पुत्राप्तिं शुभवीक्षिते झटिति तत्प्राप्तिं वदन्त्युत्तमाः ॥"

इति । पुनरपि एकग्रहस्य सदृशे फलयोर्विरोधे द्विस्थानाधिपत्यनिमित्तकफलविरोधे प्राप्ते यदधिकं यन्मूलत्रिकोणजं तत् परिपच्यते ।

शुभशब्देन अक्षरसंख्यासूचितपञ्चमचतुर्थेशयोः योगः सूचितः । एष योगः केन्द्रकोणेशसंबन्धस्योपलक्षणम् । तद्योगदशायां सौख्यमर्थागमश्च भवतः । 'शुभ' इति निर्देशात् कोणपस्य दशायां केन्द्रेशस्य भुक्तौ योगफलं वाच्यमिति व्यञ्जितम् । उक्तं च—

"स्वदशायां त्रिकोणेशो भुक्तौ केन्द्रपतेः शुभम् ।"

इति । शुभफलददशायां तत्तद्भावात् शुभस्थानभूतत्रिकोणगतत्वेन बलवत्त्वेन शुभत्वेन शुभफलदस्य दशायां तादृगेवान्तरात्मा भवति । सौख्यं बहुजनितं च, अर्थागमं च अर्थः द्वितीयभावः आगमः लाभस्थानं गत इत्यध्याहार्यम् । तत्तद्भावाद्धनलाभस्थानगतश्च तत्तद्भावस्य सौख्यं बहु जनयति । उक्तं च जातकपारिजाते—

" त्रिकोणधनलाभस्था बलिनो यदि शोभनाः ।
स्वदशान्तर्दशाकाले कुर्वन्ति विपुलं सुखम् ॥ "

इति ।

कथितफलविपाकैः "नखचर्म" इत्यादिशुभफलविपाकैः "भार्यापुत्रधनादि" इत्याद्यशुभफलविपाकैश्च, वर्तमानां दशां सूर्यादिदशां, तर्कयेत् शुभाशुभफलैः सम्यक् परामृश्य निश्चिनुयात् । जातकाभावे महाभूतादिकृतच्छायया यथा दशा निर्णीता तद्वत्कथितफलविपाकैस्तु दशानिर्णयः कार्य इत्यर्थः । दशादशाफलयोः वह्निधूमयोरिव व्याप्यव्यापकत्वमनेन व्यञ्जितम् । यत्र यत्र धूमः तत्र तत्र वह्निरस्ति । तद्वद् यत्र यत्र दशाफलं दृश्यते तत्र तत्र दशा अस्त्येव । दशाफलस्यावश्यंभावित्वेऽपि तस्याऽदृश्यत्वकारणमाह । अवीर्यैः ग्रहैः स्वप्नचिन्तासु परिपच्यते । परिपच्यते इति निर्देशात् त्रिकोणफलस्य परिपाकः परिपूर्णपाकत्वम् । इतरस्यार्धफलम् । तथा च मन्त्रेश्वरः—

" द्विस्थानाधिपतित्वमस्ति यदि चेन्मुख्यं त्रिकोणर्क्षजं
तस्यार्धं स्वगृहेऽथ पूर्वमुभयोर्यच्चद्दशादौ वदेत् ।
पश्चाद्भावमिहापरार्धसमये युग्मे गृहे युग्मजं
त्वोजस्थे सति चोजभावजफलं शंसन्ति केचिज्जनाः ॥ "

इति ।

एकग्रहस्य द्विस्थानाधिपत्यात् फलयोर्विरोधे यदधिकं द्वयोः स्वक्षेत्रयोर्यदधिश्रितस्तत्परिपच्यते । एवं कन्यालग्नस्य पञ्चमषष्ठेशशनेः पञ्चमस्थित्या पञ्चमभावस्य वृद्धिरेव । न तु षष्ठाधिपत्यकृतदुष्टफलम् । तथा च मन्त्रेश्वरः—

" दुःस्थानपस्तदितरस्वगृहस्थितश्चेत्
स्वक्षेत्रभावफलमेव करोति नान्यम् ।

मन्दे मृगे सुतगृहे यदि पुत्रसिद्धिः
षष्ठाधिपत्यकृतदोषफलं न चात्र ॥ ”

इति ।

अस्मिन्नध्याये त्रयोविंशतिः श्लोकाः सन्ति । अनेन

“ भूतानि च कवर्गेण चवर्गेणेन्द्रियादयः ।
टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ॥
मनः पकारेणैवोक्तं फकारेण त्वहंकृतिः ।
बकारेण भकारेण महान् प्रकृतिरुच्यते ॥ ”

इति पद्मपुराणवचनेन त्रयोविंशतिमं महत्तत्त्वम्, अत एव महाख्या उडुदशा स्मारिता । एवं महादशायाः प्राबल्यमध्यायान्ते स्फुटीकृतम् । उक्तं च मन्त्रेश्वरेण—

“ भक्त्या येन नव ग्रहा बहुविधैराराधितास्ते चिरं
सन्तुष्टाः फलबोधहेतुमदिशन् सानुग्रहा निर्णयम् ।
ख्यातां तेन पराशरेण कथितां सङ्गृह्य होरागमात्
सारं भूरिपरीक्षयाऽतिफलितां वक्ष्ये महाख्यां दशाम् ॥ ”

इति ॥ २३ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
दशाविपाको नाम अष्टमोऽध्यायः ।

---

श्रीः

# अष्टकवर्गाध्यायः ॥ ९ ॥

आलोक्य वार्धावधवनिं निपातितां हैमाक्षदैत्येन च यो दयाम्बुधिः ।
भूत्वा वराहो विनिहत्य दानवं दधार भूमिं स तनोतु शं हरिः ॥

"परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः"

इति दशाफलस्याऽवश्यंभावित्वस्य कथनेन तस्य दृढकर्मार्जितफलदत्वं प्रदर्श्य, अधुनाऽदृढकर्मार्जितानां कर्मणां फलपाककालद्योतकम् अष्टकवर्गं निरूपयति।

लग्नयुक्तग्रहसप्तकस्य जन्मकालस्थानेभ्यः सप्तग्रहाणां चारवशाद्यत्र यत्र राशौ शुभप्रदत्वं भवति तेषां स्थानानां वर्गः अष्टकवर्गः । तत्रादौ सूर्यचारवशाच्छुभस्थानान्याह—

**स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो**
**वक्रात्स्वादिव तद्वदेव रविजाच्छुक्रात्स्मरान्त्यारिषु ।**
**जीवाद्धर्मसुतायशत्रुषु दश त्र्यायारिगः शीतगो-**
**स्तेष्वेवान्त्यतपःसुतेषु च बुधाल्लग्नात्सबन्ध्वन्त्यगः ॥ १ ॥**

इति । अर्कः स्वाद् जन्मकाले स्वाश्रितराशेः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगः स्वाश्रितराशिं लाभस्थानं, बन्धुस्थानं, अष्टमस्थानं, द्वितीयस्थानं, कर्मस्थानं, नवमस्थानं, सप्तमस्थानं वा प्राप्तः शुभः भवतीति शेषः । "स्वाच्छुभः" इति तृतीयश्लोकस्थशुभशब्देनान्वयः । वक्रात् कुजात्

कुजाश्रितराशेः स्वादिव प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगः शुभफलप्रदो भवति। रविजात् शनेः, तद्वदेव प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगः शुभफलप्रदः, एवं सूर्यः स्वात् कुजात् शनेश्च उक्तेषु नवसु स्थानेषु चारगत्या सञ्चरति सति शुभप्रदो भवति। शिष्टेषु त्रिषु स्थानेषु अशुभो भवति। शुक्रात् स्मरान्त्यारिषु सप्तमव्ययशत्रुस्थानेषु शुभदः। इतरेषु नवसु स्थानेषु अशुभः। जीवाद् गुरोः धर्मसुतायशत्रुषु उक्तचतुर्षु स्थानेषु शुभः। इतरेषु अष्टासु स्थानेषु अशुभः। शीतगोः दशत्र्यायारिगः चतुर्षु उपचयस्थानेषु शुभः। शिष्टेषु अष्टासु स्थानेषु अशुभः। बुधात् तेष्वेव उपचयस्थानेषु अन्त्यतपस्सुतेषु च द्वादशनवमपञ्चमस्थानेषु च शुभः। एवं बुधात् सप्तसु स्थानेषु शुभः। शिष्टेषु पञ्चसु स्थानेष्वशुभः। लग्नात् तेष्वेव उपचयेषु सबन्ध्वन्त्यगः बन्धुव्ययस्थानगतश्च शुभो भवति। लग्नात् षट्सु स्थानेषु सूर्यः शुभः। इतरेषु षट्सु स्थानेष्वशुभः।

एवमादित्यः अष्टचत्वारिंशत्स्थानेषु शुभः, अष्टचत्वारिंशत्स्थानेष्वशुभः। आहत्य षण्णवतिविधफलप्रद इति सूचितम्। इतरेषां ग्रहाणामप्येवमेव।

वृत्तं च शार्दूलविक्रीडितम्, सूर्याश्वयतियुतम्। अनेन द्वादशराश्यात्मकलग्नसहितानां सप्तग्रहाणां द्वादश राशयो विभज्या इति सूचितम्। एवं कृते षण्णवतिभागैर्भमण्डलोऽपि विभक्तो भवति। ग्रहाणां च षण्णवतिविधफलप्रदत्वं च स्फुटीकृतं भवति। केन क्रमेण राशयो विभज्या इति चेदुच्यते। स्वादिति निर्देशात् स्व इत्यक्षरसंख्यया चतुर्थसूचकात् कक्ष्याक्रमेणैव तस्य चतुर्थत्वात् राशयः कक्ष्याक्रमेण ग्रहाणां लग्नस्य च विभज्या इति लब्धम्। कक्ष्याक्रमस्य भगणभोगकालानुसारित्वाल्लग्नस्य शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राणां परत एव स्थितिर्भवति। एवं सर्वेषु राशिषु अष्टधा विभक्तेषु प्रथमभागः शनेः, द्वितीयः गुरोः, तृतीयः कुजस्य, चतुर्थः

सूर्यस्य, पञ्चमः शुक्रस्य, षष्ठो बुधस्य, सप्तमश्चन्द्रस्य, अष्टमो लग्नस्य च कल्प्याः । तत्र सूर्यश्चारगत्या स्वाश्रितराशेः प्रथमायबन्ध्वादिराशिषु स्वकीयभागचारकाले शुभप्रदो भवति । इतरेषु स्वकीयभागचारकाले-ऽशुभदो भवति । तथा सूर्यो वक्राश्रितराशेरारभ्य उक्तराशिषु वक्रभाग-चारकाले शुभदो भवति । अनुक्तराशिषु वक्रभागचारकालेऽशुभं ददाति । एवं सर्वेष्वपि राशिषु सर्वेषां ग्रहाणां चारगत्या फलं वाच्यम । तथाकृते एकैको ग्रहश्चारगत्या भमण्डलस्थषण्णवतिस्थानेषु तत्तदनुगुणफलप्रदो भवति । तत्र राश्यष्टमांशः सूर्येण पादोनचतुर्भिर्दिवसैर्भुज्यते । चन्द्रेण तु किञ्चिदूनसप्तदशनाडीभिर्भुज्यते । अतस्तयोश्चारवशात् पटुबुद्धिभिर्युक्त्या वितर्क्याऽतिसूक्ष्मफलान्यपि तत्तत्काले निर्देष्टुं शक्यानि। यथा दशायामन्तर्दशा वर्तते तथात्रापि राशिषु कक्ष्याक्रमेण भागाः कृताः । यथा दशासु आदित्यः पाचयिता चन्द्रमाः पोषयिता भवति तथात्रापि तयोश्चारवशा-देव फलानुभवकाले यथासूक्ष्मं वक्तुं शक्यम् । उक्तश्चाष्टकवर्गप्रस्तारो जातकपारिजाते—

"आलिख्य चक्रं नव पूर्वरेखाः
 याम्योत्तरस्था दश सत्रिरेखाः ।
प्रस्तारकं षण्णवतिप्रकोष्ठे
 पङ्क्त्यष्टकं चाष्टकवर्गजं स्यात् ॥
होराशशीबोधनशुक्रसूर्य-
 भौमामरेन्द्रार्चितभानुपुत्राः ।
याम्यादिपङ्क्त्यष्टकराशिनाथाः
 क्रमेण तद्बिन्दुफलप्रदाः स्युः ॥" इति ।

पूर्वादिपश्चिमान्तं नव रेखा विलिख्य तदुपरि याम्याद्युत्तरान्तं त्रयोदश रेखाश्च विलिखेत् । एवं कृते षण्णवतिकोष्ठाः लभ्यन्ते । तत्र

याम्याद्युत्तरान्तं लग्नचन्द्रबुधशुक्रसूर्यकुजगुरुशनयः कक्ष्याधिपा भवन्ति। पूर्वादिपश्चिमान्तं द्वादश खण्डाः राशयो भवन्ति। उक्तस्थानात्मकराशिषु तत्तत्कक्ष्यासु बिन्दून् न्यस्य इतरेषु रेखान्न्यसेत्। एवं कृते न कोऽपि कोष्ठः शून्यं भवति। तत्र बिन्दोः शुभफलं रेखायाः अशुभफलं च भवतः।

एकैकस्य राशेः अष्टकक्ष्यावत्तया बिन्दवः रेखा मिश्रा वा अष्टौ भवन्ति। तत्र बिन्दूनां शुभफलदत्वाद् रेखायामशुभफलदत्वाच्च बिन्दुरेखयोः साम्ये निष्फलत्वं, बिन्द्वाधिक्ये शुभफलत्वं, रेखाधिक्ये अशुभफलत्वं च वाच्यम्। एवं चतुर्भिर्बिन्दुभिः शुभफलं वा अशुभफलं वा न वाच्यम्। अधिकबिन्दुभिः शुभफलं न्यूनैरशुभफलं च वाच्यमित्यपि सिद्धम्। स्पष्टमुच्यते सारावलिकृता—

"पूर्णैर्बिन्दुभिरष्टभिः पदगतैर्हीनोऽपि भूपो भवेद्
एकैकोनतया क्रमात्फलविधिः कल्प्याऽष्टवर्गेऽखिले।
राज्यश्रीरमणीसुखप्रियसुहृत्प्राप्तिर्विपच्छून्यता
वित्तानामपि हानिराधिकृशता शून्यक्रमे संक्षयः॥" इति।

वृत्तं शार्दूलविक्रीडितम्। अनेनाष्टकवर्गबिन्दूनां ग्रहगुणकारैः राशिगुणकारैश्च संस्करणं कार्यमिति सूचितम्। एष क्रमः पूर्वमेव दर्शितः। अतोऽत्र विस्तरतो न लिख्यते॥ १॥

अथ चन्द्राष्टकवर्गमाह—

**लग्नात्षट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी**
**स्वात्सास्तादिषु साष्टसप्तसु रवेः षट्त्र्यायधीस्थो यमात्।**
**धीत्र्यायाष्टमकण्टकेषु च बुधाज्जीवाद्धनायाष्टगः**
**केन्द्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानङ्गगः॥ २॥**

इति। शशी लग्नात् षट्त्रिदशायगः चतुर्षु उपचयस्थानेषु शुभः। शिष्टेषु अष्टसु अपचयस्थानेषु अशुभः। आरात् कुजात् सधनधीधर्मेषु धनधीधर्मेषु उपचयेषु च सप्तसु स्थानेषु शुभः। शिष्टपञ्चसु स्थानेषु अशुभः। स्वात् स्वाश्रितराशेः सास्तादिषु प्रथमसप्तमयोः उपचयेषु च षट्सु स्थानेषु शुभः। शिष्टेषु षट्सु अशुभः। रवेः सूर्यात् साष्टसप्तसु अष्टमसप्तमयोः उपचयेषु च षट्सु स्थानेषु शुभः। शिष्टेषु षट्सु अशुभः। यमात् शनेः षट्त्र्यायधीस्थः षष्ठतृतीयैकादशपञ्चमेषु चतुर्षु स्थानेषु शुभः। इतरेषु अष्टसु अशुभः। बुधाद् धीत्र्यायाष्टमकण्टकेषु पञ्चमतृतीयलाभाष्टमकेन्द्रेषु अष्टसु स्थानेषु शुभः। शिष्टचतुःस्थानेष्वशुभः। जीवाद् गुरोः धनायाष्टगः केन्द्रस्थश्च धनलाभाष्टमकेन्द्रेषु सप्तसु स्थानेषु शुभः। शिष्टेषु पञ्चस्वशुभः। सितात्तु शुक्रात् धर्मसुखधीत्र्यायास्पदानङ्गगः। नवमचतुर्थपञ्चमतृतीयैकादशदशम-सप्तमेषु सप्तसु स्थानेषु शुभः। शिष्टेषु पञ्चस्वशुभः। एवं चन्द्रः एकोन-पञ्चाशत्स्थानेषु शुभः सप्तचत्वारिंशत्स्थानेष्वशुभः।

वृत्तं शार्दूलविक्रीडितम्। प्रयोजनं पूर्ववत्॥ २॥

अथ कुजाष्टकवर्गमाह—

**वक्रस्तूपचयेष्विनात् सतनयेष्वाद्याधिकेषूदया-**
**च्चन्द्राद्विट्त्रिफलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः।**
**धर्मायाष्टमकेन्द्रगोऽर्कतनयाज्ज्ञात् षट्त्रिधीलाभगः**
**शुक्रात् षड्व्ययलाभमृत्युषु गुरोः कर्मान्त्यलाभादिषु॥ ३॥**

इति। वक्रस्तु इनात् सूर्यात् सतनयेषु उपचयेषु पञ्चमोपचयेषु पञ्चसु स्थानेषु शुभः। सप्तस्वशुभः। उदयात् लग्नात् आद्याधिकेषु उपचयेषु प्रथमे उपचयेषु च पञ्चसु स्थानेषु शुभः। सप्तस्वशुभः। चन्द्रात् द्विट्त्रिफलेषु षष्ठतृतीयैकादशेषु त्रिषु स्थानेषु शुभः। शिष्टेषु नवस्वशुभः। स्वात्

स्वाश्रितात् केन्द्रनिधनप्राप्त्यर्थगः केन्द्रेषु अष्टमलाभधनेषु च सप्तसु स्थानेषु शुभः। इतरेषु पञ्चस्वशुभः। अर्कतनयात् शनेः धर्मायाष्टमकेन्द्रगः नवमलाभाष्टमकेन्द्रेषु सप्तसु स्थानेषु शुभः। अन्येषु पञ्चस्वशुभः। ज्ञात् बुधात् षट्त्रिधीलाभगः षष्ठतृतीयपञ्चमैकादशेषु चतुर्षु शुभः। अष्टास्वशुभः। शुक्रात् षड्व्ययलाभमृत्युषु षष्ठव्ययलाभाष्टमेषु चतुर्षु स्थानेषु शुभः। अन्येष्वष्टस्वशुभः। गुरोः कर्मान्त्यलाभारिषु दशमव्ययलाभषष्ठेषु चतुर्षु स्थानेषु शुभः। अनुक्तेष्वष्टस्वशुभः। एवं कुजः एकोनचत्वारिंशत्सु शुभः। सप्तपञ्चाशत्सु अशुभः।

वृत्तं शार्दूलविक्रीडितम्। प्रयोजनं पूर्ववत्॥ ३ ॥

अथ बुधाष्टकवर्गमाह—

**द्व्याद्यायाष्टतपस्सुखेषु भृगुजात् सत्र्यात्मजेष्विन्दुजः**
**साज्ञास्तेषु यमारयोर्व्ययरिपुप्राप्त्यष्टगो वाक्पतेः।**
**धर्मायारिसुतव्ययेषु सवितुः स्वात् साद्यकर्मत्रिगः**
**षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः॥ ४ ॥**

इति। इन्दुजः बुधः, भृगुजात् शुक्रात्, सत्र्यात्मजेषु द्व्यायाष्टतपस्सुखेषु तृतीयपञ्चमद्वितीयप्रथमलाभाष्टमनवमचतुर्थेषु अष्टसु स्थानेषु शुभः। अनुक्तेषु चतुर्षु अशुभः। यमारयोः शनेः कुजाच्च साज्ञास्तेषु द्व्यायाष्टतपःसुखेषु दशमसप्तमद्वितीयप्रथमलाभाष्टमनवमचतुर्थेषु अष्टसु स्थानेषु शुभः। इतरेषु चतुर्षु अशुभः। वाक्पतेः गुरोः व्ययरिपुप्राप्त्यष्टगः द्वादशषष्ठैकादशाष्टमेषु चतुर्षु स्थानेषु शुभः। अन्येषु चतुर्षु अशुभः। सवितुः सूर्यात् धर्मायारिसुतव्ययेषु नवमलाभषष्ठपञ्चमव्ययेषु पञ्चसु स्थानेषु शुभः। अनुक्तेषु सप्तस्वशुभः। स्वात् स्वाश्रितराशेः साद्यकर्मत्रिगः प्रथमदशमतृतीयेषु धर्मायारिसुतव्ययेषु च अष्टसु स्थानेषु शुभः। शिष्टेषु चतुर्षु अशुभः।

हिमगोः चन्द्रात् षट्स्वायाष्टसुखास्पदेषु षष्ठद्वितीयलाभाष्टमचतुर्थदशमेषु षट्सु स्थानेषु शुभः । अन्येषु षट्सु अशुभः । लग्नात् साद्येषु प्रथमे षट्स्वायाष्टसुखास्पदेषु च सप्तसु स्थानेषु शुभः, अनुक्तेषु पञ्चसु अशुभः । एवं बुधः चतुष्पञ्चाशत्स्थानेषु शुभः । द्विचत्वारिंशत्स्थानेषु अशुभः ।

वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ ४ ॥

अथ गुरोरष्टकवर्गमाह—

**दिक्स्वाद्याष्टमदायबन्धुषु कुजात् स्वात्सत्रिकेष्वङ्गिराः**
**सूर्यात्सत्रितपस्सुधीस्वनवदिग्लाभारिगो भार्गवात् ।**
**जायायार्थनवात्मजेषु हिमगोर्मन्दात् त्रिषड्धीव्यये**
**दिग्धीषट्स्वसुखायपूर्वनवगो ज्ञात्सस्मरश्चोदयात् ॥ ५ ॥**

इति । अङ्गिराः गुरुः कुजात् दिक्स्वाद्याष्टमदायबन्धुषु दशमद्वितीयप्रथमाष्टमसप्तमैकादशचतुर्थेषु सप्तसु स्थानेषु शुभः । अनुक्तेषु पञ्चस्वशुभः । स्वात् स्वाश्रितराशेः सत्रिकेषु तृतीये दिक्स्वाद्याष्टमदायबन्धुषु च अष्टासु स्थानेषु शुभः । अन्येषु चतुर्ष्वशुभः । सूर्यात् सत्रितपस्सु तृतीयनवमयोः दिक्स्वाद्याष्टमदायबन्धुषु च नवसु स्थानेषु शुभः । इतरेषु त्रिष्वशुभः । भार्गवात् शुक्रात् धीस्वनवदिग्लाभारिगः पञ्चमद्वितीयनवमदशमैकादशषष्ठेषु षट्सु स्थानेषु शुभः । अनुक्तेषु षट्स्वशुभः । हिमगोः चन्द्रात् जायायार्थनवात्मजेषु सप्तमैकादशद्वितीयनवमपञ्चमेषु पञ्चसु स्थानेषु शुभः । अन्येषु सप्तस्वशुभः । मन्दात् शनेः त्रिषड्धीव्यये तृतीयषष्ठपञ्चमद्वादशेषु चतुर्षु स्थानेषु शुभः । शिष्टेषु अष्टस्वशुभः । ज्ञाद् बुधाद् दिग्धीषट्स्वसुखायपूर्वनवगो दशमपञ्चमषष्ठद्वितीयचतुर्थैकादशप्रथमनवमेषु अष्टसु स्थानेषु शुभः । अन्येषु चतुर्षु अशुभः । उदयात् सस्मरश्च सप्तमे दिग्धीषट्स्वसुखाय-

पूर्वनवमेषु च नवसु स्थानेषु शुभः । इतरेषु त्रिष्वशुभः । एवं गुरुः षट्पञ्चाशत्स्थानेषु शुभः । चत्वारिंशत्स्थानेष्वशुभः ।

वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ ५ ॥

अथ शुक्राष्टकवर्गमाह—

**लग्नादासुतलाभरन्ध्रनवगः सान्त्यः शशाङ्कात्सितः**
**स्वात्साज्ञेषु सुखत्रिधीनवदशच्छिद्राप्तिगः सूर्यजात् ।**
**रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरोः**
**ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषड्बन्ध्वागमान्त्ये कुजात् ॥ ६ ॥**

इति । सितः शुक्रः लग्नात् आसुतलाभरन्ध्रनवगः प्रथमद्वितीयतृतीयचतुर्थपञ्चमैकादशाष्टमनवमेषु 'अष्टसु स्थानेषु शुभः । अनुक्तचतुर्ष्वशुभः । शशाङ्कात् चन्द्रात् सान्त्यः द्वादशे आसुतलाभरन्ध्रनवमेषु च नवसु स्थानेषु शुभः । अन्येषु त्रिष्वशुभः । स्वात् स्वाश्रितराशितः साज्ञेषु दशमे आसुतलाभरन्ध्रनवमेषु च नवसु स्थानेषु शुभः । त्रिषु शिष्टेष्वशुभः । सूर्यजात् शनेः सुखत्रिधीनवदशच्छिद्राप्तिगः चतुर्थतृतीयपञ्चमनवमदशमाष्टमैकादशेषु सप्तसु स्थानेषु शुभः । अनुक्तेषु पञ्चस्वशुभः । रवेः सूर्यात् रन्ध्रायव्ययगः अष्टमैकादशद्वादशेषु त्रिषु स्थानेषु शुभः । इतरेषु नवस्वशुभः । गुरोः नवदशप्राप्त्यष्टधीस्थः नवमदशमैकादशाष्टमपञ्चमेषु पञ्चसु स्थानेषु शुभः । शिष्टेषु सप्तस्वशुभः । ज्ञात् बुधात् धीत्र्यायनवारिगः पञ्चमतृतीयैकादशनवमषष्ठेषु पञ्चसु स्थानेषु शुभः । अन्येषु सप्तस्वशुभः । कुजात् त्रिनवषड्बन्ध्वागमान्त्ये तृतीयनवमषष्ठचतुर्थैकादशद्वादशेषु षट्सु स्थानेषु शुभः । अन्येषु षट्स्वशुभः । एवं शुक्रः द्विपञ्चाशत्स्थानेषु शुभः । चतुश्चत्वारिंशत्स्थानेष्वशुभः । "पुत्रायसान्त्यः कुजात्" इति पाठे चतुर्थस्य स्थाने पञ्चमो वक्तव्यः ।

वृत्तं शार्दूलविक्रीडितम् । प्रयोजनं पूर्ववत् ॥ ६ ॥

अथ शनैश्चराष्टकवर्गमाह—

**मन्दः स्वात्त्रिसुताप्तिशत्रुषु शुभः साज्ञान्त्यगो भूमिजात्**
**केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात् ।**
**धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात्त्रिषड्लाभगः**
**षष्ठान्त्यायगतः सितात्सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः ॥ ७ ॥**

इति । मन्दः शनिः स्वात् स्वाश्रितराशेः त्रिसुताप्तिशत्रुषु तृतीयपञ्चमैकादशषष्ठेषु चतुर्षु स्थानेषु शुभः । अन्येष्वष्टस्वशुभः । भूमिजात् कुजात् साज्ञान्त्यगः दशमद्वादशयोः त्रिसुताप्तिशत्रुषु च षट्सु स्थानेषु शुभः । षट्स्वितरेष्वशुभः । इनात् सूर्यात् केन्द्रायाष्टधनेषु केन्द्रैकादशाष्टमद्वितीयेषु सप्तसु स्थानेषु शुभः । अनुक्तेषु पञ्चस्वशुभः । उदयात् लग्नाद् उपचयेषु आद्ये सुखे च उपचयप्रथमचतुर्थेषु षट्सु स्थानेषु शुभः । अन्येषु षट्स्वशुभः । बुधात् धर्मायारिदशान्त्यमृत्युषु नवमैकादशषष्ठदशमद्वादशाष्टमेषु षट्सु स्थानेषु शुभः । षट्स्वितरेष्वशुभः । चन्द्रात् त्रिषड्लाभगः तृतीयषष्ठैकादशेषु त्रिषु स्थानेषु शुभः । नवस्वन्येष्वशुभः । सितात् शुक्रात् षष्ठान्त्यायगतः षष्ठद्वादशैकादशेषु त्रिषु स्थानेषु शुभः । अनुक्तेषु नवस्वशुभः । सुरगुरोः गुरोः प्राप्त्यन्त्यधीशत्रुगः एकादशद्वादशपञ्चमषष्ठेषु चतुर्षु स्थानेषु शुभः । अष्टस्वन्येष्वशुभः । एवं मन्दः एकोनचत्वारिंशत्स्थानेषु शुभः । सप्तपञ्चाशत्स्वशुभश्च भवति ।

एतेषां ग्रहाणां शुभस्थानसंख्या अशुभस्थानसंख्याश्च—

" देवो धवो दिगो विष्णुः क्षमी रामो धिगः क्रमात् ।
अष्टवर्गोक्तबिन्दूनां संख्याः सूर्यात्समीरिताः ॥
देवः सुम्भः समारम्भा नाभिर्विद्वान् समाक्रमात् ।
अष्टवर्गोक्तरेखाणां संख्याः सूर्यात्समीरिताः ॥ "

इति परिगणिताः ।

सप्तसु श्लोकेषु सूर्याश्वयतियुतशार्दूलविक्रीडितवृत्तं प्रयुञ्जानेनाऽऽचार्येण कश्चिद्विशेषो व्यञ्जितः। सप्तकारकवशाद् द्वादशभावानां पुष्टिः कष्टं वा अष्टकवर्गलब्धबिन्दुवशाद् ग्रहचारवशाच्च चिन्त्यमिति। आचार्येण दिङ्मात्रमिह दर्शितम्। एतत्स्पष्टमुक्तमन्यैः—

"अर्कस्थितस्य नवमो राशिः पितृगृहः स्मृतः।
तद्राशिफलसंख्यैश्च वर्धयेच्छोध्यपिण्डकम्॥
सप्तविंशहृताल्लब्धं नक्षत्रं याति भानुजे।
तस्मिन् काले पितृक्लेशो भविष्यति न संशयः॥
तत्त्रिकोणगते वाऽपि पितृतुल्यस्य वा मृतिः।
संयोगः शोध्यशेषाणां शोध्यपिण्ड इति स्मृतः॥"
"संशोध्य पिण्डं सूर्यस्य रन्ध्रमानेन वर्धयेत्।
द्वादशेन हृताच्छेषराशिं याते दिवाकरे॥
तत्त्रिकोणगते वाऽपि मरणं तत्र निर्दिशेत्।
एवं ग्रहाणां सर्वेषां चिन्तयेन्मतिमान्नरः॥
चन्द्रात्सुखफलैः पिण्डं हृत्वा सारावशेषितम्।
शनौ याते मातृहानिस्त्रिकोणर्क्षगतेऽपि वा॥"
"भौमात्तृतीयराशिस्थफलैर्भ्रातृगुणं भवेत्।
बुधात्सुखफलैर्बन्धुगुणं वा मातुलस्य च॥
गुरुस्थितसुतस्थाने यावतां विद्यते फलम्।
शत्रुनीचगृहं त्यक्त्वा शेषास्तस्यात्मजाः स्मृताः॥
गुरोरष्टकवर्गे तु शोध्यशिष्टफलानि वै।
क्रूरराशिफलं त्यक्त्वा शेषास्तस्यात्मजाः स्मृताः॥
फलाधिकं भृगोर्यत्र तत्र भार्याजनिर्यदि।
तस्यां वंशाभिवृद्धिः स्यादल्पे क्षीणार्थसन्ततिः॥

शोध्य पिण्डं शनेर्लग्नाद्धत्वा रन्ध्रफलैः सुखैः ।
हृत्वावशेषभं याते मन्दे जीवेऽपि वा मृतिः ॥
लग्नादिमन्दान्तफलैक्यसंख्या वर्षे विपत्तिस्तु तथार्कपुत्रात् ।
यावद्विलग्नान्तफलानि तस्मिन्नाशं हि तद्योगसमानवर्षे ॥
अष्टमस्थफलैर्लग्नात् पिण्डं हत्वा सुखैर्भवेत् ।
फलमायुर्विजानीयात्प्राग्वद्वेलां तु कल्पयेत् ॥ ”
इति ॥ ७ ॥

ग्रहाणाम् अष्टकवर्गप्रकारमुक्त्वाऽधुना तत्फलनिर्णये विशेषमाह—

**इति निगदितमिष्टं नेष्टमन्यद्विशेषा-**
**दधिकफलविपाकं जन्मभात्तत्र दद्युः ।**
**उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं**
**त्वपचयगृहनीचारातिगैर्नेष्टसम्पत् ॥ ८ ॥**

इति । इति एवं, सप्तभिः श्लोकैर्निगदितं उक्तस्थानानि, इष्टं इष्टफलदानि । अन्यत् अनुक्तस्थानानि । नेष्टं अनिष्टफलदानि । तत्र स्थिताः जन्मभात् लग्नात् चन्द्रलग्नाद्वा, उपचयगृहमित्रस्वोच्चगाः उपचयस्थस्वक्षेत्रमित्रक्षेत्रस्वोच्चस्थिताः, विशेषात् अधिकफलविपाकं अधिकफलवत्, पुष्टं पूर्णं, इष्टं शुभफलं, दद्युः । अपचयगृहनीचारातिगैः अपचयगृहस्थनीचशत्रुक्षेत्रगतैः ग्रहैः नेष्टसंपत् अनिष्टफलं च विशेषतः वक्तव्यम् । तथा च श्रीपतिः—

“ अष्टवर्गजफलं ग्रहस्य यत् साध्वसाध्वपि च तस्य लग्नतः ।
चन्द्रतोऽप्युपचयस्थितोच्चभस्वत्रिकोणसुहृदालयेषु तत् ॥
पूर्णं शुभं स्यादशुभं च हीनं विपर्यये कष्टफलं हि पुष्टम् ।
अपुष्टमिष्टं पुनरत्र वाच्यं बलाबलं तस्य विचार्य सम्यक् ॥ ”
इति ।

तत्र अष्टकवर्गविषये अधिकफलविपाकं विशेषात् जन्मभात् चन्द्र-लग्नात् दद्युः। एवं गोचरफलकथने चन्द्रलग्नस्य प्राधान्यं व्यञ्जितम्। चन्द्राश्रितराशेर्ग्रहाणां चारवशात् स्थित्या विशेषेण फलं वाच्यमिति भावः। तथा चोक्तम्—

"सर्वेषु लग्नेष्वपि सत्सु चन्द्रलग्नं प्रधानं खलु गोचरेषु।
तस्मात्तदृक्षादधिवर्तमानग्रहेन्द्रचारैः कथयेत्फलानि ॥" इति।

उक्तं च गोचरफलं जातकादेशे—

"सर्वे लाभगृहे स्थितास्त्रिखरिपुष्वर्कोऽसुजार्की त्रिषट्
प्राप्तौ त्र्याद्यखमन्मथारिषु शशी खास्तारिवर्ज्यं भृगुः।
धीधर्मास्तधनेषु वाक्पतिररिस्वाष्टाम्बुखस्थो बुधः
श्रेष्ठो जन्मगृहाद्धि गोचरविधौ विद्धो न चेत्स्याद्ग्रहैः ॥
आयभ्रातृद्विषदुपगतौ स्थानमानादिलाभं
वित्ते वित्तक्षयमथ सुहृत्पुत्रगौ क्लेशभीतिम्।
कामे रोगान्व्यसनमतुलं धर्मगौ सूर्यभौमौ
भौमो भङ्गं दिशति दशमे कर्मसिद्धिं दिनेशः ॥
क्रमेण भोगोदयमर्थहानिं जयं भयं शोकमरातिभङ्गम्।
सुखान्यनिष्टं गदमिष्टसिद्धिं मोदं व्ययं च प्रददाति चन्द्रः ॥
अर्थक्षयं श्रियमरातिभयं धनाप्तिं
भार्यासुतादिकलहं विजयं विरोधम्।
पुत्रार्थलाभमथ विघ्नमशेषसौख्यं
पुष्टिं पराभवभयं च करोति चान्द्रिः ॥
नानादुःखं वित्तसमृद्धिं स्थितिनाशं
बन्धुक्लेशं पुत्रधनाप्तिं रिपुबाधाम्।

भोगान् रोगान् वित्तसुताप्तिं धनहानिं
स्थानप्राप्तिं दुःखभयं यच्छति जीवः ॥
अखिलविषयभोगं वित्तसिद्धिं विभूतिं
सुखसुहृदभिवृद्धिं पुत्रलब्धिं विपत्तिम् ।
युवतिजनितबाधां संपदं स्त्रीसुखाप्तिं
कलहमुदयमाप्तिं दैत्यमन्त्री विधत्ते ॥
नानारोगशुचं सुखार्थविहतिं स्थानार्थभृत्यादिकं
स्त्रीबन्ध्वर्थसुखच्युतिं धनसुखभ्रंशं सपत्नक्षयम् ।
मार्गासक्तिमनल्पदुःखनिचयं धर्मप्रणाशामयान्
दारिद्र्यं धनलाभमर्थविहतिं धत्ते क्रमादर्कजः ॥
द्वादशजन्माष्टमगाः पुंसां दिननाथभौमशनिजीवाः ।
वित्तक्षयं प्रवासं रोगान् जनयन्ति मरणभीतिं वा ॥"

इति ।

छन्दःशास्त्रमहाब्धिपारंगतेनाचार्येणापि बृहत्संहितायां ग्रहगोचराध्याये तत्तन्नामाङ्कितैरतिमनोहरैर्वृत्तैर्दण्डकैश्च ग्रहगोचरफलानि—

"प्रायेण सूत्रेण विना कृतानि प्रकाशरन्ध्राणि चिरन्तनानि ।
रत्नानि शास्त्राणि च योजितानि नवैर्गुणैर्भूषयितुं क्षमाणि ॥
प्रायेण गोचरो व्यवहार्योऽतस्तत्फलानि वक्ष्यामि ।
नानावृत्तैस्तन्नो "मुखचपलत्वं" क्षमन्त्वार्याः ॥"

इत्यारभ्य

"विपुला"मपि बुध्वा छन्दोविचितिं भवति कार्यमेतावत् ।
श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥"

इत्यन्तं सम्यङ्निरूपितानि तदाकृष्टधियापि मया विस्तरभयादत्र नोद्धृतानि । अष्टकवर्गकुण्डलीन्यासप्रकारोऽपि दर्शितः ।

इति निगदितमिष्टं इति एवं इष्टं शुभस्थानानि निगदितम्। 'नि' इत्यक्षरसङ्ख्यासूचितशून्यव्यञ्जकबिन्दुना गदितम्। द्वादशकोष्ठयुक्तकुण्डलिनीं विलिख्य तत्रैकैकस्मिन् शुभस्थाने एकैको बिन्दुर्न्यस्य इत्यर्थः। नेष्टं अशुभस्थानं अन्यत् बिन्दुभिन्ना रेखा भवति। एकैकस्मिन् अनुक्तस्थाने एकैका रेखा न्यस्या इत्यर्थः। एवं कृते सूर्यस्य अष्टचत्वारिंशद्बिन्दवः अष्टचत्वारिंशद्रेखाश्च भवन्ति। तत्र तेषु विशेषाद् वि इत्यक्षरसङ्ख्यासूचितचतुर्बिन्दुशोधनाच्छिष्टाद् अधिकफलविपाकं दद्युः। यद्राशौ पञ्च वा षड् वा सप्त वा अष्टौ वा बिन्दवः सन्ति तस्मिन् राशौ सञ्चरति ग्रहे तद्ग्रहः शुभफलं ददातीत्यर्थः।

इति इष्टं शुभस्थानं गोचरं निगदितम्। इष्टं न इति नेष्टं तत्तद्गोचरस्थानविरुद्धस्वभावो अन्यद् वेधः तमपि विचिन्त्यैव गोचरफलं वाच्यमिति सूचितम्। तथा चोक्तम्—

"न ददाति शुभं किञ्चिद्गोचरे वेधसंयुते।
तस्माद्वेधं विचार्याथ कथ्यतेऽथ शुभाशुभम्॥
नामवेधविधानेनाप्यशुभोऽपि शुभो ग्रहः।
अतस्तान्विविधान्वेधान्विचार्याथ वदेत्फलम्॥
अज्ञात्वा विविधान्वेधान्यो ग्रहज्ञो फलं वदेत्।
स मृषावचनाभाषी हास्यं याति नरः सदा॥" इति।

उक्ताश्च गोचरवेधाः जातकादेशे—

"व्योम(११, ५) गन्ध(३, ९) नव (१०, ४) स्तोत्र (६, १२)
मर्कगोचरवेधयोः।
सारो (७, २) यम (१, ५) स्तोत्र (६, १२) याजी (११, ८)
नवो (१०, ४) गोधु (३, ९) ग्विधोर्मतः॥

गात्रं (३, १२) श्याम (११, ५) तलं (६, ९) भौमे
मन्दे चापि तथैव च ।
ग्रामा (२, ५) भोगा (४, ३) क्षुधा (६, ९) दीपा (८, १)
नादा (१०, ८) यात्रा (११, १२) बुधस्य तु ॥
रौद्रो (२, १२) व्याजो (११, ८) घनी (९, १०) शम्भुः (५,४)
सालः (७, ३) सुरगुरोस्तथा ।
यदा (१, ८) रथो (२, ७) लिपि (३, १) र्भानु (४, १०)
र्मधु (५, ९) देशा (८, ५) धिया (९, ११) व्रतम् (१२, ६) ॥
यागः (११, ३) शुक्रे तु नव वै गोचरा वेध एव च ।
अर्कार्की सोमसौम्यौ द्वावन्योन्यं नैव विध्यते ॥
वेधाह्वया गोचरगस्य यस्य स्ववेध्यगः कोऽपि खगो यदि स्यात् ।
अगोचरानिष्टफलं सहित्वा शुभप्रदो वामकवेधशक्त्या ॥ इति ।

अत्र 'व्योम' इति पदेन आदित्यस्य शुभगोचरस्थानं 'व्यो' इत्यक्षरसंख्यासूचितं एकादश तस्य वेधस्थानं 'म' इत्यक्षरसंख्यासूचितं पञ्चमम् । एवं सर्वत्रापि द्रष्टव्यम् ।

निगदितमिष्टं नेष्टं अन्यत् इष्टानिष्टं च इति इतीत्यक्षरसंख्यासूचितषष्टिनाड्यात्मकात् जन्मभात् जन्मनक्षत्रवशादाप्तदशायाः उडुदशावशादित्यर्थः । अधिकफलविपाकं विशेषाद्द्युः । वृत्तं च "उदयरविशशाङ्क" इति श्लोकानुकरणार्थं मालिनी । अनेन दशावशाद्गोचरफलं विशेषतश्चिन्त्यम् । परत्वेऽपि दशाफलविरुद्धस्य गोचरफलस्यासिद्धिश्च सूचिता । एवं दशागोचरयोः परस्पराविरोधे एकस्य फलमितरो विशिनष्टि । परस्परविरोधे तु दशाफलस्यैव प्राबल्यम् । गोचरग्रहस्य दशाकालाकाङ्क्षित्वमुक्तमाचार्येण संहितायाम्—

"अपि कालमवेक्ष्य च पात्रं शुभकृद्विदधात्यनुरूपम् ।
न मधौ बहुकं कुडवे च विसृजत्वपि "मेघवितानः" ॥" इति ।

यात्रायां च—

"यस्य गोचरफलप्रमाणता तस्य वेधफलमिष्यते न वा ।
प्रायशो बहुषु संमतं त्विदं स्थूलमार्गफलदो हि गोचरः ॥" इति ।

इति एवम् । निगादितमिष्टं वा नेष्टं वा अन्यद्वा इष्टस्य स्थाने अनिष्टं नेष्टस्य स्थाने इष्टं वा । विशेषादधिकफलविपाकं अतिशुभं अत्यनिष्टं वा फलं ग्रहाः दद्युः । अत्र हेतुः ग्रहाणां अनुग्रहो निग्रहो वा इत्यपि सिद्धम् । अनेन सम्यक् पूजिताः शुभफलान्येव कुर्युरिति निःसन्दिग्धं वाच्यम् । तथा चोक्तं विद्यामाधवेन—

"इत्थं समस्तजगतामशुभे शुभे च
सञ्जायते हि निखिलं ग्रहचारशक्त्या ।
पूजास्तुतिप्रणतिभिर्मुदिता ग्रहास्ते
कुर्वन्त्यनिष्टगतयोऽपि जनस्य लक्ष्मीम् ॥"

इति ।

श्लोकसङ्ख्या अष्टौ । अनेन शार्दूलविक्रीडितवृत्तेन च अष्टमो ग्रहो राहुः तस्यैवापरमूर्तिः केतुश्च शनिवद्राहुः कुजवत्केतुरिति न्यायेन फलं दद्यातामिति सूचितम् । अष्टसङ्ख्यया राशिः कक्ष्याक्रमेण अष्टधा विभज्य इत्यपि व्यञ्जितम् ॥ ८ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
अष्टकवर्गो नाम नवमोऽध्यायः ॥

श्रीः

## कर्माजीवाध्यायः ॥ १० ॥

यद्रूपमालोक्य हि चित्तजन्मा तद्रूपभिन्नं विकृतं विचार्य ।
तद्रूपवन्तं विदधे स्वकेतुं तद्रूपमीडे मधुकैटभघ्नम् ॥

धर्मार्थकामरूपत्रिवर्गसेविनां जनानां "सुखस्य मूलं धर्मः । धर्मस्य मूलमर्थः", इति चाणक्यनीतिसूत्रोक्तप्रकारेण धर्मकामयोरपि मूलस्यार्थार्जनस्य प्राधान्येन अर्थप्राप्तिप्रकारानाह—

**अर्थाप्तिः पितृजननीसपत्नमित्र-**
**भ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः ।**
**होरेन्द्वोर्दशमगतैर्विकल्पनीया**
**भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥ १ ॥**

इति । होरेन्द्वोः लग्नात् चन्द्राच्च दशमगतैः दिवाकराद्यैः ग्रहैः अर्थाप्तिः पितृजननीसपत्नमित्रभ्रातृस्त्रीभृतकजनाद् यथाक्रमं विकल्पनीया। लग्नाच्चन्द्राच्च दशमे सूर्ये अर्थाप्तिः पितृतो भवति । पितृधनं लभत इत्यर्थः । लग्नाद्दशमे चन्द्रे जनन्याः धनं लभते । चन्द्रस्य चन्द्राद्दशमस्थित्यसंभवात् चन्द्रात् कर्मभावस्य चन्द्रस्य वर्गस्य सम्बन्धे मातृतो वृत्तिः धनलब्धिर्वाच्या । एवमितरैरपि चिन्त्यम् । तथा च सारावल्याम्—

"यो बलयुक्तो वर्गस्तदधिपतेर्वा दिशेद्वृत्तिम् ।" इति ।

लग्नाच्चन्द्राच्च दशमे कुजे अर्थाप्तिः सपत्नतो वक्तव्यम्। अत्र सपत्नशब्दो न केवलं शत्रुपरः। कुजस्य पितृपक्षीयत्वं पूर्वमेव व्यञ्जितमाचार्येण। अतः सपत्नशब्देन सहजरिपवो ज्ञातयो विवक्षिताः। "ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्" इति हि भर्तृहरिः। "न ज्ञातिसदृशो रिपुः" इति लोकोक्तिश्च दृश्यते। श्रीमद्रामायणे च—

> "विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः।
> विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम्॥" इति।

एवं कुजस्य लग्नेन्द्वोर्दशमस्थित्या ज्ञातिभ्योऽर्थाप्तिं कथयेत्। जननीसपत्न इति सपत्नीमातुर्वेति मन्यामहे। लग्नेन्द्वोर्दशमे बुधे धनप्राप्तिः मित्रात्। मातृपक्षीयत्वाद् मातुलः सहजमित्राणि मातुलेयाश्च मित्रशब्देन गृह्यन्ते। दशमस्थे गुरौ भ्रातृभ्यो धनं लभते। अनेन गुरोरपि भ्रातृकारकत्वं व्यञ्जितम्। तत्र गुरुः बृहस्पतित्वाज्ज्येष्ठो भ्राता। कुजः कनीयानिति विवेकः। दशमस्थे शुक्रे स्त्रीभ्यो धनं लभते। भार्याभगिनीपितृमातृसहोदर्यादिभ्यो धनाप्तिर्वाच्या। शुक्रस्य योगदृष्ट्यादिवशादत्र विवेकः कर्तव्यः। दशमस्थे शनौ भृतकजनेभ्यो भृत्येभ्यो दासेभ्यो वा धनस्य प्राप्तिर्भवति।

एवं परेभ्यो लभ्यस्यार्थस्य प्राप्तिं लक्षयित्वा स्वकर्मणा लभ्यधनप्राप्तिहेतुभूतवृत्तिं लक्षयति। भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या भं लग्नम्, इन्दुः चन्द्रः, अर्कः सूर्यः, एतेषामास्पदं भेन्द्वर्कास्पदं, तस्य पत्युः अंशनाथवृत्त्या नवांशनाथस्योक्तवृत्त्या अर्थाप्तिः विकल्पनीया। वृत्त्या इति एकवचनेन भेन्द्वर्काणां मध्ये यो बलवान् तस्माद्दशमनाथाक्रान्तनवांशराशीशवृत्त्या अर्थाप्तिर्भवतीति वाच्यम्। तथा च जातकपारिजाते—

> "अर्थाप्तिं कथयेद्विलग्नशशिनो मध्ये बलीयस्ततः
> कर्मेशस्थनवांशराशिपवशाद्वृत्तिं जगुस्तद्विदः।"

इति । श्लोके बलग्रहणाभावात् पुरुषस्य बहुप्रकारधनागमस्य दर्शनाद् भेन्द्वर्कास्पदानां सर्वेषामपि कर्मगनवांशनाथवृत्तिर्वाच्या । तद्वल्लग्नेन्द्वोर्द्वयोरपि दशमस्थैरर्थाप्तिश्च वाच्या इति पक्षे तु

" उदयादिन्दुनो वाऽपि ये ग्रहा दशमस्थिताः ।
ते सर्वेऽर्थप्रदा ज्ञेयाः स्वदशासु यथोदिताः ॥
लग्नार्करात्रिनाथेभ्यो दशमाधिपतिर्ग्रहः ।
यस्मिन्नवांशे तत्काले वर्तते तस्य यः पतिः ॥
तद्वृत्या प्रवदेद्वित्तं जातस्य बहवो यदा ।
भवन्ति वित्तदास्तेऽपि स्वदशासु विनिश्चिताः ॥"

इति गार्गिवचनं दृश्यते । गुरूपदेशकालदेशानुसारेण युक्त्या अध्यायेऽस्मिन् विचिन्त्य वाच्यम् ।

वृत्तं प्रहर्षिणी । त्रिदशयतियुतम् । अनेन त्रियतित्वं जाङ्गलानूपो-भयानां त्रयाणां व्यञ्जकम् । दश इति दशमभावस्य । एवं दशमभावस्य जाङ्गलत्वादि चालोक्य तत्तत्प्रदेशेषु प्रवृत्तिर्वाच्येति सूचितम् । क्रूरसौम्य-ग्रामारण्यादिद्विपदादिविभागश्चापि चिन्त्य इति तु सिद्धमेव । तथा च सारावल्याम्—

" जाङ्गलमथवानूपं तथोभयं वा गृहं परीक्षेत ।
ग्राम्यमथवारण्यं सौम्यर्क्षं वा पापभवनं वा ॥
द्विपदचतुष्पदरूपं सरीसृपं वा तथोभयं चैव ।
यद्रूपं तद्भवनं तादृशकार्यस्वभावं च ॥
प्रवदेत्तत्समदेशे कर्मप्राप्तिं नरस्य तत्सदृशीम् ।
तस्माद्दशमं भवनं प्रसवे बुध्येत यत्नेन ॥" इति ।

आद्यक्षरत्रये षण्मात्राणामपि सत्त्वात् वृत्तस्य प्रहर्षिणीत्वात् तृतीय-

षष्ठस्थपापा अपि प्रहर्षं ददति । तृतीयषष्ठस्थपापाः शुभदा इति भावः । तथा च सारावल्याम्—

"पापास्तृतीयषष्ठे होरेन्दुस्थानतो नृणामिष्टाः ।"

इति ॥ १ ॥

अथ मेन्द्वर्कास्पदपतिगांशनाथवशाद्वृत्तिमाह—

**अर्कांशे तृणकनकोर्णभेषजाद्यै-**
**श्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च ।**
**धात्वग्निप्रहरणसाहसैः कुजांशे**
**सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ॥ २ ॥**

इति । अर्कांशे मेन्द्वर्कास्पदपतौ अर्कांशे तृणकनकोर्णभेषजाद्यैः । तृणं होमाद्युपयुक्तम् । कनकं स्वर्णम् । ऊर्णं कम्बलम् । भेषजं औषधानि । एतेषां क्रयविक्रयेण तत्तदनुगुणवृत्त्या वा अर्थाप्तिर्भवति । चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च कर्षकवृत्या मत्स्यशङ्खादिजलजानां क्रयविक्रयेण स्त्रीनिमित्तेन वा अर्थप्राप्तिः । अत्र स्त्रीनिमित्तेन अर्थप्राप्तिः भर्तृत्वेन स्त्रीधनप्राप्तिर्वा सेवकत्ववृत्या वा भवति । कुजांशे धात्वग्निप्रहरणसाहसैः कांस्यरजतादिधान्यधातूनां मृत्पाषाणादिधान्यधातूनां च क्रयविक्रयेण । अग्निना अत्राग्निः धमनोपयुक्ताग्निपरः । अतः धमनकर्मणा इत्यर्थः । प्रहरणानामायुधानां निर्माणक्रयविक्रयादिभिः । साहसैः सहसा कृतं साहसिकम् । हिताहितत्वपरामर्शं विना कृतं अनुपयुक्तं कर्म । एतेन च अर्थाप्तिः । सौम्यांशे बुधांशे लिपिगणितादिकाव्यशिल्पैः । पुस्तकलेखनादि लिपिकर्म । गणितं लौकिकगणितम् । आदिशब्देन गणितशास्त्रान्तर्गतानि सर्वाण्यपि ग्राह्याणि । काव्यं कवित्ववृत्तिः । शिल्पानि चित्रलेखबिम्बनिर्माणादि । एतैर्निमित्तैरर्थाप्तिर्भवति ।

वृत्तं प्रहर्षिणी । प्रयोजनं पूर्ववत् ॥ २ ॥

अथ गुरुशुक्रांशवशाद्वृत्तिमाह—

**जीवस्य द्विजविबुधागमादिधर्मैः**
**शुक्रांशे मणिरजतादिगोमहिष्यैः ।**
**सौरांशे श्रमवधभारनीचशिल्पैः**
**कर्मेशाध्युषितसमानकर्मसिद्धिः ॥ ३ ॥**

इति । जीवस्य गुरोः अंशे द्विजविबुधागमादिधर्मैः । द्विजधर्मैः अध्ययनाध्यापनदानार्त्विज्यादिभिः,

"यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥"

इति मनुवचनेन,

"यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥"

इति कात्यायनवचनेन च द्विजकर्मत्वात् प्राड्विवाकवृत्या वा । विबुधाः देवाः तन्निमित्तैः जपार्चनादिभिः । आगमाः शैववैष्णवाद्यागमाः मीमांसादिशास्त्राणि । आदिशब्देन ब्रह्मस्वदेवस्वाधिकारादयो गृह्यन्ते । एतैः अर्थाप्तिर्वाच्या । शुक्रांशे मणिरजतादिगोमहिष्यैः । मणयः रत्नानि । रजतं रूप्यम् । आदिशब्देन सीसादीनां ग्रहणम् । महिष्यं महिषसंबन्धि कर्षकोपयुक्तशकटादीनि । एतैरर्थाप्तिः । सौरांशे शन्यंशे श्रमवधभारशिल्पैः । श्रमः अध्वगमनादि । वधः दासवृत्तिः । यथा यजमाननिर्दिष्टकर्मकरणमान्द्यादौ तत्प्रयुक्तकशाभिघातादिशिक्षा वधतुल्या भवति । अथवा वधशिक्षा निर्वाहकवृत्तिः । भारः भारवाहिवृत्तिः । नीचशिल्पैः कुत्सितशिल्पैः एतैः अर्थाप्तिर्भवति । कर्मेशाध्युषितसमानकर्मसिद्धिः कर्माधिपाश्रितनवांशराशिसमानकर्मणः सिद्धिर्भवति । अंशकपदाभावात् कर्मेशाध्युषितराशिसमानाऽपि कर्मसिद्धिर्भवतीति व्यञ्जितम् । तथा च सारावल्याम्—

"होराशशिनोर्बलवान्यस्तस्य कर्मभेन वा कथयेत् ॥" इति ।
पूर्वाध्यायस्थस्य,

"उपचयगृहमित्रस्वोच्चगाः पृष्टमिष्ट-
न्त्वपचयगृहनीचारातिगैर्नेष्टसम्पत् ।"

इत्यस्यातः कर्माजीवाध्यायस्य निवेशनात् तत्तद्ग्रहोक्तकर्माणि तत्तद्ग्रहस्य चारवशाच्छुभस्थानस्थितिसम्भवे कार्याणीति व्यञ्जितम् । स्पष्टमुक्तमाचार्येण संहितायाम्—

"प्रारब्धमसुस्थितैर्ग्रहैः कर्मात्मविवृद्धये बुधैः ।
विनिहन्ति तदेव कर्म तान् "वैतालीय" मिवायथाकृतम् ॥"
"सौस्थित्यमवेक्ष्य यो ग्रहेभ्यः काले प्रक्रमणं करोति राजा ।
अणुनापि स पौरुषेण वृत्त "स्यौपच्छन्दसिकस्य" याति पारम् ॥"

दण्डकम्—

"उपचयभवनोपयातस्य भानोर्दिने कारयेद्धेमताम्राश्वकाष्ठास्थिचर्मौर्णिकादिद्रुमत्वङ्नखव्यालचोरायुधीयाटविक्रूरराजोपसेवाभिषेकौषधक्षौमपण्यादि - गोपालकान्तारवैद्याश्मकूटावदाताभिविख्यातशूराहवश्लाध्ययाज्याग्निकार्याणि सिध्यन्ति लग्नस्थिते वा रवौ । शिशिरकिरणवासरे तस्य वात्युद्गमे केन्द्रसंस्थेऽथवा भूषणं शङ्खमुक्ताब्जरूप्याम्बुयज्ञेक्षुभोज्याङ्गनाक्षीरसुस्निग्धवृक्षक्षुपारूपधान्यद्रवद्रव्यविप्राश्वगीतक्रियाशृङ्गिकृष्याद्सेनाधिपाक्रन्दभूपालसौभाग्यनक्तञ्चरश्लैष्मिकद्रव्यमातङ्गपुष्पाम्बरारम्भसिद्धिर्भवेत् । क्षितितनयदिने प्रसिध्यन्ति धात्वाकरादीनि सर्वाणि कार्याणि चामीकराग्निप्रवालायुधक्रौर्यचौर्याभिघाताटवीदुर्गसेनाधिकारास्तथा रक्तपुष्पद्रुमारक्तमन्यच्च तिक्तम् । कटुद्रव्यकूटा हि पाशार्जितस्वाः कुमारा भिषक्शाक्यभिक्षुक्षपावृत्तिशाठ्यानि सिध्यन्ति दम्भास्तथा । हरितमणिमहीसुगन्धानि वस्त्राणि साधारणं नाटकं

शास्त्रविज्ञानकाव्यानि सर्वाः कला युक्तयो यन्त्रधातुक्रियावादनैपुण्यपुण्यप्रतायोगदूतास्तथायुष्यमायानृतस्नानह्रस्वानि दीर्घाणि मध्यानि च छन्दन "श्चण्डवृष्टि" प्रपातानुकारीणि कार्याणि सिध्यन्ति सौम्यस्य लग्नेह्नि वा ।

सुरगुरुदिवसे कनकं रजतं तुरगाः करिणो वृषभा भिषगोषधयः द्विजपितृसुरकार्यपुरःस्थितधर्मनिवारणचामरभूषणभूपतयः । विबुधभवनधर्मसमाश्रयमङ्गलशास्त्रमनोज्ञबलप्रदसत्यगिरः प्रतह्वनधनानि च सिद्धिकराणि तथा रुचिराणि "वर्णदण्डक" वत् ।

भृगुसुतदिवसे च चित्रवस्त्रवृष्यवेश्यकामिनीविलासहासयौवनोपभोगरम्यभूमयः स्फटिकरजतमन्मथोपचारवाहनेक्षुशारदप्रकारगोवणिक्कृषीवलौषधाम्बुजानि च सवित्रसुतदिने च कारयेन्महिष्यजोष्ट्रकृष्णलोहदासवृद्धनीचकर्मपक्षिचोरपाशिकान् च्युतविनयविशीर्णभाण्डहस्त्यपेक्षविघ्नकारणानि चान्यथा न साधयेत् "समुद्र" गोप्यपाङ्कणम् ।

"विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्यमेतावत् ।
श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥"

इति ॥ ३ ॥

अथ मेन्द्वर्कास्पदपतिगांशनाथवशात्फलमुक्त्वाऽधुना मेन्द्वर्कास्पदपतिगांशनाथस्थितिवशाद्विशेषमाह—

**मित्रारिस्वगृहगतैर्ग्रहैस्ततोऽर्था-**
**स्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।**
**आयस्थैरुदयधनाश्रितैश्च सौम्यैः**
**सञ्चिन्त्यं बलसहितैरनेकधा स्वम् ॥ ४ ॥**

इति । मित्रारिस्वगृहगतैः मित्रक्षेत्रं वा शत्रुक्षेत्रं वा स्वक्षेत्रं वा गतैः ग्रहैः कर्माजीवकारकग्रहैः ततः मित्रगृहाद्वा शत्रुगृहाद्वा स्वगृहाद्वा अर्थाः

लभ्यन्ते । कर्माजीवकारकगृहे मित्रक्षेत्रे मित्रगृहादर्थाः, शत्रुक्षेत्रे शत्रुगृहादर्थाः, स्वगृहे स्वगृहादर्थाः लभ्यन्ते ।

भास्करे सूर्ये तुङ्गस्थे मेषराशिमाश्रिते बलिनि वीर्ययुते च कर्माजीवकारकग्रहे चेति सिद्धम् । तदा स्ववीर्याद् अर्थाः लभ्यन्ते । स्वार्जितधनवान् भवतीत्यर्थः । सौम्यैः शुभग्रहैः आयस्थैः लाभगतैः अथवा उदयधनाश्रितैः लग्नधनमाश्रितैः बलसहितैः वीर्यवद्भिस्तैः स्वं धनं अनेकधा बहुप्रकारेण चिन्त्यम् । सर्वे एव हि तस्य उद्यमाः फलवन्तो भवन्तीति भावः । तथा चोक्तं गार्गिणा—

"धनदा जन्मसमये मित्रारिस्वगृहोपगाः ।
यस्य तस्य धनं दद्युर्मित्रारिस्वगृहोद्भवम् ॥
धनदो भास्करो यस्य तुङ्गे बलसमन्वितः ।
भवेज्जन्मनि तस्य स्याद्वित्तमात्मोद्यमार्जितम् ॥
लाभार्थलग्नगैः सौम्यैर्येन येनैव कर्मणा ।
धनार्जनं प्रार्थयते तेन यत्नात्समश्नुते ॥" इति ।

वृत्तं प्रहर्षिणी । प्रयोजनं पूर्ववत् । अस्मिन्नध्याये प्रहर्षिणीवृत्तं प्रयुञ्जानेनाचार्येणाऽर्थस्य प्रहर्षिणीत्वम्, अथवा सुखप्रदत्वं सूचितम् ।

तथा चाऽऽचार्यचाणक्येन नीतिशास्त्रे उक्तम्—

"सा श्रीर्वोऽव्यात् । सुखस्य मूलं धर्मः । धर्मस्य मूलमर्थः ॥" इति ।

अत्र श्लोकसङ्ख्या चत्वारि । वृत्तं च त्रिदशयतियुता प्रहर्षिणी । प्रतिपादितविषयश्च दशमभावः । अतो वृत्तेर्गुणागुणं विक्रमभावस्य सुखभावस्य च बलाबलवशाच्चापि चिन्तयेदिति सूचितम् ॥ ४ ॥

इति श्रीवराहमिहिरहोराव्याख्यायां अपूर्वार्थप्रदर्शिकायां
कर्माजीवो नाम दशमोऽध्यायः ।

---

# मूलस्थश्लोकार्धानुक्रमणी

व



श



स

# व्याख्यानोदाहृतग्रन्थग्रन्थकर्तृसूची

## ERRATA

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| ४ | १३ | कर्मब्रह्ममीमांसयौरैक | कर्मब्रह्ममीमांसयोरेक |
| ५ | १६ | षड्विंशति | षड्विंशतिः |
| ६ | ७ | मङ्गलाचारणम् | मङ्गलाचरणम् |
| १७ | १ | कन्याराशि | कन्याराशिः |
| १९ | ८ | ज्ञदयो | ज्ञवादयो |
| ,, | ,, | अतोग्वा | अतो |
| २९ | २२ | एनं | एवं |
| ३४ | ४ | पूर्वरश्मिः | पूर्णरश्मिः |
| ३६ | २२ | चेत्थ | चेत्थं |
| ३७ | २१ | उक्तं | उक्ताः |
| ३८ | १५ | ग्रह्यते | गृह्यते |
| ५३ | ६ | होरां प्रथमां | होरां प्रथमं |
| ७२ | ६ | शब्देनेतदर | शब्देनेतर |
| ७८ | ४ | रन्ध्रः | रन्ध्रं |
| ८१ | १९ | पव | एव |
| ९३ | ३ | तियङ्मुख | तिर्यङ्मुख |
| ९४ | १ | विषयत्वं | विषत्वं |
| ९४ | १७ | कालप्रकाशिकायम् | कालप्रकाशिकायाम् |
| १०९ | १७ | गुलिकभवननादे | गुलिकभवननाथे |
| १२३ | १ | मन्दा हि केतवः | मन्दाहिकेतवः |
| १२७ | ३ | गोचरादि सूचित | गोचरादिसूचित |
| ,, | ५ | एते | योगा एते |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| १३६ | २ | लक्षणाज्जगती | लक्षणात् । जगती |
| ,, | २२ | रज्जुद्विबाहुः | रज्जुर्द्विबाहुः |
| १५२ | २ | पूर्वं | पूर्णं |
| ,, | ४ | दृष्टिवत्त्व | दृष्टिमत्त्व |
| २०१ | ३ | वर्तते । | वर्तते |
| २१२ | १९ | सारूढ | आरूढ |
| २६० | १ | त्रिराशौ | रात्रिराशौ |
| २७५ | १२ | व्ययस्थितौ | व्ययस्थिते |
| ३१४ | १९ | वाऽर्कसुतेन | वार्कसुतेन |
| ३३२ | ४ | स्मारितः | स्मारितम् |
| ३३६ | १ | " तदा हित्वा | तर्हि " हित्वा |
| ,, | १९ | द्वौ नव | द्वे नव |
| ३३८ | १७ | षड्धा | षड्विधा |
| ३३९ | १७ | हार्यम् | हरेत् |
| ३४५ | १९ | विलग्ने | विलग्ने । |
| ३७० | १० | " भवति | भवति |
| ,, | ११ | स्वप्नचिन्ता स्ववीर्यैः " | " स्वप्नचिन्तास्ववीर्यैः " |
| ३८३ | १६ | कार्यहनिश्च | कार्यहानिश्च |
| ४०५ | १९ | पुरुषगृहः | पुरुषग्रहः |
| ४११ | २२ | पित्तश्लोष्म | पित्तश्लेष्म |
| ४३२ | ४ | शून्यं | शून्यो |
| ४३८ | ३ | चिन्त्यमिति । | चिन्त्यमिति |
| ४६० | १० | कठोपनिषत् | तैत्तिरीयोपनिषत् |
| ४६१ | add before | मणित्थः—भोजराजः, ५६ | |